श्रीकृष्णचरितंसमासतोवर्णयति जातइतिद्वाभ्यां जातोनिजेनरूपेणापश्चात्पुरुषोमनुष्याकारःसन् व्रजंगतःव्र
जवासिनांएधितार्थोयेनतेषुदारेषुसुतानांशतान्युत्पाद्य आत्मनिगमंस्वकीयंवेदमार्गं अंतःसमुत्थे
नकलिनानिमित्तेनउरुभरंक्षपयन् दृष्ट्यावभूपचमूर्विधूयविजयेजयमर्जुनेनजितमित्येवंउद्घोष्यकृत्वा

जातोगतःपितृगृहाद्व्रजमेधितार्थोहत्वारिपून्सुतशतानिकृतोरुदारः उत्पाद्यतेषु
पुरुषःक्रतुभिःसमीजे आत्मानमात्मनिगमंप्रथयञ्जनेषु ६६ पृथ्व्याःसवै
गुरुभरंक्षपयन्कुरूणामंतःसमुत्थकलिनायुधिभूपचम्वः दृष्ट्याविधूयविजयेज
यमुद्विघोष्यप्रोच्योद्धवायचपरंसमगात्स्वधाम ६७ इतिश्रीभागवतेमहापुरा
णेपारमहंस्यांसंहितायांनवमस्कंधेयदुवंशानुवर्णनंनामचतुर्विंशतितमोध्यायः २४

परंतत्त्वमुद्धवायोपदिश्यस्वधामसम्यक्सकलेनैवरूपेणाजगामेति ६७ इतिश्रीभागवतभावार्थदीपिकायांनव
मस्कंधेचतुर्विंशतितमोध्यायः २४ नवमित्वक्षणोलेख्यंनवमस्कंधेकुलद्वित्त ब्रह्मतत्परमंवंदेपरमानंदविग्रहं
१ श्रीभागवतभावार्थदीपिकासंप्रकाशिना स्वपारनवमस्कंधोनामस्तुरानामहेश्वरः २॥ रामः

रामः॥

[illegible]मात्रेण स्मारहरेण समर्थस्य [illegible]स्यापि कर्मकरणं यशो विस्तारद्वारा भक्तानुग्रहार्थमित्याह कलाविति द्वाभ्यां दुःखशोकतमो [illegible]नितिनिरसनशीलं व्यतनोत् ५८ यस्मिन्सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवांजलिः पानसाधनं यस्य सः पुरुषः सकृदपि उपस्पृश्य आचमनमात्रेण [illegible] कर्मवासनां धुनुते ५९ तदेवाह।

कलौ जनिष्यमाणानां दुःखशोकतमोनुदं अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ५८ यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् श्रोत्रांजलिरुपस्पृश्य धुनुते कर्मवासनां ५९ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः श्लाघनीयेहितः शश्वत्कुरुसृंजयपांडुभिः ६० स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया नृलोकं रमयामास मूर्त्या सर्वांगरम्यया ६१ यस्याननं मकरकुंडलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासं नित्योत्सवं न ततृपुर्दृशिभिः पिबंत्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ६२ ॥ रामः।

मा३

श्लाघ्यं भोजादिभिः श्लाघनीयमीहितं यस्य ६० सर्वैरंगैरम्ययामूर्त्या च ६१ तत्प्रदर्शनार्थमुखशोभामाह यस्याननं दृशिभिर्नेत्रैः पिबंत्यो नार्यो नराश्च न ततृपुः न तृप्ताः निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिताश्च बभूवुः कथंभूतमाननं मकरकुंडलाभ्यां चारुकर्णौ भ्राजंतौ कपोलौ च तैः सुभगं सविलासो हासो यस्मिन् नित्यमुत्सवो यस्मिन् ६२ ॥ रामायनमः ॥ रामायनमः ॥ ॥

अष्टमस्तुस्वयमेवासीत् ननुकर्मादिनाहेतुनातांश्चाजनित्वोवायमसौहरिः ५० तदेवोपपादयतियदेतित्रिभिः ५३ ईश्वा
स्यमायायानियंतुःपरस्यअसंगस्यद्रष्टुःसाक्षिणःआत्मनःसर्वगतस्य नह्येवंभूतस्यमायां विनाजन्मनःकर्मणोवा
हेतुःसंभवतीत्यर्थः ५४ किंचयस्यमायाचेष्टितंपुंसोजीवस्यानुग्रहः तस्यसर्वजीवानुग्राहकस्यकुतःकर्मादिपारतं
त्र्येणजन्मादिसंभवः अनुग्रहमेवाह हियस्मात्तदेवस्थित्याद्यर्थं इष्यते प्रलयेलीनोपाधेर्जीवस्यधर्माद्यसंभवादु

देवरक्षितयालब्धानवचात्रगदादयः वसुदेवःसुतानष्टावादधेसहदेवया ४९ पुरुविश्रु
तमुख्यान्सु साक्षाद्धर्मोवसूनिव वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत् ५० कीर्तिमंतं।
सुषेणंचभद्रसेनमुदारधीः ऋजुंसम्मर्दनंभद्रंसंकर्षणमहीश्वरं ५१ अष्टमस्तुत
योरासीत्स्वयमेवहरिःकिल सुभद्राचमहाभागातवराजन्पितामही ५२ यदायदाहिध।
र्मस्यक्षयोवृद्धिश्चपाप्मनः तदातुभगवानीशआत्मानंसृजतेहरिः ५३ नह्यस्यजन्मनो।
हेतुःकर्मणोवामहीपते आत्ममायांविनेशस्यपरस्यद्रष्टुरात्मनः ५४ यन्मायाचेष्टितं
पुंसःस्थित्युत्पत्त्यप्ययायहि अनुग्रहस्तन्निवृत्तेरात्मलाभायचेष्यते ५५ अक्षौहिणीनां
पतिभिरसुरैर्नृपलांछनैः भुवआक्रम्यमाणायाअभारायकृतोद्यम ५६ कर्माण्यपरि
मेयानिमनसापिसुरेश्वरैः सहसंकर्षणश्चक्रेभगवान्मधुसूदनः ५७ ॥ रामायनमः

पाधिसृष्ट्यादिनाधर्मादिसंपादनेनानुग्रहः तथाआत्मलाभायमोक्षायचेष्यते नत्वहेतुः तेनैवरूप्यमाणेन रामः॥
तस्यस्थित्यादेर्निवृत्तेः ५५ तस्यचेष्टितंभूमेरनुग्रहइत्याह अक्षौहिणीनामितिद्वाभ्यां अभारायभारपरि
हाराय ५६ सुरेश्वरैरपिमनसाऽपिअपरिमेयानिअवितर्क्याणिसंकर्षणसहितश्चक्रे ५७ रामः॥

आवंत्यौ विंदानुविंदौ ३२ तदेवं वसुदेवस्य भगिनीनां पतीन्पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाह

इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ३३ तं
सात्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती प्रपितामहस्तामुवाह पांडुर्वै सत्यविक्रमः ३४
श्रुतदेवीं तु कारूषो वृद्धशर्मा समग्रहीत् यस्यामभूद्दंतवक्त्र ऋषिशप्तो दितेः सुतः ३५ कैक
योधृष्टकेतुश्च श्रुतकीर्तिमविंदत संतर्दनादयस्तस्यां पंचासन्कैकयाः सुताः ३६ राजा
धिदेव्यामावंत्यौ जयसेनोऽजनिष्ट ह दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत ३७ शि
शुपालः सुतस्तस्याः कथितस्तस्य संभवः देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ३८ कंस
वत्यां देवश्रवसः सुवीर इषुमांस्तथा कंकायामानकाज्जातः सत्यजित्पुरुजित्तथा ३९ सृं
जयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ४०
मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आदधे ४१
सुमित्रार्जुनपालादीन्समीकात्तु सुदामिनी कंकश्च कर्णिकायां वै ऋतधामजयावपि ४२
पौरवी रोहिणी भद्रा मदिरा रोचना इला देवकीप्रमुखाश्चासन्पत्न्य आनकदुंदुभेः ४३ ब
लं गदं सारणं च दुर्मदं विपुलं ध्रुवं वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ४४ सुभ
द्रो भद्रबाहुश्च दुर्मदो भद्र एव च पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ४५ नंदोपनं
दकृतकशूराद्या मदिरात्मजाः कौसल्या केशिनं त्वेकमसूत कुलनंदनं ४६ रोचनायामतो जाता
हस्तहेमांगदादयः इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ४७ विपृष्ठो धृतदेवायामेक आ
नकदुंदुभेः शांतिदेवात्मजा राजन्प्रशमप्रसितादयः ४८ राजन्यकल्पवर्षाद्या उपदेवासुता

देवभागस्येति नवभिः श्लोकार्धैः ३८ वसुदेवस्य पत्नीः पुत्रांश्चाह पौरवीत्येकादशभिः कौसल्यामद्र ४९ ॥॥

द्वितीयस्य भजमानस्य वंशमाह शूरो विदूरथादिति भजमानाच्च विदूरथात् शूर इति पराशरादिवचनात् यद्वाप-
था विदूरथाद्यात्मनोत्पन्नोपि नीलाद्विदूरथात्मजात् २४ देवमीढस्य यः शूरो नाम पुत्रः तस्य देवमीढो हृदीकस्यैव सु-
तः यथाह पराशरः तस्यापि कृतवर्मशतधनुर्देवमीढषाद्याः पुत्रा बभूवुः देवमीढस्य शूरः शूरस्यापि मारिषा-
नाम पत्न्यभवत् तस्यां चासौ दश पुत्रानजनयत् वसुदेवपूर्वानिति आनकाः नेदुः २७ हरेः प्रादुर्भावस्य स्था।

शूरो विदूरथादासीद्भजमानस्तु तत्सुतः शिनिस्तस्मात्स्वयं भोजो हृदीकस्तत्सुतो मतः २४
देवबाहुः शतधनुः कृतवर्मेति तत्सुताः देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् २५
तस्यां स जनयामास दश पुत्रानकल्मषान् वसुदेवं देवभागं देवश्रवसमानकं २६
सृंजयं श्यामकं कंकं शमीकं वत्सकं वृकं देवदुंदुभयो नेदुरानका यस्य जन्मनि २७
वसुदेवं हरेः स्थानं वदंत्यानकदुंदुभिं पृथा च श्रुतदेवी च श्रुतकीर्तिः श्रुतश्रवाः
२८ राजाधिदेवी चैतेषां भगिन्यः पंच कन्यकाः कुंतेः सख्युः पिता शूरो ह्यपुत्रस्य पृ-
थामदात् २९ सापदुर्वाससो विद्यां देवहूतीं प्रतोषितात् तस्या वीर्यपरीक्षार्थमाजुहाव र-
विं शुचिः ३० तदैवोपगतं देवं वीक्ष्य विस्मितमानसा प्रत्ययार्थं प्रयुक्ता मे याहि देव क्ष-
मस्व मे ३१ अमोघं दर्शनं देवि आधत्से त्वयि चात्मजं योनिर्यथा न दुष्येत कर्त्ताहं तेम-

ने २८ पृथायाः कन्यकावस्थायां कर्णोत्पत्तिप्रकारमाह कुंतेरिति पंचभिः कदाचिद्गृहमागतं दुर्वाससं प-
र्यायेरिचर्यादिना तोषयामास ततः सा तस्माद्देवहूतीं देवाह्वानहेतुं विद्यामवाप तदा हे सूर्य एहीति देवमुपगा।
तं वीक्ष्य साऽऽह प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता न तु त्वया किंचित्कार्यमित्यभिसंधिस्था अतो याहीत्येवमुक्तो र-
विरुवाच अमोघं देवदर्शनमिति कन्याहमिति चेत्तत्राह यथा योनिर्न दुष्येत् तथाहं कर्त्ता करिष्यामीति ३२

अतो क्रूरातिरिक्ता न द्वादश अक्रूरसहितां त्रयोदशेत्यर्थः यतिराासंग इति १६ पृथुरेकः विदूरथाद्या अन्ये च बहवः १८ पृथुधानाद्या इति पाठे आदिशब्देन विदूरथो युक्तः तत्र अश्वोऽविदूरथो द्वासीदिति वक्ष्यमाणनिर्देशोपपत्तेः। १९ कुकुरादयश्चत्वारोऽन्धकसुता इति ज्ञेयं यथाश्रीपराशरः कुकुरभजमानशुचिकंबलबर्हिषाख्याः तथा।

आसंगः सारमेयश्च मृदुरो मृदुविदिरिः धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः १६ शत्रुघ्नो गंधमादश्च प्रतिबाहुश्च द्वादश तेषां स्वसा सुचाराख्या द्वावक्रूरसुतावपि १७ देववानुपदेवश्च तथा चित्ररथात्मजाः पृथुर्विदूरथाद्याश्च बहवो बहुभिर्नंदनाः १८ कुकुरो भजमानश्च शुचिः कंबलबर्हिषः कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः १९ कपोतरोमा तस्यानुः सखा यस्य च तुंबुरुः अंधकाद्दुंदुभिस्तस्मादविद्योतः पुनर्वसुः २० तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः २१ देववानुपदेवश्च सुदेवो देववर्धनः तेषां स्वसारः सप्तासन् धृतदेव्यादयो नृप २२ शांतिदेवोपदेवा च श्रीदेवा देवरक्षिता सहदेवा देवकी च वसुदेव उवाह ताः २३ कंसः सुनामा न्यग्रोधः कंकः शंकुः सुहूस्तथा राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः २४ कंसा कंसवती कंका शूरभू राष्ट्रपालिका उग्रसेनदुहितरो वसुदेवानुजस्त्रियः २५ ॥

अंधकस्य पुत्रा इति १९ अनोरंधकः अंधकात् दुंदुभिरित्यपि तद्वचनादेव ज्ञेयं २० धृतदेव्यादिर्यासां शांतिदेव्यादीनां षण्णां ताः सप्तौग्रसेनयः २४ वसुदेवस्यैवानुजा देवभागादयस्तेषां स्त्रियो भार्याः अंधकस्य सुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तः २५ ॥ रामः॥ रामः॥

ततोदशारथाच्छकुनिः पुत्राणांनरादेवमादिर्विशेषोबोद्धव्यः ततः कुरुवशादनुः ५ अनोःपुत्रः पुरुहोत्रः ६ महाभोजश्च
सप्तैवंसप्त मारिषहेआर्य ७ ततदुपदेशभेदेनयदुपंचषष्ट्यादिसंख्याः पुरुषाः अमृतत्वंमोक्षंप्राप्ताः ११ तस्यपु।

कृथस्यकुंतिः पुत्रोभूद्वृष्णिस्तस्याथनिर्वृतिः ततोदशार्हनामाभूत्तस्यव्योमः सुतस्ततः ३
जीमूतोविकृतिस्तस्ययस्यभीमरथः सुतः ततोनवरथः पुत्रोजातोदशरथस्ततः ४ करं।
भिः शकुनेः पुत्रोदेवरातस्तदात्मजः देवक्षत्रस्ततस्तस्यमधुः कुरुवशादनुः ५ पुरुहोत्रस्त्व
नोः पुत्रस्तस्यायुः सात्वतस्ततः भजमानोभजिर्दिव्योवृष्णिर्देवावृधोंधकः ६ सात्वतस्यसुताः
सप्तमहाभोजश्चमारिष भजमानस्यनिम्लोचिः किंकणोधृष्टिरेवच ७ एकस्यामात्मजाः प
त्न्यामन्यस्यांचत्रयः सुताः शताजिच्चसहस्राजिदयुताजिदितिप्रभो ८ बभ्रुर्देवावृधसुतस्त
योः श्लोकौपठंत्यमूः यथैवशृणुमोदूरात्संपश्यामस्तथांतिकात् ९ बभ्रुः श्रेष्ठो।
मनुष्याणांदेवैर्देवावृधः समाः पुरुषाः पंचषष्टिश्चषट्सहस्राणिचाष्टच १० येऽ
मृतत्वमनुप्राप्ताबभ्रोर्देवावृधादपि महाभोजोतिधर्मात्माभोजाआसंस्तदन्वये ११ वृ
ष्णेः सुमित्रः पुत्रोभूद्युधाजिच्चपरंतप शिनिस्तस्यानमित्रश्चनिघ्नोभूदनमित्रतः १२ स।
त्राजितः प्रसेनश्चनिघ्नस्याथासतुः सुतौ अनमित्रसुतोयोन्यः शिनिस्तस्यचसत्यकः १३ यु
युधानः सात्यकिर्वैजयस्यकुणिस्ततः युगंधरोनमित्रस्यवृष्णिः पुत्रोपरस्ततः १४ श्वफल्क
श्चित्ररथश्चगांदिन्यांचश्वफल्कतः अक्रूरप्रमुखाआसन्पुत्राद्वादशविश्रुताः १५

युधाजितः शिनिरनमित्रश्च १२ सात्यकिः सत्यकस्यपुत्रोयुयुधानः सुतस्यकुणिः ततः कुणेर्युगंधर अनमित्र
स्यैवापरः वृष्णिर्नामपुत्रः अक्रूरः प्रमुखोयेषां एतद्गुणसंविज्ञानोबहुव्रीहिः १५ ॥ ॥ ॥

स्य२

राम:॥

भार्याभयादेवैकभार्यस्यैवं ध्यायते ज्यामघस्यापुत्रस्य तद्रूपमेव पुत्रप्रदमभवदिति दर्शयन्नाह ज्यामघस्त्विति ३४ यदिमे सपत्नी स्यात् तर्हि स्नुषेयं युज्येतापि न त्वेतदस्तीत्याह अहं सपत्नी चेति ३५ अतिभयव्याकुलत्वमाह ३६ जनिष्यसीति। भार्याभयप्रकंपमानस्यैवमसर्वांगस्य राज्ञः प्राणसंकटमालोक्यानुकंपितास्तेनैवं बहुकालमाराधिता विश्वेदेवाः पितरश्च तथास्त्वित्यन्वमोदन्त तत्तद्देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तेगौणेन चेति च तरजस्कापि शैब्या

ज्यामघस्त्वप्रजोप्यन्यां भार्यां शैब्यापतिर्भयात् नाविंदच्छत्रुभवनाद्भोज्यां कन्यामहार्षीत् ३४ रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता केयं कुहक मत्स्थानं रथमारोपितेति वै ३५ स्नुषा तवेत्यभिहिते स्मयंती पतिमब्रवीत् अहं वंध्यासपत्नी च स्नुषा मे युज्यते कथं ३६ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते अन्वमोदंत तद्विश्वेदेवाः पितर एव च ३७ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभं स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीं ३८ इति श्रीभागवते महापुराणे नवमस्कंधे यदुवंशानुकथने त्रयोविंशतितमोध्यायः २३ श्रीशुक उवाच तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ तृतीयं रोमपादं च विदर्भकुलनंदनं १ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृपाः २ ॥

गर्भमधात् तस्य च महिमा पराशरादिभिरुक्तः यथोक्तं भार्यावश्यास्तु ये केचिद्भविष्यंत्यथवा मृताः तेषां तु ज्यामघः श्रेष्ठः शैब्यापतिरभून्नृप ३८ इति श्रीनवमस्कंधदीपिकायां त्रयोविंशः २३ चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः वंशानां नामरूपाः प्रोक्ता रामकृष्णोद्भवावधि १ चैद्याद्या यादवाः २ ॥ ॥ ॥

अनष्टमविनाशि तेन तथाविधं स्मरणं यस्य सः अक्षय्यं षड्वसु षडिंद्रियविषयं बुभुजे २५ उर्वरिता और्वतेजसा भार्गवेण संहृतमित्यर्थः २७ तेषां तालजंघानां ज्येष्ठः तस्य मधोः पुत्रशतं वृष्णिज्येष्ठं यस्मिन् यतो मधोर्वृष्णेर्यदोश्च हेतोः २८ चतुर्दश महारत्नानि तत्तज्जातिश्रेष्ठा यस्य सः तानि च मार्कंडेयपुराणे वर्णितानि गजाश्वाजिरथस्त्रीषु नि-

अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् । दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहायशाः ॥ २३ ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः । यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २४ ॥ पंचाशीतिसहस्राणि ह्यव्याहतबलः समाः । अकरोदर्जुनो राज्यं हरिं चैवान्वहं स्मरन् । अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २५ ॥ तस्य पुत्रसहस्रेषु पंचैवोर्वरिता मृधे । जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २६ ॥ जयध्वजात्तालजंघस्तस्य पुत्रशतं त्वभूत् । क्षत्रं यत्तालजंघाख्यमौर्वतेजोपसंहृतं ॥ २७ ॥ तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः । तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं मधोः कुलं ॥ २८ ॥ माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः । यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ २९ ॥ स्वाहितोऽतो रुशेकुर्वै तस्य चित्ररथस्ततः । शशबिंदुर्महायोगी महाभोजो महानभूत् ॥ ३० ॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः । तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥ ३१ ॥ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् । तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ ३२ ॥ धर्मो नामोशना तस्य हयमेधशतस्य याट् । स्य२ तत्सुतो रुचकस्तस्य पंचासन्नात्मजाः शृणु । पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ॥ ३३ ॥

धिमाल्यांबरद्रुमाः शक्तिपाशमणिश्छत्रविमानानि चतुर्दशेति दशानां पत्नीसहस्राणां भार्यासु तस्य प्रत्येकं लक्षं लक्षमित्येवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास पृथुश्रवाः पृथुकीर्तिः पृथुश्रवा इत्याद्याः षट् प्रधानाः श्रेष्ठाः येषां तेषां मध्ये यं चात्मजा आसन् ता अशृणु तानेवाह पुरुजिदिति ३३ ॥ ॥ ॥ शमः ॥

ग्रसदुष्मन्तःस्ववंशंपौरवंवंशे १९ प्रथमस्यसहस्रजितस्यात्मजः २० सोहंजेर्महिष्मान्महिष्मतोभद्रसेनकः तस्यदुर्मदोधन

वृषदर्भःसुवीरश्चमद्रःकैकेयस्तथात्मजाः शिबेश्चत्वारएवासंस्तिति तोक्षनुशाद्रथः ३ ततो
हेमोऽथसुतपाबलिःसुतपसोऽभवत् अंगवंगकलिंगाद्याःसुह्मपुंड्रौड्रसंज्ञिताः ४ जज्ञिरेदीर्घतमसोबलेःक्षे
त्रेमहीक्षितः चक्रुःस्वनाम्नाविषयान्षडिमान्प्राच्यकांश्चते ५ खनपानोऽनतोजज्ञेतस्माद्दिविरथस्ततः
सुतोधर्मरथोयस्यजज्ञेचित्ररथोऽप्रजः ६ रोमपादइतिख्यातस्तस्मैदशरथःसखा शांतांस्वकन्यांप्राय
च्छदृष्यशृंगउवाहतां ७ देवेऽवर्षतियंरामाआनिन्युर्हरिणीसुतं नाट्यसंगीतवादित्रैर्विभ्रमालिंगना
र्हणैः ८ सतुराज्ञोऽनपत्यस्यनिरूप्येष्टिंमरुत्वतः प्रजामदाद्दशरथोयेनलेभेऽप्रजःप्रजाः ९ चतुरंगोरो
मपादात्पृथुलाक्षस्तुतत्सुतः बृहद्रथोबृहत्कर्माबृहद्भानुश्चतत्सुताः १० आद्याद्बृहन्मनास्तस्मा
ज्जयद्रथउदाहृतः विजयस्तस्यसंभूत्यांततोधृतिरजायत ११ ततोधृतव्रतस्तस्यसत्कर्माधिरथस्ततः
योसौगंगातटेक्रीडन्मंजूषांतर्गतंशिशुं १२ कुंत्यापविद्धंकानीनमनपत्योऽकरोत्सुतं वृषसेनःसुतस्त
स्यकर्णस्यजगतीपते १३ द्रुह्योश्चतनयोबभ्रुःसेतुस्तस्यात्मजस्ततः आरब्धस्तस्यगांधारस्तस्यध
र्मस्ततोधृतः १४ धृतस्यदुर्मदस्तस्मात्प्रचेताःप्राचेतसंशतं म्लेच्छाधिपतयोऽभूवन्नुदीचींदिशमाश्रि
ताः १५ तुर्वसोश्चसुतोवह्निर्वह्नेर्भर्गोऽथभानुमान् त्रिभानुस्तत्सुतोऽस्यापिकरंधमउदारधीः १६ म
रुतस्तत्सुतोऽपुत्रःपुत्रंपौरवमन्वभूत् दुष्मंतःसपुनर्भेजेस्ववंशंराज्यकामुकः १७ ययातेर्ज्येष्ठपुत्रस्य
यदोर्वंशंनरर्षभ वर्णयामिमहापुण्यंसर्वपापहरंनृणां १८ यदोर्वंशंनरःश्रुत्वासर्वपापैःप्रमुच्य
ते यत्रावतीर्णोभगवान्परमात्मानराकृतिः १९ यदोःसहस्रजित्क्रोष्टानलोरिपुरितिश्रुताः चत्वारः
सूनवस्तत्रशतजित्प्रथमात्मजः २० महाहयोवेणुहयोहैहयश्चेतितत्सुताः धर्मस्तुहैहयसुतोनेत्रःकुं
तेःपिताततः २१ सोहंजिरभवत्कुंतेर्महिष्मान्भद्रसेनकः दुर्मदोभद्रसेनस्यधनकःकृतवीर्यसूः कृ
ताग्निःकृतवर्माचकृतौजाधनकात्मजाः २२ ॥ कश्चित्तिहोपत्रोकृतवीर्यस्यजनकः कृतवीर्यादयश्च
त्वारोधनकस्यात्मजाइत्यर्थः ॥ ॥ २२ ॥ ॥ ॥

भा०ग०
न० टी०
६२

बृहद्रथस्य जरासंधः तस्य सहदेवः तस्य मार्जारिः यस्मान्मार्जारेः श्रुतश्रवाः ४७ सहस्रसंवत्सरं ये ते भाव्या नृपालाः ॥
ततः परं भाव्यान् द्वादशस्कंधे वक्ष्यति ४८ इति श्रीनवमस्कंधदीपिकायां द्वाविंशोध्यायः २२ त्रयोविंशे त्व

शतानीकाद्दुर्दमनस्तस्यापत्यं वहीनरः दंडपाणिर्निमिस्तस्य क्षेमको भविता नृपः ४३
ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ
४४ अथ मागधराजानो भवितारो वदामि ते भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः
४५ ततो युतायुस्तस्यापि निरमित्रोथ तत्सुतः सुनक्षत्रः सुनक्षत्राद्बृहत्सेनोथ कर्म
जित् ४६ ततः सुतंजयाद्विप्रः शुचिस्तस्य भविष्यति क्षेमोथ सुव्रतस्तस्माद्धर्मसू
त्रः शमस्ततः ४७ द्युमत्सेनोथ सुमतिः सुबलो जनिता ततः सुनीथः सत्यजिद
थ विश्वजिद्यद्रिपुंजयः बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरं ४८ इति श्री
भागवते महापुराणे नवमस्कंधे द्वाविंशोध्यायः २२ श्रीशुक उवाच अनोः स
भानरश्चक्षुः परेक्षुश्च त्रयः सुताः सभानरात्कालनरः सृंजयस्तत्सुतस्ततः १ जनमे
जयस्तस्य पुत्रो महाशालो महामनाः उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥
शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः २ ॥

अनोर्द्रुह्योस्तुर्वसोश्चान्वयक्रमात् यदोश्च वंशो
नुक्रांतो यावज्ज्यामघसंभवः तदेवं ययातेः पुत्राणां पंचमस्य पुरोर्वंशोनुक्रांतः इदानीं चतुर्थस्य वंशमनुक्रा
मति अनोरिति कर्णस्य जगतीपतेरित्यंतेन १ तस्य जनमेजयस्य महाशालः तस्य महामनाः चत्वार उशीनर

राम ॥
६२

तुरंगंस्तंपुरोहितंकृत्वा ३५ भविष्यानाह तस्यपुत्रइतिपाचक्षमाहि याज्ञवल्क्यात्क्रियाज्ञानंचात्मज्ञानंशौनका =
न्प्राप्स्यति अस्त्रज्ञानंचकृपाचार्यादितिद्रष्टव्यं याज्ञवल्क्याद्वेदमधीत्यकृपादस्त्राण्यवाप्येतिवैष्णवोक्तिः क ५

तत्तनयः सुभद्रायामभिमन्युरजायत सर्वातिरथजिद्वीरउत्तरायांततोभवत् ३३ प
रिक्षीणेषुकुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा त्वंचकृष्णानुभावेनसंजीवोमोचितोंतकात्
३४ तवेमेतनयास्तातजनमेजयपूर्वकाः श्रुतसेनोभीमसेनउग्रसेनश्चवीर्यवान्
३५ जनमेजयस्त्वांविदित्वातक्षकान्निधनंगतं सर्पान्वैसर्पयागाग्नौसहोष्यतिरुषान्वि
तः ३६ कावषेयंपुरोधायतुरंतुरगमेधयाट् समंतात्पृथिवींसर्वांजित्वायक्ष्यतिचाध्व
रैः ३७ तस्यपुत्रःशतानीकोयाज्ञवल्क्यात्त्रयींपठन् अस्त्रज्ञानंक्रियाज्ञानंशौनका
त्परमेष्यति ३८ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः असीमकृष्णस्तस्यापिनेमि
चक्रस्तुतत्सुतः ३९ गजाह्वयेहृतेनद्याकौशाम्ब्यांसाधुवत्स्यति उक्तस्ततश्चित्ररथस्त
स्माच्छुचिरथःसुतः ४० तस्माच्चवृष्टिमांस्तस्यसुषेणोथमहीपतिः सुनीथस्तस्यभ
वितानृचक्षुर्यत्सुखीनलः ४१ पारिप्लवःसुतस्तस्मान्मेधावीसुनयात्मजः नृपंजयस्त
तोदूर्वस्तिमिस्तस्माज्जनिष्यति तिमेर्बृहद्रथस्तस्माच्छतानीकःसुदासजः ४२ ॥ ॥

स्त्रा१

किंतु अस्त्रज्ञानंचकृपाचार्यादित्येवपाठः ३८ यद्यस्मात्सुखीनलःपुत्रः ४१ तस्मात्पारिप्लवःसुनयःयस्मात्मजो

वा० ५

नाम्ना तस्मान्नाम्ना चित्राङ्गदेन गंधर्वेण युद्धे हतः यस्यां सत्यवत्यां शंतनुपरिग्रहात्पूर्वमेव वेदगुप्तो येन
यतोऽहं ज्ञातः २१ क्षीभागवतं वाध्यगां २२ स्वयंवराद्भीष्मेण बलादुपानीते २३ भ्रात्रा सत्यवत्या उक्त इति नि
योगधर्ममाह अयं निरपत्यस्त्विदं वराहरुः प्रयुक्तोऽस्त्वनुमतीत्यादिवचनात् २४ दुःशीला नामकन्या।

विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः यस्यां पराशरात्साक्षादवतीर्णो हरेः कला
वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगां २१ हित्वा स्वशिष्यान्पैलादीन्भगवान्बादराय
णः मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ २२ विचित्रवीर्योऽथोवाह काशिराजसुते
बलात् स्वयंवरादुपानीते अंबिकांबालिके उभे २३ तयोरासक्तहृदयो गृहीतो यक्ष्मणा
मृतः क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः २४ धृतराष्ट्रं च पाण्डुं च विदुरं चाप्य
जीजनत् गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप २५ तत्र दुर्योधनो ज्येष्ठो दुःशीला।
चापि कन्यका शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः २६ जाता धर्मानिलेन्द्रेभ्यो युधिष्ठि
रमुखास्त्रयः नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः २७ द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पित
रोऽभवन् युधिष्ठिरात्प्रतिविंध्यः श्रुतसेनो वृकोदरात् २८ अर्जुनाच्छ्रुतकीर्तिस्तु शतानी
कस्तु नाकुलिः सहदेवसुतो राजञ्छ्रुतकर्मा तथापरे २९ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घ
टोत्कचः भीमसेनाद्धिडिंबायां काल्यां सर्वगतस्ततः ३० सहदेवात्सुहोत्रं तु विजयासूत पार्
वती करेणुमत्यां नकुलो नरमित्रं तथार्जुनः ३१ इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनं मणि
पूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ३२ ॥ का च जज्ञे अरत्येम शापान्मैथुने रुद्धस्य नासत्यदस्राभ्यां
२६ पञ्चभ्यो युधिष्ठिरादिभ्यः पञ्च पुत्रा अभवन् २८ तथा परे च भार्यान्तरेषु काली चान्या भीमस्य भार्या तस्यां ततो।
भीमात् सर्वगतो नाम पुत्रो अभवदित्यर्थः उलूप्यां नागकन्यायां मणिपूरपतेः सुतायां पुत्रिका धर्मेण दत्तायां बभ्रु

प्राक् पूर्वजन्मनि महाभिष इति संज्ञा यस्य सः १३ यदा देवो न ववर्ष तदा शन्तनुस्तत्कारणं ब्राह्मणान्पप्रच्छ ब्राह्मणैश्चैवमुक्तः दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वज इति स्मृतेः योऽग्रजे कृभुवमग्रतो भुनक्ति अयं त्वाहशोऽपि परिवेत्तैव भवति अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि १५ ततो ब्रह्मिष्ठैरेवमुक्तः शन्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास राज्ञः प्रजापालनादिः परो धर्मः अतस्त्वं राज्यं स्वीकुर्वि

अभवच्छन्तनू राजा प्राङ्महाभिषसंज्ञितः यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः १३
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः समा द्वादश तद्राज्ये न ववर्ष यदा विभुः १४
शन्तनुर्ब्राह्मणैरुक्तः परिवेत्ता त्वमग्रभुक् राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये १५ ए
वमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्भ्रंशितो गिरा १६
वेदवादातिवादान्वै तदा देवो ववर्ष ह देवापिर्योगमास्थाय कलापग्राममाश्रितः १७
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्त
तः १८ शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् सर्वधर्मविदां श्रेष्ठो महाभाग
वतः कविः १९ वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः शन्तनोर्दाशकन्यायां
जज्ञे चित्राङ्गदः सुतः २० ॥

ति प्रार्थितवान् ततः पूर्वमेव तस्य मन्त्रिणा अश्मसरावसंज्ञेन देवापिः पा।
षंडी कृतः राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाषंडमतावलम्बिभिर्गिरा वेदाद्भ्रंशितः सन् वेदवादस्याति
वादान् निन्दावचनानि सोऽब्रवीत् ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शन्तनोर्दोषाभावात् देवो ववर्षेत्य।
र्थः १७ ततः सोमदत्तात् भूरिर्भूरिश्रवाः शलश्चेति त्रयः १८ रामो जामदग्न्यः दाशकन्यायामिति उपरिचर
स्य वसोर्वीर्येण मत्स्यगर्भादुत्पन्ना कन्या दाशैः कैवर्तैः पालिता अतो दाशकन्येति प्रसिद्धायां सत्यवत्यां २०

स एव योगतंत्रं चकार वार्हदीषवः बृहदिषोर्वंश्यः इमे दीर्घत्वमार्षं २६ सुपार्श्वकृत सुपार्श्वस्य पिता २७ प्राच्यसाम्नां षट् संहिता जगौ विभज्याध्यापितवान् अजमीढस्य वंश्याः प्रियमेधादयः केचिद्ब्राह्मणा बभूवुः बृहदिषु।

जैगीषव्योपदेशेन योगतंत्रं चकार ह उदक्सेनस्तस्माद्भल्लाटो वार्हदीषवाः २६ यवीनरो द्विमीढस्य कृतिमांस्तु ततः स्मृतः नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् २७ सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः कृती हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् २८ संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुंजयः २९ ततो बहुरथो नाम पुरमीढोऽग्रजोऽभवत् नलिन्यामजमीढस्य नीलः शांतिस्तु तत्सुतः ३० शांतेः सुशांतिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् भर्म्याश्वस्तनयस्तस्य पंचासन्मुद्गलादयः ३१ यवीनरो बृहद्विष्वः कांपिल्यः संजयः सुताः भर्म्याश्वः प्राह पुत्रा मे पंचानां रक्षणाय हि ३२ विषयाणामलमिमे इति पंचालसंज्ञिताः मुद्गलाद्ब्रह्मनिर्वृत्तं गोत्रं मौद्गल्यसंज्ञितं ३३ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् अहल्या कन्यका यस्यां शतानंदस्तु गौतमात् ३४ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ३५ शरस्तंबेऽपतद्रेतो मिथुनं तदभूच्छुभं तद्दृष्ट्वा कृपयागृह्णाच्छंतनुर्मृगयां चरन् कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ३६ इति श्रीभा० म० न० वैयासिक्यां नवमस्कंधे एकविंशतितमोऽध्यायः २१

प्रश्नतयः क्षत्रियाः क्षतिं वृत्तिमुक्तं तस्यैव वंशांतरमाह नलिन्यामिति यावत्समाप्ति ३० मुद्गलादयः यवीनराद्यश्चत्वारः इत्येवं ३२ भार्म्यात् भर्म्याश्वपुत्रात् मिथुनं वभूव तदेवाह दिवोदासः पुमान् अहल्या च कन्यकेति ३६ इति श्रीनवमस्कंधटीकायामेकविंशोऽध्यायः २१ ॥ ॥ ॥

अनन्यराधसः ईश्वरातिरिक्तफलान्तरानपेक्षस्य प्रत्यलीयत आत्मन्येव लीना बभूव १७ मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्येव गर्गस्य वंशमाह गर्गादिति महावीर्यस्य वंशमाह दुरितक्षयः तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः कथंभूताः ये अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणत्वं गतास्ते मन्युपुत्राणां पंचानां ज्येष्ठस्य वंशमाह बृहत्क्षत्रस्येति यत् येन हस्तिनापुरं कृतमित्यर्थः २० अजमीढादयस्त्रयो हस्तिनः पुत्राः २१ अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाभवत् २२ पारस्य तनयो नीपः नीपस्य पुत्रशतं २४ स एव कृत्वीसंज्ञायां शुककन्यायां ब्रह्मदत्तं

ईश्वरालंबनं चित्तं कुर्वतोऽनन्यराधसः । मायागुणमयी राजन्स्वप्नवत्प्रत्यलीयत १७ त-
त्प्रसंगानुभावेन रंतिदेवानुवर्तिनः । अभवन्योगिनः सर्वे नारायणपरायणाः १८ ग-
र्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत । दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः १९
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः । बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरं २० अ-
जमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः । अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः २१ अ-
जमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः । बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः २२ त-
त्सुतो विशदस्तस्य सेनजित्समजायत । रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः २३
रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः । पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् २४ स
कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् । योगी स गवि भार्यायां विष्वक्सेनमधात्सुतं २५ ॥

जनयामास तदुक्तं हरिवंशादिषु पराशरकुलोत्पन्नः शुको नाम महायशाः व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन् स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति कृष्णं गौरं प्रभुं शंभुं तथा भूरिश्रुतं जयं कन्यां कीर्तिमतीं षष्ठीं योगमातरं ब्रह्मदत्तस्य जननीं महिषीं मणुहस्य चेति यद्यपि शुकस्तत्त्वे वविमुक्तसंगो निर्गतः तथापि विरहातुरं व्यासमनुयांतं दृष्ट्वा छायाशुकं निर्माय गतवान् तदभिप्रायेणो चायं गार्हस्थ्यादिव्यवहारस्त्य:विरोधः स च ब्रह्मदत्तो यो

सगणाय श्वगणसहिताय ८ उच्छेषं तदवशिष्टमेकमेव तर्पयतीति तथा १० यदा दुःखात्सहिष्णुतया सर्वे प्राणिदुःखं स्वयं भोक्तुमाशास्ते नेति अणिमाद्यष्टसमृद्धियुक्तां गतिमपि मोक्षमपि चाहं न कामये तर्हि किं कामयसे तत्राह अखिलदेहभाजामार्तिं दुःखं तद्वान्तःस्थितः सन्नहं प्रपद्ये प्राप्नुयामित्येवं कामये येन तद्दुःखभोक्त्रा मया हेतुना।

याते शूद्रे तमन्योगादतिथिः श्वभिरावृतः राजन्मे दीयतामन्नं सगणाय बुभुक्षते ८ स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतं तच्च दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ९ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणं पास्यतः पुक्कसोभ्यागादपो देह्यशुभस्य मे १० तस्य तां करुणां वाचं निशम्य विपुलश्रमां कृपया भृशसंतप्त इदमाहामृतं वचः ११ न कामयेहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा आर्तिं प्रपद्येखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः १२ क्षुत्तृट्श्रमो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे १३ एवं प्रभाष्य पानीयं म्रियमाणः पिपासया पुक्कसायाददाद्धीरो निसर्गकरुणो नृप १४ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छतां आत्मानं दर्शयांचक्रुर्माया विष्णुविनिर्मिताः १५ स वै तेभ्यो नमस्कृत्य निःसंगो विगतस्पृहः वासुदेवे भगवति भक्त्या चक्रे मनः परः १६ ॥

तेन ते सर्वे अदुःखा भवंति १२ नन्वदुःखं किमिति प्रार्थयसे परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तिरित्याह क्षुत्तृडिति कृपणस्य जन्तोर्जीवनहेतोर्जलस्यार्पणान्मे सर्वे क्षुत्तृडादयो निवृत्ता एवेत्येवं प्रभाष्य त्रिभुवनाधीशाः ब्रह्मादयः मायाः तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीताः सन्तः स्वरूपं १५ परं केवलं वासुदेवे भक्त्या मनश्चक्रे न तु तान् किमपि याचितवान् १६।

वितथं व्यभिचारसंभवात् तमात्मजं वितथं निरर्थकं ममता व्यसृजत् तस्याजपानान्तरे आदिजं प्रथमजं म
तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः एवं तयात्यक्तं मरुतो बिभ्रत आबिभरुः
तदेवं मरुद्भिः प्राप्तोयं भरतस्यान्वये वितथसंततिर्दत्तः ३९ इति नवमस्कंधटीपिकायां विंशः २० एकवि
शे तु दौष्यंतेः सुतस्यान्वय उच्यते रंतिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते १ भरतस्यान्वये वितथस्य

चोद्यमाना सुरैरेवं मत्वा वितथमात्मजं व्यसृजन्मरुतो बिभ्रन्दत्तोयं वितथोन्वये ३९ इ
ति श्रीभागवते महापुराणे नवमस्कंधे पुरुवंशानुकीर्तने विंशतितमोध्यायः २० श्रीशु
क उवाच वितथस्य सुतान्मन्योर्बृहत्क्षत्रो जयस्ततः महावीर्यो नरो गर्गः संकृतिस्तु न
रात्मजः १ गुरुश्च रंतिदेवश्च संकृतेः पांडुनंदन रंतिदेवस्य हि यश इहामुत्र च गीयते २ वि
यद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः निष्किंचनस्य धीरस्य सकुटुंबस्य सीदतः ३ व्यती
युरष्टचत्वारिंशदहान्यपिबतः किल घृतपायससंयावं तोयं प्रातरुपस्थितं ४ कृच्छ्र
प्राप्तकुटुंबस्य क्षुत्तृड्भ्यां जातवेपथोः अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ५
तस्मै संव्यभजत्सोन्नमादृत्य श्रद्धयान्वितः हरिं सर्वत्र संपश्यन्स भुक्त्वा प्रययौ द्विजः ६
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ७

निरस्तत्वाद्वितथसंज्ञो भरद्वाजः स च ब्राह्मणोपि भरतस्य दत्तपुत्रो जात इति तद्वंशोनुक्रम्यते वितथ
स्य सुतो मन्युः तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाः पंच पुत्रा बभूवुः १ वियद्वित्तस्य वियतो गगनादिवो
द्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य वियद्व्ययं प्राप्नुवद्विहितं यस्य तदेवाह बुभुक्षतोपि सतो लब्धं लब्धं ददतः
तत्रापि च यथा निष्किंचनस्य तथा दिशा धैर्यं पंच दशभिः ३ अपिबतो जलपानमप्यकुर्वतः घृतादित्रयाणां द्वंद्वैकत्वं

वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नाः सन्तो मरुतो भरद्वाजं नाम पुत्रमुपाददुः स
मर्पयामासुः ३६ मरुद्भिस्तं भरद्वाजागमप्रकारं दर्शयन्नाह अन्तर्वत्न्यामिति गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां।
चौर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिः तदा द्वितीयगर्भस्यावकाशाभावादाक्रोशपूर्वकं गर्भस्थेन वारितः
ततः क्रुद्धो बृहस्पतिरन्धो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिंचत् ततो बृहस्पतेः शापाद्गर्भस्थो दीर्घतमा अन्धोऽभव
त् तेन तद्वीर्यं पार्ष्णिप्रहारेण बहिर्भिः सारितं भूमौ पतितं सद्य एव कुमारोऽभवत् तं च परवीर्यजं भर्तुस्त्यागा
द्विशंकितां सतीं त्यक्तुकामां ममतां प्रति सुराः एनं बृहस्पतिं ममतां चान्योन्यविवादरूपं श्लोकं जगुः [illegible]

तस्यैवं वितथे वंशे तदर्थं यजतः सुतं मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ३६ अन्तर्
वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत्
३७ तं त्यक्तुकामां ममतां भर्तुस्त्यागविशंकितां नामनिर्वचनं तस्य श्लोकमेनं सु
राजगुः ३८ मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते यातौ यदुक्त्वा पितरौ भरद्वाजस्त

किमर्थं जगुः अत आह तस्य नाम निरुक्तं येन तं नाम निर्वचनेन भर्तृत्यागशंकामपाकर्तुमित्यर्थः
तत्र ममतां बृहस्पतिराह हे मूढे इमं पुत्रं भर पुषाण मत्तो द्विजस्मीति चेत्तत्राह द्वाजं
कस्यचिदन्यस्य बीजाद्धि तस्यैव द्वाभ्यां जातं अतस्त्वमाप्युपुत्र इति न तस्मात् भयशंकेत्यर्थः एवं
मुक्ता सती तं प्रत्याह हे बृहस्पते त्वमिमं भर द्वाजं द्वाभ्यामावाभ्यामस्माधतो जातं अतो नाहमेकाकिनी भ
रामीत्यर्थः यत् यस्मादेवमुक्त्वा पितरौ ममता बृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतो
रयं भरद्वाज इति नामास्य पुत्रस्य त्यागदुःखात्पितरौ याता इत्यर्थः ३९ ॥ ॥॥

देवानामपिमायांवैभवमत्यगात् अत्यक्रामत् यतोगुरुं बृहस्पतिं आययौ प्राप्तः तद्वंश्यभवत्वात् मायवत्तरइति
पाठे हस्तेष्वकृत्यनुसारेण मायावतां श्रेष्ठः हरिरेवासावित्यर्थः २७ मृगान् श्रेष्ठगजान् भद्रमन्द्रमृगाख्ययोगजजा
मेदाः मष्णारे तत्संज्ञके कृतिपदस्य आख्यानकर्मणीति कर्मणि कृतः कर्मविशेषे केचित्तु मष्णारे इति तीर्थं इत्याचक्ष
ते २८ पुरा देवान् जित्वा ये असुरा रसौकांसि रसातलादिस्थानानि भेजिरे तैः प्राणिभिर्बलिभिर्देवस्त्रियो रसातलं नी॥

त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन्नृपान् दौष्मन्तिरत्यगान्मायां देवानां गुरुमाययौ
२८ मृगाञ्छुक्लदतः कृष्णान् हिरण्येन परीवृतान् अदात्कर्मणि मष्णारे नियुतानि चतुर्द
श २९ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ३०
किरातहूणान्यवनान्पौण्ड्रान्कङ्कान्खशाञ्छकान् अब्रह्मण्यनृपांश्चाहन्म्लेच्छान्दिग्वि
जयेऽखिलान् ३१ जित्वा पुरासुरा देवान्ये रसौकांसि भेजिरे देवस्त्रियो रसां नीताः प्राणि
भिः पुनराहरत् ३२ सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी समास्त्रिणवसाहस्रीर्दिक्षु
चक्रमवर्तयत् ३३ स सम्राड्लोकपालाख्यमैश्वर्यमधिराट् श्रियं चक्रं चास्खलितं
प्राणान्मृषेत्युपरराम ह ३४ तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसम्मताः जघ्नुस्त्यागभया
त्पुत्रान्नानुरूपा इतीरिते ३५ ॥

ताः सतीः पुनराहरत् आनिन्ये प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता
इति वा पर्यायेण पठे यणायोऽसुराः ते नीताः सतीः यद्वा परायाद्धृताः स्वस्थानमाहरदित्यर्थः ३२ त्रिनवसाहस्रीः स-
माः सप्तविंशतिसहस्रवत्सरान् चक्रं सेना आज्ञा वा नारायणांशत्वात् चक्रं सुदर्शनमेव वा ३३ तस्य वैराग्य
प्रकारमाह स इति म्लेच्छ विचार्येति शेषः ३४ नानुरूपाः मत्सदृशा न भवन्ति मत्तोऽधिगता इति सतीत्वे व्यभिचारशङ्कया असौ
त्यक्ष्यतीति भयात् पुत्रान् जघ्नुः पुनः पुनः पुत्राणां दर्शने वैसादृश्यानुसंधानेन त्यजेन्नान्यथेत्याशयेन हतवत्यः
३५

किंचरेतोधाःरेतःसेक्तावंशांकुरत्वपुत्रोयमस्ययास्मितरंनत्यतिशायति तथाचक्रःपुंनाम्नोनरकाद्यस्मात्पितरंत्रायतेसु।
तःतस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवेतिपाठांतरे मातापित्रोःपुत्रप्रतिविवादेयमक्षयात् धर्माभेदोतुयमस्यस्व
भावात्सक्तान्त्रात्रेतोधाःरेतःसेक्तापितेव धर्मेणाविजित्यपुत्रंनयतिनतुमातुस्त्वयंपः ततस्तभार्यापुत्रौस्वीकृतवान्
निक्षेप १३ चक्रवर्तीवसर्वेतिशेषः तस्यमहिमागीयतेतदाहते श्लोकाक्रमोगीनारत्नादिवत्तुचक्रत्वात् हरेरंशाभुवः
कोशाज्जातेस्य १७ तत्रादिगोमेवाहचक्रमिति गंगायांसन्नुलोमंपंचपंचाशतावाजिभिरीजेवृशेधायपुरोहितंकं।
यमुनामनुचयमुनायामनुलोमं १९ अष्टाधिकसप्ततिमेध्यानश्वान्ववंध किंकुर्वन्नवसुधनप्रकर्षेणाददत्सा।

रेतोधाःपुत्रोनयतिनरदेवयमक्षयात् त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला २३ पितर्युप-
रतेसोपिचक्रवर्तीमहायशाः महिमागीयतेतस्यहरेरंशभुवोभुवि २४ चक्रंदक्षिणहस्तेस्य
६३ पद्मकोशोस्यपादयोः ईजेमहाभिषेकेणसोभिषिक्तोधिराड्विभुः २५ पंचपंचाशतामे-
ध्यैर्गंगायामनुवाजिभिः मामतेयंपुरोधाययमुनायामनुप्रभुः २६ अष्टसप्ततिमेध्याश्वा-
न्बबंधप्रददद्वसु भरतस्यहिदौष्मंतेरग्निःसाचीगुणेचितः सहस्रंबद्वशोयस्मिन्ब्राह्म-
णागाविभेजिरे २७

साचीगुणोत्रकृष्टगुणावतिदेशेग्निश्चितोऽभूत् यस्मिन्नग्निचयनेदेशेवासहस्रंब्राह्मणाःभरतेनभूरिदानेनदत्ता
गाःबद्वशःप्रत्येकंबद्वंबद्वंविभेजिरेविभज्यजगृहुःचतुरशीत्यधिकेत्रयोदशसाहस्रैरेकंबद्वंभवतितथाहिहि
रण्येनापरिबद्धानांकृष्णानांशुक्लदतांगवामयुतानिभरतोददौ छतंबद्वान्सप्तधेतिक्रमस्तुकानिसप्ताधिकश
तंबद्वानिश्रीकृष्णेनोत्तरश्लोकेचतुर्दशलक्षत्वेनसंगृहीतानि अष्टलक्षमागीणामयुतानिपरिपूतानिचतुर्दशेति ए
वंचतुर्दशलक्षाणांसप्ताधिकशतभागोबद्वंरत्नकंभवति इयंचबद्वसंख्याश्लोकेनसंगृह्यते चतुर्दशानांल
क्षाणांसप्ताधिकशतांशकः बद्वंचतुरशीत्यग्रसहस्राणित्रयोदश २७ ॥ ॥

भो०ज०
न० टी०
३७

तस्यादर्शनेनप्रमुदितः-अतएवसन्निवृत्तःपरिश्रमोयस्य १२ पौरवाणांचेतोनह्यधर्मेरमते अतोमच्चेतसस्त्व
षयरमणात्वंवाहंत्वांराजन्यतनयांवेद्मि १३ विश्वामित्रस्यात्मजोऽहंमेनकयाजाता तयाचस्वर्गंगच्छंत्याऽत्रत्यक्ता।
अतोराजन्यकन्येवाहमित्यर्थः १४ किं०करवामेत्यादिवाक्यात् तदभिप्रायंज्ञात्वाह उपपन्नमिति १६

दृष्ट्वैवतांवरारोहांभटैःकतिपयैर्वृतः तद्दर्शनप्रमुदितःसन्निवृत्तपरिश्रमः १० पप्र
च्छकामसंतप्तःप्रहसन्निवतांगिरा कात्वंकमलपत्राक्षिकस्यासिहवरांगने ११ किंस्वि
च्चिकीर्षितंत्वत्रभवत्यानिर्जनेवने व्यक्तंराजन्यतनयांवेद्म्यहंत्वांसुमध्यमे १२ नहिचेतःपौ
रवाणामधर्मेरमतेक्वचित् १३ शकुंतलोवाच विश्वामित्रात्मजंवाहंत्यक्तामेनकयावने
वेदैतद्भगवान्कण्वोवीरकिंकरवामते १४ आस्यतांवरविदाहृगृह्यतामर्हणंचनः भुज्य
तांसंतिनीवाराउष्यतांचयदिरोचते १५ दुःषंतउवाच उपपन्नमिदंसुभ्रुजातायाःकुशिकान्वये
स्वयंहिवृणतेराज्ञांकन्यकाःसदृशंवरं १६ ओमित्युक्तेयथाधर्ममुपयेमेशकुंतलां गांधर्ववि
धिनाराजादेशकालविधानवित् १७ अमोघवीर्योराजर्षिर्महिष्यांवीरमादधे श्रीमतेस्वपुरं
यातःकालेनाप्रसूतसासुतं १८ कण्वःकुमारस्यवनेचक्रेसमुदिताःक्रियाः बद्धामृगेंद्रतरा
सा क्रीडितस्मसबालकः १९ तंदूरत्ययविक्रांतममात्यप्रमहात्मा हरेरंशांशसंभूतंभर्तुरंति
कमागमत् २० यदानजगृहेराज्ञाभार्यापुत्रावनिंदितौ तदाएवतांसर्वभूतानांवाग्गाहाऽशरी
रिणी २१ मातामस्त्रापितुःपुत्रोयेनजातःसएवसः भरस्वपुत्रंदुःषंतमावमंस्थाःशकुंतलां २२

गांधर्वविधिनामिथःसमयपूर्वकेण १७ दूरत्ययंविक्रांतंविक्रमणंयस्य २१ भस्त्राचर्मपात्रंतद्वत्मातास्त्रा।
धारयाते पितुरेवतुपुत्रः तत्रहेतुःयेनेतिआत्मावैपुत्रनामासीतिश्रुतेःभरस्वपुषाणाअनेनभरतनामनिरुक्तं २२

राम:
३७

प्रस्तोभमेवाह परिहासमिवेति यद्दाश्च स्तोभं निश्चितिमार्गेभ्यो ह्यहं मेने २६ कथं समावेश्य तदाह नमः इति ना
मन्त्रादिभिः समावेश्य स्वर्थः कृष्णे वा नमस्करोति ३० इति नवमे एकोनविंशतितमः १९ विंशे पितृप्रसादात्परा
जा सन्महोन्नतेः पुरोर्वंशे तु दौष्यन्तेर्भरतस्योच्यते यशः १ तत्सुतः अहंयातेः सुतः ३ धर्मयुक्तसत्ययुक्त

कृत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितं
२४ सा सन्निवासं सुहृदां प्रपायामिव गच्छतां विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः
२५ सर्वत्र संगमुत्सृज्य स्वप्नौपम्येन भार्गवी कृष्णे मनः समावेश्य व्यधुनोल्लिंगमात्मनः २६
नमस्तुभ्यं भगवते वासुदेवाय वेधसे सर्वभूताधिवासाय शान्ताय बृहते नमः २७ इति श्रीभा
गवते महापुराणे नवमस्कंधे ययातिचरितमेकोनविंशोध्यायः १९ श्रीशुक उवाच पूरोर्वं
शं प्रवक्ष्यामि यत्र जातोसि भारत यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे १ जनमेजयो ह्य
भूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः प्रवीरोथ मनस्युर्वै तस्माच्चारुपदोभवत् २ तस्य सुद्युरभूत्पु
त्रस्तस्माद्बहुगवस्ततः संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ३ ऋतेयुस्तस्य कक्षेयुः
स्थंडिलेयुः कृतेयुकः जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ४ दशैतेप्सरसः पुत्रा वनेयुश्चाव
मः स्मृतः घृताच्यामिंद्रियाणीव मुख्यस्य जगदात्मनः ५ ऋतेयो रंतिभारोभूत्त्रयस्तस्यात्मजा नृप
सुमतिर्ध्रुवोप्रतिरथः कण्वोप्रतिरथात्मजः ६ तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ७
पुत्रोभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ७ दुःष्यंतो मृगयां यातः कण्वाश्रमपदं गतः तत्रासीनां स्वप्र
भया मंडयंतीं रमामिव विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियं ८ तेयुश्च धर्मसत्यव्रतेयवः ४ वनेयुश्चा
वः स्मृतः एवं दशैते ऋतेयुप्रमुखास्तस्य रौद्राश्वस्य घृताच्यामप्सरसि पुत्रा जाताः अप्सरस इति षष्ठी स तस्याः पर्यवर्तित्वेद

तर्हि कदा केनोपायेन वा मनसः संप्रसीदितिः स्यात् यथा कामोपशमः स्यादित्यत आह यदेति सुहृद्भिः अमङ्गलं भावं रा॥
गद्वेषादिवैषम्यं दुःखानि नितरां वहतीति तथा तां १४ स्त्रीसन्निधाने तु सर्वथा न्यायाऽपि स्यादित्याह मात्रेति अविविक्तं सैका॥
की आसने यस्य सः कर्षति आकर्षति १५ ननु त्यागस्य त्यागस्यानित्युष्करत्वात् कथं ब्रह्मणि मनस आधानं स्या

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलं समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः १३ या दुस्त्य॥
जा दुर्मतिभिर्जीर्यतो या न जीर्यते तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् १४ मात्रा स्वस्रा
दुहित्रा वा नाऽविविक्तासनो भवेत् बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति १५ पूर्णं वर्ष
सहस्रं मे विषयान्सेवतोऽसकृत् तथापि चानुसवनं तृष्णा तेषूपजायते १६ तस्मादे
तामहं त्यक्त्वा ब्रह्मण्यध्याय मानसं निर्द्वन्द्वो निरहंकारश्चरिष्यामि मृगैः सह १७ दृष्टं श्रुत
मसद्बुद्ध्वा नानुध्यायेन्न संविशेत् संसृतिं चात्मनाशं च तत्र विद्वान्स आत्मदृक् १८ इत्यु
क्त्वा नाहुषो जायां तदीयं पूरवे वयः दत्त्वा स्वजरसं तस्मादाददे विगतस्पृहः १९ दिशि
दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुं प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरं २० भूम
ण्डलस्य सर्वस्य पूरुमर्हत्तमं विशां अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ २१ आसे
वितं वर्षपूगान्षड्वर्गं विषयेषु सः क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः २२ स तत्र निर्मु
क्तसमस्तसंग आत्मानुभूत्या विधुतत्रिलिंगः परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं

तत्राह दृष्टमिति नो नानुध्यायेन्न संविशेत् न चोपभुंजीत तत्र दृष्टश्रुतयोरनुध्यानादौ स आत्मदृग्भवति।
१८ तस्य पूरोर्वशे स्थापयित्वा २१ विषयेषु शब्दादिषु आसेवितं षड्वर्गं षडिन्द्रियसुखं मुमुचे तत्याज यद्वा।
विषयेषु आसेवितं सेवाकारितं षण्णामिन्द्रियाणां वर्गं मुमुचे तत्याज सप्तव्ययोः २२ विधुतं निरस्तं त्रिगुणात्मकं लिंगं

जुजुषे सेवितवान् ४४ यथोपजोषं यथाप्रीति जुजुषे ४५ नानेव भाति यावद्धिष्ठानदृष्टिः तद्दृष्टे न भाति स्व=
प्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ४८ मनःसुखं कामभोगं कदिन्द्रियैः कुत्सितैः पराङ्मुखैरिन्द्रियैः ५०
इति नवमेष्टादशः १८ ऊनविंशे ययातिः स्वचेष्टितं बस्तबस्तोपमं देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान्.

इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः सोपि तद्वयसा कामान्यथावज्जुजुषे नृप ४४
सप्तद्वीपपतिः सम्यक्पितृवत्पालयन्प्रजाः यथोपजोषं विषयाञ्जुजुषेऽव्याहतेन्द्रियः ४५ देव
यान्यप्यनुदिनं मनोवाग्देहवस्तुभिः प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ४६ अयजद्य
ज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः सर्वदेवमयं देवं सर्ववेदमयं हरिं ४७ यस्मिन्निदं विरचितं
व्योम्नीव जलदावलिः नानेव भाति नाभाति स्वप्नमायामनोरथः ४८ तमेव हृदि वि
न्यस्य वासुदेवं गुहाशयं नारायणमणीयांसं निराशीरयजत्प्रभुं एवं वर्षसहस्राणि म
नःषष्ठैर्मनःसुखं विदधानोपि नातृप्यत्सार्वभौमः कदिन्द्रियैः ५० इति श्रीभाग
वते महापुराणे नवमस्कन्धे ययातिचरिते अष्टादशोऽध्यायः १८ श्रीशुक उवाच
स इत्थमाचरन्कामान्स्त्रैणोऽपह्नवमात्मनः बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत १
शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः २ ब
स्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ददर्श कूपे पतितां स्वकर्मवशगामजां ३ ॥

१ मुक्तभोगामजां हास्यन्नजवद्धृतमात्मनः विरुवयन्प्रियामाह निर्वेदपितुमात्मवान् २ कामानाचरन्नु
पभुंजानः गाथामितिहासं मद्विधेन मादृशेनाचरितामनुष्ठितां मद्विधस्याचरितं यस्यामिति वा यस्य ग्रामनिवा
सिनः कामिनो मद्विधस्याचरितस्य स्पता धीराः शोचंति तस्य गाथां भार्गवि आत्मानमतुलस्याह बस्त इति।

आसुर्याः शर्मिष्ठायाः भर्तुः सकाशात् ३३ उपमन्त्रयन् प्रसादयन् विकृतं रूपं करोतीति तथा ३५ ते दुहितरि कामै
रद्याप्यतृप्तोऽस्मि कामानां भोगैरिति वा शुक्र आह तर्हि योऽभिधास्यति अभिमो धारयिष्यति तेन स्ववयसा कामं व्यत्य
स्यतां यथेच्छं जरा व्यत्यस्यं यातु व्यत्ययं नीयतामिति वा यद्वा व्यत्यस्यतामिति छेदः तां जरां व्यत्यासं गमयेत्यर्थः ३६

यदुं च तुर्वसुं चैव देवयानी व्यजायत द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ३२ गर्भसं
भवमासुर्या भर्तुर्विज्ञाय मानिनी देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ३३ प्रियामनुग
तः कामी वचोभिरुपमन्त्रयन् न प्रसादयितुं शेके पादसंवाहनादिभिः ३४ शुक्रस्तमाह
कुपितः स्त्रीकामानृतपूरुष त्वां जरा विशतां मन्द विरूपकरणी नृणां ३५ ययातिरुवाच
अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्दुहितरि स्म ते ३६ शुक्र उवाच व्यत्यस्यतां यथाकामं वयसा
योऽभिधास्यति इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ३७ यदो तात प्रतीच्छेमां जरां देहि
निजं वयः मातामहकृतां वत्स न तृप्तो विषयेष्वहं वयसा भवदीयेन रंस्ये कतिपयाः समाः ३८
यदुरुवाच नोत्सहे जरसा स्थातुमन्तरा प्राप्तया तव अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरु
षः ३९ तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्ध
यः ४० अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकं न त्वमग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ४१
पूरुरुवाच को नु लोके मनुष्येंद्र पितुरात्मकृतः पुमान् प्रतिकर्तुं क्षमो यस्य प्रसादाद्विंदते प
रं ४२ उत्तमश्चिंतितं कुर्यात्प्रोक्तकारी च मध्यमः अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ४३

इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ३८ यतोऽनधर्मज्ञाः अनित्ये च यौवने नित्यबुद्धयः ४० त्वं जरां
किमग्रजवत्प्रत्याख्यानं मा कृथाः त्वं मां प्रत्याख्यातुं नार्हसीति ४१ आत्मकृतः स्वदेहकर्तुः प्रत्युपकारं कर्तुं को नु क्ष
मः ४२ तथापि पितुर्यच्चिंतितं कुर्यात्स उत्तमः यस्तु प्रोक्तकारी च स मध्यमः यस्त्वश्रद्धया कुर्यात्सोऽधमः अकर्ता पितुः

भा० ना०
नं० टी०
३४

अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं बुद्धा तद्गतं तस्यां सकामं स्वमनः बुद्धा तस्य धर्मे मदीयं मनः प्र
विशेदिति तस्या वचः प्रतिजग्राह अंगीकृतवान् २३ शर्मिष्ठायाः सर्वं योपि देववशादेवाभवदिति दर्शयन्नाह गता
ते राजनीति नवभिः उक्तं मिथ्याकोल्वादिकं कृतं कूपप्रक्षेपादिकापोतीं उञ्छवृत्तिं २५ प्रत्यनीका देवास्तेविवक्षि

ययातिरनभिप्रेतं दैवोपहृतमात्मनः मनस्तु तद्गतं बुद्धा प्रतिजग्राह तद्वचः २३ गते
राजनि सा वीरे तत्र स्म रुदती पितुः न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतं २४ दुर्मना भग
वान्काव्यः पौरोहित्यं विगर्हयन् स्तुवन्वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् २५ वृषपर्वा
तमाज्ञाय प्रत्यनीकविवक्षितं गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि २६ क्षणार्धम
न्युर्भगवान्शिष्यं व्याचष्ट भार्गवः कामोस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे २७
तथेत्यवस्थिते प्राह देवयानी मनोगतं पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु २८ स्वा
नां तत्संकटं वीक्ष्य तदर्थस्य च गौरवं देवयानीं पर्यचरत्स्त्रीसहस्रेण दासवत् २९
नाहुषाय सुतां दत्वा सह शर्मिष्ठयोशना तमाह राजञ्छर्मिष्ठामाधास्तल्पे न कर्हिचि
त् २९ विलोक्यौशनसीं राजञ्छर्मिष्ठा सुप्रजां क्वचित् तमेव वव्रे रहसि सख्याः
पतिमृतौ सती ३० राजपुत्र्यार्थितोपत्ये धर्मं चावेक्ष्य धर्मवित् स्मरञ्छुक्रवचः ।
कालेदिष्टमेवाभ्यपद्यत ३१ ॥

ताः जयं प्राप्यतीयाः स्वाभिप्रेतं यस्य तथाभूतं ज्ञात्वा प्रत्यनीका
नां विवक्षितमिति वा २६ सानुगा सखीसहिता शर्मिष्ठा मामनुयात्विति २७ ततस्मान्निर्गमात् छुक्रात् सं
कटं वीक्ष्य तत्तस्मात् रक्षितस्य तादर्थ्यस्य प्रयोजनस्य गौरवं वीक्ष्य २८ तल्पे मा धा नोपगच्छेरित्यर्थः २९ अप
त्यार्थमृतुकाले प्रार्थना तस्याः कामपूरणं धर्ममवेक्ष्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्संग

द्वा०
॥
ऍ
रा म:
३४

अन्यायमेव ब्राह्मणोत्कर्षेण वर्णनेन यन्न नक्षि । येरिति त्रिभिः । ये ब्राह्मणाः परस्य पुंसो मुखं मुखादुत्पन्नत्वेन तत्प्रिहारत्वेन चक्षेब्धाः इत्यर्थः ज्योतिर्ब्रह्म पंथा वेदमार्गः तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं तत्रापि वयं भृगवश्चास्या अस्मत्पिता नः शिष्यः एवं सत्यपि अस्माभिर्धार्यं वासः इयमसती धृतवती १४ निक्षिपंतीं ॥

येरिदं तपसा सृष्टं मुखं पुंसः परस्य ये धार्यते यैरिह ज्योतिः शिवः पंथाः प्रदर्शितः १२ यान्वंदंत्युपतिष्ठंते लोकनाथाः सुरेश्वराः भगवानपि विश्वात्मा पावनः श्रीनिकेतनः १३ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती १४ एवं क्षिपंतीं शर्मिष्ठा गुरुपुत्रीमभाषत रुषा श्वसंत्युरंगीव धर्षिता दष्टदच्छदा १५ आत्मवृत्तमविज्ञाय कत्थसे बहु भिक्षुकि किं न प्रतीक्षसेऽस्माकं गृहान्बलिभुजो यथा १६ एवंविधैः सुपरुषैः क्षिप्त्वाचार्यसुतां सतीं शर्मिष्ठा प्राक्षिपत्कूपे वासश्चादाय मन्युना १७ तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह १८ दत्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे गृहीत्वा पाणिना पाणिमुज्जहार दयापरः १९ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा राजंस्त्वया गृहीतो मे पाणिः परपुरंजय २० हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे एष ईशकृतो वीर संबंधो नात्र पौरुषः २१ यदिदं कूपमग्नाया भवतो दर्शनं मम न ब्राह्मणो मे भविता हस्तग्राहो महाभुज कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा २२ ॥

तिलोमसंबंध इति चेत्तत्राह एष इति ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह न ब्राह्मण इति कचस्य तेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात्त तदा च देवयानी पतिं चकमे स च गुरुपुत्रीमिमां इत्युपेतां न तामुद्वहत् ततः क्रुद्धा पिता सती ।

अष्टादशे ययातिस्तु नाहुषस्य कथोच्यते यस्य पंचसु पुत्रेषु कनीयानग्रहीज्जरां १ तस्य राज्यस्य परिणामं अनर्थाव
हत्वं वेत्तीति तत्पा० २ तत्र हेतुः यन्नेति स्थानाच्च्यावित् द्विजैरगस्त्यादिभिः ३ यवीयसो भ्रातॄन् आदिशत् काव्यस्य शुक्र
स्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् ४ न प्रतिलोमता दोषः ईश्वरघटनादिति दर्शयन् कथामाह एकदेति।

श्रीशुक उवाच यतिर्ययातिः शर्यातिरायतिर्वियतिः कृतिः षडिमे नहुषस्यासन्निंद्रियाणी
व देहिनः १ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् यत्र प्रविष्टः पुरुष आत्मानं नाव
बुध्यते २ पितरि भ्रंशिते स्थानादिंद्राण्या धर्षणाद्द्विजैः प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ३
चतसृष्वादिशद्दिक्षु भ्रातॄन्भ्राता यवीयसः कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ४ श्री
राजोवाच ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबंधुश्च नाहुषः राजन्यविप्रयोः कस्माद्विवाहः प्रति।
लोमकः ५ श्रीशुक उवाच एकदा दानवेंद्रस्य शर्मिष्ठा नाम कन्यका सखीसहस्रसंयु
क्ता गुरुपुत्र्या च भामिनी ६ देवयान्या पुरोद्याने पुष्पितद्रुमसंकुले व्यचरत्कलगीतालिन
लिनीपुलिनेऽबला ७ ता जलाशयमासाद्य कन्याः कमललोचनाः तीरे न्यस्य दुकूला
नि विजह्रुः सिंचतीर्मिथः ८ वीक्ष्य व्रजंतं गिरिशं सह देव्या वृषस्थितं सहसोत्तीर्य वासांसि
पर्यधुर्व्रीडिताः स्त्रियः ९ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् स्वीयं मत्वा प्रकु।
पिता देवयानीदमब्रवीत् १० अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसांप्रतं अस्मद्धार्यं धृतव
तीशुनीव हविरध्वरे ११ ॥

दिना प्रतिजग्राह तद्वचस्त्वं तेन गुरोः शुक्रस्य पुत्र्या देवयान्या च व्यचरदिति द्व
योरन्वयः ६ कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिन् पुरोद्याने अबला शर्मिष्ठा ७ सिंच
तीः सिंचत्यः ८ अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समव्ययत् पर्यधात् असांप्रतं अन्याय्यम् ११

राम:
३३

संततिसंसः सत्यकेतोर्धृष्टकेतुः ८ तस्मात्सुकुमारः तस्माद्वीतिहोत्रः तस्य भर्गः अतो भर्गात्त भार्गभूमिः ९ काश्य
पः काशेर्वंश्याः काशेः प्रपितामहस्य क्षत्रवृद्धस्यान्वयं अन्वयंतं यांतीति तथा ततः अनेनसः शुद्धो जज्ञे ११ कृत

षष्टिंवर्षसहस्राणिषष्टिंवर्षशतानिच नालर्कादपरोराजन्बुभुजेमेदिनींयुवा ७ अल-
र्कात्संततिस्तस्मात्सुनीथोथनिकेतनः धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ८ धृष्टकेतुस्तत त्यर
स्तस्मात्सुकुमारः क्षितीश्वरः वीतिहोत्रस्य भर्गोतो भार्गभूमिरभून्नृप ९ इतीमेकाशयोभू-
पाः क्षत्रवृद्धान्वयायिनः राभस्यरभसः पुत्रोगंभीरश्चाक्रियस्ततः १० तस्यक्षेत्रेब्रह्मजज्ञेशृ-
णुवंशमनेनसः शुद्धस्ततः शुचिस्तस्माच्चित्रकृद्धर्मसारथिः ११ ततः शांतरजोजज्ञेकृतकृ-
त्यः सआत्मवान् रजेः पंचशतान्यासन्पुत्राणाममितौजसां १२ देवैरभ्यर्थितोदैत्यान्हत्वे-
द्रायाददाद्दिवं इंद्रस्तस्मैपुनर्दत्वागृहीत्वाचरणौरजेः आत्मानमर्पयामासप्रह्लादाद्यरिशं-
कितः १३ पितर्युपरतेपुत्रायाचमानायनोददुः त्रिविष्टपंमहेंद्राययज्ञभागान्समाददुः १४ गु-
रुणाहूयमानेऽग्नौबलभित्तनयान्रजेः अवधीद्भ्रंशितान्मार्गान्नकश्चिदवशेषितः १५ =
कुशात्प्रतिः क्षात्रवृद्धात्संजयस्तत्सुतोजयः ततः कृतः कृतस्यापिजज्ञेहर्यबलोनृपः १६ २/
सहदेवस्ततोहीनोजयसेनस्तुतत्सुतः संकृतिस्तस्यचजयः क्षत्रधर्मामहारथः १७ क्षत्र-
वृद्धान्वयाभूपाइमेशृण्वथनाहुषान् १८ इतिश्रीभाग० म० न० आयुवंशः सप्तदशोध्यायः

कृतकृत्यसः यतः आत्मवान् ज्ञानी अतः पुत्रोत्पादनेन कृतकृत्यो नित्यं यः तेषामतिभ्रंशाय गुरुणा बृहस्पतिनाभि-
चारविधानेनाग्नौ हूयमाने सति सिंहावलोकनेनाह क्षात्रवृद्धपौत्रात् कुशात्प्रतिः प्रतेः संजयः १८ इतिश्री
नवमस्कंधदीपिकायां सप्तदशोध्यायः १७ ॥ ॥ ॥ ॥

गा१

१

ॐ नमो भगवते वासुदेवाय ॐ नमः श्रीमत्परमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनपरिपाल-
नसन्निवासाय श्रीवासुदेवाय अष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनं तत्सृते ऋषिदेवेंद्रमूर्तिभिर्हरेः
सह १ प्रतिमन्वंतरं चैव मन्वाद्याः पृथक्पृथक् प्रवर्तयंति सद्धर्मान्पालयंत्याचरंति च २ अतो मन्वं-
तरस्योक्तं सद्धर्मैः तिलक्षणं येन वै क्रियमाणे न नरो न निरयं व्रजेत् तत्र प्रथमे स्वायंभुवः स्त्रीश्चि विस्त-

श्रीराजोवाच स्वायंभुवस्येह गुरो वंशोयं विस्तराच्छ्रुतः यत्र विश्वसृजां सर्गो म-
नूनन्यान्वदस्व नः १ तत्र धर्मा हि विविधा अनुवर्णिताः शुभाः मन्वंतरे हरेर्ज-
न्मकर्माणि च महीयसः २ गृणंति कवयो ब्रह्मंस्तानि नो वद शृण्वतां यद्यस्मिन्नं-
तरे ब्रह्मन्भगवान्विश्वभावनः ३ कृतवान्कुरुते कर्ता ह्यतीतेनागते द्यवा ऋ-
षिरुवाच मनवोस्मिन्व्यतीताः षट्कल्पे स्वायंभुवादयः आद्यस्ते कथितो यत्र
देवादीनां च संभवः ४

या उत्तमश्लोकस्य कीर्तिश्चतुर्मनुनिरूपणं ३ स्वायंभुवेंतरे नंतद्गुणवर्णि-
तानमुदितः परिपृच्छति सर्वमन्वंतरस्थितिं ४ स्वायंभुवस्येति त्रिभिः यत्र विश्वसृजां मरीच्यादीनां मनुकन्या-
सुपुत्रपौत्रादिसर्गः महीयसो हरेः २ अत्र कश्चिद्गूढपाठांतरमस्ति तदुपेक्षितमस्माभिः यस्मिन्नतीते य-
त्कृतवान् यस्मिन्ननागते यत्कर्ता करिष्यति अद्य वा वर्तमाने यत्कुरुते तत्सूचेदृत्यन्वयः ३ अस्मि-
न्कल्पे षण्मनवो व्यतीताः ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रामः

तस्यमनोर्दुहित्रोःकपिलयज्ञमूर्त्तिभ्यांपुत्रतांप्राप्तः ५ घोरंदुष्करंतपस्तप्यमानःसमाधावनुभूतमिदंवक्ष्यमाणंनिद्रितो॥
कस्मितवहिस्मितस्य उपदेशन्निव अनुवदन्निवच अष्टभिःश्लोकैरन्वाह ८ येनचिदात्मनाविश्वंचेतयतेचेतनी
भवति विश्वंतुयंनचेतयतेनचेतनीकरोति स्वतएवचिद्रूपत्वात् तत्रहेतुःअस्मिन्शयानेस्वपितियोजागर्त्तिसाक्षि
तयावर्त्तते अहोचित्रंनायंजनस्तंवेदसतुइमंवेद ९ तस्येश्वरत्वंदर्शयन्लोकस्यहितमुपदिशति आत्मनाईश्व

आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः ५ कृ
तंपुराभगवतःकपिलस्यानुवर्णितं आख्यास्येभगवान्यज्ञोयच्चकारकुरूद्वह ६ विर
क्तःकामभोगेषुशतरूपापतिःप्रभुः विसृज्यराज्यंतपसेसभार्योवनमाविशत् ७ सुनं
दायांवर्षशतंपदैकेनभुवंस्पृशन् तप्यमानस्तपोघोरमिदमाहसभारत ८ श्रीमनुरु
वाच येनचेतयतेविश्वंविश्वंचेतयतेनयं योजागर्तिशयानेस्मिन्नायंतंवेदवेदसः ९
आत्मावास्यमिदंविश्वंयत्किंचिज्जगत्यांजगत् तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्धनं

रेण आवास्यंस्वसत्ताचैतन्याभ्यांसव्याप्यंविश्वंसर्वंजगत्यांलोकेयत्किंचिज्जगद्भूतजातं अततेनेश्वरेणयत्किंचि
त्यक्तंदत्तंधनंतेनैवभुंजीथाःभोगाननुभवयद्वातेनहेतुनात्यक्तेनईश्वरार्पितेनैवभुंजीथानस्वार्थंकस्यस्वित्कस्यचि
दपिधनंमागृधःमाभिकांक्षेःयद्वाकस्यस्विदितिकस्यान्यस्यधनमस्ति यतोधनाकांक्षाक्रियतेस्वार्थं तथाचश्रु
तिः ईशावास्यमिति यथाश्लोकमेव १० ॥ ॥ ॥

ननु यदि सर्वं व्याप्नोति तर्हि चक्षुरादिभिः किं न प्रतीयते अत आह यं पश्यन्तं जनश्चक्षुर्वा न पश्यति चक्षुराद्यविषय त्वात् न हि प्रमातारं प्रमाणानि विषयीकरोतीति भावः तथा च श्रुतिः चक्षुः श्रोत्रस्य श्रोत्रमित्यादि ननु तर्हि घटनाशे दे वदत्त तद्विषयं चाक्षुषं ज्ञानं मिथ्या स्यात् अपि च स्वरूपभूतं तत्तद्विषयज्ञानं नश्येत् तत्राह पश्यतु पश्यतश्चक्षुर्ज्ञानं न रिष्या ति न नश्यति तत्तदाकारेणोत्पन्नायां वृत्तौ वृत्तेर्विनाशो न स्वतः सिद्धस्य ज्ञानस्य न हि सवितृप्रकाशः प्रकाश्यनाशे नश्य तीति भावः भूतानि निलयो यस्य तं सर्वान्तर्यामिणं तथापि सुपर्णं शोभनपतनं असंगं उपधावत भजध्वं तत्स्वरूप

यं न पश्यति पश्यन्तं चक्षुर्यस्य न रिष्यति तं भूतनिलयं देवं सुपर्णमुपधावत १२ न यस्या द्यन्तौ मध्यं च स्वः परो नान्तरं बहिः विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् १३ स वि श्वकायः पुरुहूत ईशः सत्यः स्वयंज्योतिरजः पुराणः धत्तेस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते १४ अथाग्रे ऋषयः कर्माणीहन्तेकर्महेतवे ईहमानो हि पुरुषः प्रायोनीहां प्रपद्यते १५ ॥

स्यानित्यत्वमेवोपपादयन्नाह न यस्येति ११ अमूनि आद्यन्तादीनि विश्वस्य यस्माद्भवन्ति विश्वं च यत् यद्रूपं अनन्तत्वाद्व्यभिचारित्वात् तदृतं सत्यं महत्त्वात् पूर्णं ब्रह्म १२ ननु विश्वं चे त् द्रूपं तर्हि तस्य कुतो जन्माद्यभावः स्वप्रकाशत्वं वा जगज्जन्मादिकं ह्यविकारिणः सत्यत्वं पूर्णत्वं वा त त्राह स ईशः अजः सत्यश्च स्वप्रकाशश्च निर्विकारः विश्वकायः अस्य पुरुहूतानि नामानि यस्य तथाविधो ऽपि अतः अस्य विश्वस्य जन्मादि स्वशक्त्या मायया धत्ते तां च नित्यसिद्धया विद्यया उदस्य हित्वा निष्क्रिय एवास्ते १३ तस्मादेवमीश्वरः कर्म कृत्वा संसज्य नैष्कर्म्यमाप्तः अथ अस्माद्धेतोः ऋषयो ऽग्रे आदौ कर्माणि कुर्वन्ति किमर्थम्

नन्वीहमानः कर्म्माणि कुर्वन्कुदीनः कोशकारवद्बध्येतेत तत्राह ईहत इति अतस्तमनुवर्त्तमाना ये ते नावसीदंति न वि
षज्जंते १५ तदेवं लोकानुग्रहार्थं विश्वसृष्ट्यादि यः करोति श्रीरामकृष्णाद्यवतारेष्ववेदोक्तमप्याचरति तं शरणं
प्रजाभिस्याह तमीहमानमिति नन्विदं भगवतामनुरूपो मार्गः न त्वस्मत्कृत्यमिति अतः ईहमानं कर्माचरंतं तथापि जीववै
लक्षण्यमाह निरहंकृतं निराशिषं अनन्यचोदितमिति निरहंकारत्वे हेतुः बुधं निराशीष्ट्वे हेतुः पूर्णं अनन्यनियुक्त
त्वे हेतुः प्रभुं तथापि कर्मानुष्ठाने हेतुः नॄन्स्वाचारेण शिक्षयंतं तर्हि किमर्थं तत्राह अखिलान्धर्मान्भावयति प्रवर्त
यतीत्यर्थः १६ समाहितमपि मंत्रोपनिषदं व्याहरंतं दृष्ट्वासुरास्त्यक्तवंहि वशमिव मत्वा असुरा यातुधानाश्च

ईहते भगवानीशो न हि तत्र विसज्जते आत्मलाभेन पूर्णार्थो नावसीदंति येऽनु तं १५ तमीहमा
नं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितं नॄन्शिक्षयंतं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखि
लधर्मभावनं १६ श्रीशुक उवाच इति मंत्रोपनिषदं व्याहरंतं समाहितं दृष्ट्वासुरा यातुधाना ज
ग्धुमभ्यद्रवन्क्षुधा १७ तांस्तथावसितान्वीक्ष्य यज्ञः सर्वगतो हरिः यामैः परिवृतो देवैर्हत्वा
शासत्त्रिविष्टपं १८ स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य

रक्षांसि मिलितानि जग्धुं अत्तुमभ्यद्रवन् १७ यामैः स्वपुत्रैः त्रिविष्टपं स्वर्गमपालयत् स्वयमेवेंद्रो बभूवेत्यर्थः १८ तत्र प्र
मन्वंतरं मन्वादयः षडंशा भवंति तथाहि स्वतो द्वादशैव स्मर्यते मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वराः ऋषयोंऽशाव
ताराश्च हरेः षड्विधमुच्यते इति तत्राद्यः स्वायंभुवो मनुः प्रियव्रतोत्तानपादौ मनुपुत्रौ यामाख्या देवाः मरीचिप्रमुखाः स
प्तऋषयः यज्ञो हरेरवतारः इंद्रः अयमेवेति तन्मन्वंतरं पंचविधमेव तच्च तुर्यस्कंधोपक्रमे निरूपितं द्वितीयमन्वंत
रेषु मन्वादिषट्कमाह स्वारोचिषो द्वितीयस्त्विति पादवदुर्जेंदुमोत्तमप्र[illegible]श्न १९ ॥ ○ ॥ ॥

विभोरसाधारणं चरितमाह अष्टाशीतिसहस्राणीति २२ सत्यजितं इंद्रस्य सखा सन् २६ उत्तमस्तृतीयो मनुः तस्य भ्राता
तामसस्तु चतुर्थो मनुरिति २७ त्रिशिखस्त्वीश्वरः २९ अन्यानपि विशिष्टपराक्रमान् देवानाह देवा वैधृतय इति हरिरित्या

तत्रेंद्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ऊर्जस्तंभादयः सप्त ऋषयो ब्रह्मवादिनः २० ऋ
षेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः २१ अ
ष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः २२ तृ
तीय उत्तमो नाम प्रियव्रतसुतो मनुः पवनः सृंजयो यज्ञहोत्राद्यास्तत्सुता नृप २३ वशिष्ठ
तनयाः सप्त ऋषयः प्रमदादयः सत्या वेदश्रुता भद्रा देवा इंद्रस्तु सत्यजित् २४ धर्मस्य सू
नृतायां तु भगवान्पुरुषोत्तमः सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह २५ सोऽनृतव्रतदुः
शीलानसतो यक्षराक्षसान् भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः २६ चतुर्थ उत्तमभ्रा
ता मनुर्नाम्ना च तामसः पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः २७ सत्यका हरयो वी
रा देवास्त्रिशिख ईश्वरः ज्योतिर्धामादयः सप्त ऋषयस्तामसेऽन्तरे २८ देवा वैधृतयो नाम वि
धृतेस्तनया नृप नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा २९ तत्रापि जज्ञे भगवान्हरि
ण्यां हरिमेधसः हरिरित्याहृतो येन गजेंद्रो मोचितो ग्रहात् ३० श्रीराजोवाच बादरायण
एतत्ते श्रोतुमिच्छामहे वयं हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ३१ तत्कथासु महत्पु
ण्यं धन्यं स्वस्त्ययनं शुभं यत्र यत्रोत्तमश्लोको भगवान्गीयते हरिः ३२

ततः ग्रहात् ग्राहात् अमूमु
चत् मोचयामास श्रवणेच्छायां हेतुः तत्कथासु तासु कथासु साकल्येन वा सुमहत्पुण्यं पुण्यस्याविशेषणं धन्यमित्या

किंच स्वच्छोदकैः सरित्सरोभिर्युतः मणय एव वालुका येषु तैः पुलिनैश्च युतः देवस्त्रीणां मज्जनेन य आमोदः तेन सौरभयु-
क्तान्यंबूनि अनिलाश्च तैश्च युत आस्ते ८ तस्य द्रोण्यां वरुणस्योद्यानमास्ते ९ गिरिवनादिं सर्वमेव यद्यपि निवसति अतो
गिरिमुपवर्ण्य वनं वर्णयति सर्वतोऽलंकृतमिति पुनर्गिरिं वर्णयति मंदारैरिति चतुर्भिः मंदारादिभिर्वृतः तस्यान्वयः तस्मि

सरित्सरोभिरछोदैः पुलिनैर्मणिवालुकैः देवस्त्रीमज्जनामोदसौरभांबुऽनिलैर्युतः ८ त
स्य द्रोण्यां भगवतो वरुणस्य महात्मनः उद्यानमृतुमन्नाम आक्रीडं सुरयोषितां ९ सर्वतोऽलं
कृतं दिव्यैर्नित्यपुष्पफलद्रुमैः मंदारैः पारिजातैश्च पाटलाशोकचंपकैः १० चूतैः प्रियालैः
पनसैराम्रैराम्रातकैरपि क्रमुकैर्नालिकेरैश्च खर्जूरैर्बीजपूरकैः ११ मधुकैः सालतालैश्च
तमालैरसनार्जुनैः अरिष्टोदुंबरप्लक्षैर्वटैः किंशुकचंदनैः १२ पिचुमंदैः कोविदारैः
सरलैः सुरदारुभिः द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः १३ बिल्वैः कपित्थैर्जंबीरैर्वृतो भ
ल्लातकादिभिः तस्मिन्सरः सुविपुलं लसत्कांचनपंकजं १४ कुमुदोत्पलकह्लारशतपत्रश्रियो
र्जितं मत्तषट्पदनिर्घुष्टं शकुंतैश्च कलस्वनैः १५ हंसकारंडवाकीर्णं चक्राह्वैः सारसैरपि ज
लकुक्कुटकोयष्टिदात्यूहकुलकूजितं १६ मत्स्यकच्छपसंचारचलत्पद्मरजःपयः कदंब
वेतसनलनीपवंजुलकैर्वृतं १७ कुंदैः कुरुबकाशोकैः शिरीषैः कुटजेंगुदैः कुब्जकैः स्वर्णयूथी
भिर्नागपुन्नागजातिभिः १८ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः शोभितं तीरजैश्चान्यैर्नित्य

[illegible] सर आस्ते तद्वर्णयति सुविपुलमित्यादि सार्धैः पंचभिः लसंति कांचनपंकजानि यस्मिन् १४ कुमुदादीनां
श्रिया ऊर्जितं कलः स्वनो येषां तैः शकुंतैश्च निघुष्टं १५ चक्राह्वैः सारसैश्चाकीर्णं जलकुक्कुटादीनां कुलैः कूजितं
मत्स्यानां कच्छपानां च संचारेण चलतां पद्मानां रजसा युक्तं पयो यस्मिन् नित्यम् ऋतवः फलपुष्पादिसंपत्तिहेतवो येषां तैर्

त

तत्रैवं सति एकदा त्रिकूटगिरिकाननान्तः यो वारणयूथपः करेणुभिश्चरन् तृषार्दितेन स्वयूथेन तत्सरोवरस्याभ्याशं समीपं अगमदिति वचनेनान्वयः। किं कुर्वन् कीचकवेत्रवंशविशालगुल्मलतादिकान् सर्वान् वनस्पतीन् प्ररुजन् प्रभंजन् कथंभूतः यस्य गंधमात्रा-द्धरयः सिंहाः गजेन्द्रादयश्च भयाद्द्रवन्ति पलायन्ते २१ वृकादयस्तु तद्वा अल्पप्राणाः अन्यत्र तद्दृष्टिपथं त्यक्त्वा चरन्ति।

तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् सकंटकान्कीचकवेणुवेत्रवद्वि-
शालगुल्मं प्ररुजन्वनस्पतीन् २० यद्गंधमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः म-
होरगाश्चापि भयाद्द्रवन्ति सगौरकृष्णाः शरभाश्चमर्यः २१ वृका वराहा महिषर्क्षशल्या गोपुच्छ-
शालावृकमर्कटाश्च अन्यत्र क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण २२ स घर्मतप्तः क-
रिभिः करेणुभिर्वृतो मदच्युत्कलभैरनुद्रुतः गिरिं गरिम्णा परितः प्रकंपयन्निषेव्यमाणोऽलिकुलैर्मदा-
शनैः २३ सरोऽनिलं पंकजरेणुरूषितं जिघ्रन्विदूरान्मदविह्वलेक्षणः वृतः स्वयूथेन तृषार्दितेन
तत्सरोवराभ्याशमथागमद्द्रुतं २४ विगाह्य तस्मिन्नमृतांबु निर्मलं हेमारविंदोत्पलरेणुवासितं पपौ
निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन्गतक्लमः २५ स्वपुष्करेणोद्धृतशीकरांबुभिर्नि-
पाययन्संस्नपयन्यथा गृही घृणी करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया २६
तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाग्रहीत् यदृच्छयैवं व्यसनं गतो गजो यथाब-
लं सोऽतिबलो विचक्रमे २७ तथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा विचुक्रुशुर्दी- मार
नधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् २८

२२ पुनः कीदृशः घर्मतप्तः मदच्युत् मदस्रावी मदम-
त्तैर्नितान्तपालैः २३ निजेन पुष्करेण शुंडाग्रेणोद्धृतं गतक्लमः सन् निकामं पपौ दीनधियः करेणवः तं केवलं विचुक्रुशुः २८

मनउत्साहशक्तिःवलंशारीरंओजःइंद्रियतेजः सकलंवलादिविपर्ययोविपरीतं अधिकंजलौकसोग्राहस्य ३०
सइत्थंयदाप्राणसंकटमापयतोदेही ३१ वुद्धिमेवाह नमामिमेति अहंतुनप्रभवामि यतोग्राहरूपेणकेवलंविधातुः
पाशेनवृतः तथापितंपरंपरमेश्वरं ब्रह्मादीनामपिपरमाश्रयंअतःशरणंयामि ३२ कोसावपिशरणंयामितत्राह =

नियुध्यतोरेवमिभेंद्रनक्रयोर्विकर्षतोरंतरतोवहिर्मिथः समाःसहस्रंव्यगमन्महीपतेस
प्राणयोश्चित्रममंसतामराः २९ ततोगजेंद्रस्यमनोवलौजसांकालेनदीर्घेणमहानभू
द्व्ययः विकृष्यमाणस्यजलेवसीदतोविपर्ययोभूत्सकलंजलौकसः ३० इत्थंगजेंद्रःस
यदापसंकटंप्राणस्यदेहीविवशोयदृच्छया अपारयन्नात्मविमोक्षणेचिरंदध्याविमांवुद्धि
मथाभ्यपद्यत ३१ नमामिमेज्ञातयआतुरंगजाःकुतःकरिण्यःप्रभवंतिमोचितुं ग्राहेण
पाशेनविधातुरावृतोप्यहंचतंयामिपरंपरायणं ३२ यःकश्चनेशोवलिनोंतकोरगात्प्र
चंडवेगादभिधावतोभृशं भीतंप्रपन्नंपरिपातियद्भयान्मृत्युःप्रधावत्यरणंतमीमहि ३३
इतिश्रीभागवतेम० ८स्कं० मन्वंतरानुवर्णनेगजेंद्रोपाख्यानेद्वितीयोध्यायः २ श्री
वादरायणिरुवाच एवंव्यवसितोवुद्ध्यासमाधायमनोहृदि जजापपरंजाप्यंप्राग्जन्मन्य
नुशिक्षितं १

यःकश्चनेति अंतकएवोरगस्तस्मात् तंशरणमीमहि व्रजेम यद्भयादित्यत्रश्रुतिः
भीषास्माद्वातःपवतेभीषोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति ३३ इतिभावार्थ
दीपिकायामष्टमेद्वितीयः २ तृतीयेतुगजेंद्रेणस्तुतोहरिरुपेत्यतं समुद्दधारतस्माद्ग्राहाद्हरेवलशापतः

तस्मै नमो नमनं अभिधीमहि अभिध्यायेम केवलं ग्राह्यग्रहीतत्वेन कायप्रणतेरशक्यत्वात् स्वस्य तज्ज्ञानं संभावयितुं वि।
शिनष्टि यत एतच्चिद्रूपात् एतद्देहादि चिदात्मकं चेतनं भवति तदुक्तं येन चेतयते विश्वमिति नत्र हेतुः पुरुषाय एषु कार
णत्वेन प्रविष्टाय ननु प्रकृतिपुरुषौ कारणमिति प्रसिद्धिः तत्राह आदिः प्रकृतिः बीजं पुरुषस्तद्रूपाय प्रविष्टत्वेऽपि जी
ववत्संसारं तस्य वारयति २ परेशायेति परमैश्वर्यविशिष्टाय एवं व्याह यावत्समाप्तिः यस्मिन्नधिष्ठाने यत उपादानात् ये
न कर्त्रा यश्च स्वयमेवेदं विश्वं भवति अस्मात्कार्यात्परस्मात्कारणाच्च यः परः तं स्वयंभुवं स्वतःसिद्धं प्रपद्ये शरणं।

गजेंद्र उवाच ॐ नमो भगवते तस्मै यत एतच्चिदात्मकं पुरुषायादिबीजाय परेशायाभिधीमहि २
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयं योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवं ३ यः स्वात्मनीदं नि
जमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितं अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलो
ऽवतु मां परात्परः ४ कालेन पंचत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु तम
गंभीरं १ स्तदासीद्गहनं यस्तस्य पारेऽभिविराजते विभुः ५

व्रजामि २ विश्वहेतुत्वं स्वतःसिद्धत्वं चोक्तं इदानीं विश्वप्रकाशकत्वं च वर्णयन्नाश्रयते यः स्वात्मनीति
३ विभाते अभिव्यक्तं सत् क्वचित्प्रलये तिरोहितं नीनं सत् तदुभयं [illegible] कार्यकारणं च साक्षीस
न्नीक्षते साक्षित्वे हेतुः अविद्धदृक् अलुप्तदृष्टिः आत्ममूलः स्वप्रकाशः कुतः परात्प्रकाशकाच्चक्षुरादेरे
पि परः तस्यापि प्रकाशकः स्वयं चक्षुषश्चक्षुरित्यादिश्रुतेः तिरोहितमीक्षत इत्येतत्प्रपंचयन्पूर्ववंदन्नीन
त्ववदन्नाश्रयते कालेन तिसृभिः ४ पंचत्वमितेषु नाशं प्राप्तेषु गहनं दुरवगाहं गभीरमनंतं तस्य तम

अत एव देवा ऋषयो यस्य स्वरूपं न विदुः जंतुरर्वाचीनः गंतुं ज्ञातुं ईरितुं वक्तुं वा दुरत्ययं दुर्गमम् अनुक्रमणं चरितं कथनं वा यस्य स मां ६ कथं तर्हि तमेव विदित्वातिमृत्युमेति नान्यः पंथा इत्यादि श्रुतिरित्याशंक्य तज्ज्ञानोपायं कथयन्नाह दिदृक्षव इति अलोकव्रतं ब्रह्मचर्यादि अव्रणं अछिद्रं भूतानामात्मभूतानामात्मभूताः भूतेष्वात्मदृष्टयः संतः स मे गतिरस्तु ७ दुरत्ययानुक्रमणत्वं प्रपंचयन् प्रणमति न विद्यत इत्यादिना लोकानामप्ययः प्रलयः संभवो जन्म तयोर्हेतुं कर्तुं तदर्थं यस्तानि जन्मादीनि स्वीकरोति तस्मै नमः इ

न यस्य देवा ऋषयः पदं विदुर्जंतुः पुनः कोर्हति गंतुमीरितुं यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स मावतु ६ दिदृक्षवो यस्य पदं सुमंगलं विमुक्तसंगा मुनयः सुसाधवः चरंत्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ७ न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा तथापि लोकाप्ययसंभवाय यः स्वमायया तान्यनुकालमृच्छति ८ तस्मै नमः परेशाय ब्रह्मणेनंतशक्तये अरूपायोरुरूपाय नम आश्चर्यकर्मणे ९ नम आत्मप्रदीपाय साक्षिणे परमात्मने नमो गिरां विदूराय मनसश्चेतसामपि १० सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता नमः कैवल्यनाथाय निर्वाणसुखसंविदे ११ ॥

त्युत्तरेणान्वयः ८ ब्रह्मणे ब्रह्मरूपाय अनंतशक्तये उरुरूपाय अनंत आश्चर्याणि कर्माणि यस्य तस्मै परेशाय नमः ९ आत्मप्रदीपाय प्रकाशांतरस्याविषयाय कुतः साक्षित्वेन प्रकाशकाय परमात्मने जीवनियंत्रे अत एव गिरां विदूराय अप्राप्याय चेतसां चित्तवृत्तीनां तथा च श्रुतिः यतो वाचो निवर्तंते अप्राप्य मनसा सह इति १० एवमपि विपश्चिता निर्गुणेन नैष्कर्म्येण संन्यासेन सत्त्वेन शुद्धेन संन्यासयोगाद्यतयः शुद्ध

गुणधर्मिणे सत्त्वादिधर्मानुकारिणे ज्ञानघनाय चेति निर्विशेषत्वेऽपि प्रधानवैलक्षण्यमुक्तं १२ साक्षिण इति सर्वा-
ध्यक्षत्वेऽपि निर्विकारत्वमुक्तं आत्मनो क्षेत्रज्ञानां मूलाय मूलस्य प्रधानस्यापि प्रकृतये उद्भवहेतवे तत्र हेतुः पुरुषा-
य पूर्णमेव सते तथा चक्षते ति. एवमेवाह मिहासमिति तन्तुरूपस्य पुरुषत्वमिति पूर्णायेति वा १३ सर्वेंद्रियाणां ये गुणा
विषयाः तेषां द्रष्ट्रे सर्वे प्रत्यया इंद्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै तदेवाह असता अहंकारादिप्रपंचेन छायया
ऽसद्रूपया उक्ताय प्रतिबिंबेनाबिंबमिव वस्तु चिन्ताय तत्र हेतुः सद्रूपेषु विषयेषु आभासो यस्य तस्मै तदुक्तं तीर्थे यथा

नमः शांताय घोराय मूढाय गुणधर्मिणे निर्विशेषाय साम्याय नमो ज्ञानघनाय च १२ क्षेत्रज्ञा-
य नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे पुरुषायात्ममूलाय मूलप्रकृतये नमः १३ सर्वेंद्रियगुण-
द्रष्ट्रे सर्वप्रत्ययहेतवे असताच्छाययोक्ताय सदाभासाय ते नमः १४ नमो नमस्तेऽखिलका-
रणाय निष्कारणायार्तिविनाशनाय सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय १५

जलस्य आभास इत्यादि पाठांतरे असत्यया छायया अध्यासेन उक्ताय युक्ताय तदधिष्ठानायेत्यर्थः १४
अखिलकारणाय सर्वकारकरूपाय अतएव स्वयं निष्कारणाय कारणत्वेऽपि मृदादिवद्विकारं वारयति
अद्भुतकारणायेति एवंभूते त्वे प्रमाणमाह सर्वे आगमाः पंचरात्रादयः आम्नायाश्च वेदाः तेषां महार्णवा-
य स्रोतसामिव पर्यवसानस्थानाय अपवर्गाय मोक्षरूपाय अतः परायणाय उत्तमानामाश्रयाय १५

गुणा एवारणयस्ताभिश्छन्नश्चिदूष्मा ज्ञानाग्निर्यस्तस्मै तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं बहिर्मुखं मानसं यस्य सृष्टिकाम एवं रूपस्तस्मै ननु कुतः नैष्कर्म्यमात्मतत्त्वं तस्य भावनं भावनया विवर्जिता आगमा विधिनि षेधलक्षणा यैस्तेषु स्वयमेव प्रकाशाय रूपतस्मै १६ मादृक् मद्विध आत्मीयो प्रपन्नः पशुः तस्य पाशोऽविद्या त स्य विशेषेण मोक्षणाय येन तत्र योग्यतामाह मुक्ताय मोचने हेतुः भूरिकरुणा यस्य अतस्तत्रार्थे अमलाय अन लसाय स्वांशेन अन्तर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीताय प्रत्यग्भूताय प्रत्यक्दृक् तस्मै तथा च अनन्तः य

गुणारणिछन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय नैष्कर्म्यभावेन विवर्जितागमस्वयं प्रकाशाय नमस्करोमि १६ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमो ऽलाय स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते १७ आत्मात्मजाप्त गृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसंगविवर्जिताय मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय १८ यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवं ति किं त्वाशिषो रात्यपि देहमव्ययं करोतु मे ऽदभ्रदयो विमोक्षणं १९

आत्मनि तिष्ठन् आत्मानं अन्तरो यमयतीति भगवते सर्वेषां तनुभृतां नियमने समर्थाय तेषां मनसि स्थित त्वेपि तद्धेतोः परिच्छिन्नाय अतः स्थत्वेपि देहादिष्वासक्तैर्दुष्प्रापणाय प्राप्तुमशक्याय तत्र हेतुः गुणसं गेन विवर्जिताय अतएव मुक्तात्मभिः देहादिष्वनासक्तैः चिन्तितायातैः परिभावितं रूपमाह ज्ञानात्मने इत्यादि १८ इष्टां गतिं कामितं धर्मादिफलं प्राप्नुवन्त्येव न तु तावदेव किं तु प्रत्तैरकामितान्याशिषो ॥

रामः

एतावदहं भक्तिसुखानभिज्ञत्वेन वाञ्छामि यस्य त्वेकान्तभक्ताः न कंचिदर्थं वाञ्छंति तं परमेश्वरमीडे स्तौमीत्युत्तरेणान्वयः तेषां निष्कामत्वे हेतुः ये वै भगवतः सर्वज्ञान्मुक्तान् प्रपन्नाः सेवितवंतः २० अत्यद्भुतसुमंगलत्वप्रदर्शनार्थमक्षरत्वादिविशेषणानि २१ परिपूर्णत्वं प्रदर्शयन्नाह यस्येति फल्ग्व्या कं स्वल्पयैव कलयांशेन कृताः स जयतादिति तृतीयेनान्वयः २२ कथं कृता इत्यपेक्षायां दृष्टांतेनोपपादयत्यर्चिषोऽग्नेरिति प्रवाहे दृष्टांतः

एकांतिनो यस्य न कंचनार्थं वांछंति ये वै भगवत्प्रपन्नाः अत्यद्भुतं तच्चरितं सुमंगलं गायंत आनंदसमुद्रमग्नाः २० तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यं अतींद्रियं सूक्ष्ममिवातिदूरमनंतमाद्यं परिपूर्णमीडे २१ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः नामरूपविभेदेन फल्ग्व्या च कलया कृताः २२ यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यांति संयांत्यसकृत्स्वरोचिषः तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः २३ स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षंढो न पुमान्न जंतुः नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः २४

सवितुर्गभस्तय इति आनंत्ये निर्यांति उद्गच्छंति संयांति लीयंते गुणसंप्रवाहमेवाह बुद्धिर्मनः खानीति करणानि शरीरसर्गाः कार्यदेहप्रवाहो यतो भवति सः २३ अत एव देवादीनां मध्ये कोपि न भवेदिति न जंतुः लिंगत्रयशून्यः प्राणिमात्रमपि किं तु सर्वस्य निषेधे अवधित्वेन शिष्यत इति निषेधशेषः मायया ऽशेषात्मकः जयतात् मद्विमोचनायाविर्भवतु २४ ॥ ॥ ॥

नच गजाद्देहाच्छरीरस्य मोक्षणेनाहं जीवितुमिच्छामि तत्र हेतुः अमुया अंतर्बहिश्चाविवेकव्याप्तया गजजात्या
किं प्रयोजनं आत्मलोकस्यात्मप्रकाशस्य यदावरणमज्ञानं तस्यैव तु मोक्षमिच्छामि यस्य मोक्षस्य
कालेन नाशो नास्ति यद्वा देहस्य वधो देहनाशो न तु पुनर्देवात् किं तन्मोक्षप्रार्थनेन आत्मलोकावरणस्य तु
कालेन विप्लवो नास्ति अनेकानिवर्त्यत्वात् अतस्तस्यैव मोक्षमिच्छामीत्यर्थः २५ सोहं मुमुक्षुः विश्वं विश्व
रूपं अविश्वं विश्वव्यतिरिक्तं च विश्वं वेदो धनं उपकरणं यस्य तं विश्वस्यात्मानं च केवलं प्रणतोस्मि ननु

जिजीविषे नाहमिहामुया किमंतर्बहिश्चावृतयेभयोन्या इच्छामि कालेन न यस्य विप्लवस्तस्यात्म
लोकावरणस्य मोक्षं २५ सोहं विश्वसृजं विश्वमविश्वं विश्ववेदसं विश्वात्मानमजं ब्रह्म
प्रणतोस्मि परं पदं २६ योगरंधितकर्माणो हृदि योगविभाविते योगिनो यं प्रपश्यंति योगेशं तं
नतोस्म्यहं २७ नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय प्रपन्नपालाय दुरंत
शक्तये कदिंद्रियाणामनवाप्यवर्त्मने २८ नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतं तं दुरत्य
यमाहात्म्यं भगवंतमितोस्म्यहं २९

जानामि २६ योगं विना दुर्ज्ञानत्वादित्याह योगेन भगवद्धर्मेण रंधितानि दग्धानि कर्माणि येषां ते यं
प्रपश्यंति २७ तर्हि सर्वेषां योगमेव किं नास्ति तत्राह नेम इति हृ... असह्यो वेगो रागादिलक्षणो
यस्य तथाभूतं शक्तित्रयं यस्य तस्मै अखिलधीयां सर्वादिंद्रियाणां गुणाय शब्दादिरूपेण प्रतीय
मानाय अतः कदिंद्रियाणां कुत्सितानामिंद्रियाणां येषां तेषामनवाप्यवर्त्म यस्य यच्छक्त्या यस्य मायया २८

उपवर्णितं निर्विशेषं ... नापरं तत्त्वं येन तं विविधा चासौ लिंगभिदा मूर्तिभेदः तस्यामभिमानो ये-
षां ... नैते यदा नोपजग्मुः तत्र तदा अखिलामरमयः सर्वदेवमयः ... ३० दिविजैर्देवैः सह छंदोमयेन नि-
... ३१ ... स्वबाहुभ्यामुद्धृत्य ... ततः सहसावतीर्य ... अरिणा चक्रेण
विपाटितं मुखं यस्य ... उस्रियाणां देवानां ३३ अष्टमे तु तृतीयः ३ चतुर्थे तु ततो ग्राहः प्राप गंधर्वतां पुनः गजे ।

श्रीशुक उवाच ॥ एवं गजेंद्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिंगभिदाभिमानाः नैते यदो-
पसस्रुपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ३० तं तद्वदार्तमुपलभ्य जग-
न्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः छंदोमयेन गरुडेन समुह्यमानश्चक्रायुधोभ्य-
गमदाशु यतो गजेंद्रः ३१ सोंतःसरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रं
उत्क्षिप्य सांबुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते ३२ तं वीक्ष्य पीडितमजः
सहसावतीर्य सग्राहमाशु सरसः कृपयोज्जहार ग्राहाद्विपाटितमुखादरिणा गजेंद्रं संपश्यतां
हरिरमूमुचदुस्रियाणां ३३ इति श्रीभागवते महापुराणे अष्टमस्कंधे तृतीयोध्यायः ३ श्री-
शुक उवाच तदा देवर्षिगंधर्वा ब्रह्मेशानपुरोगमाः मुमुचुः कुसुमासारं शंसंतः कर्म तद्धरेः १
नेदुर्दुंदुभयो दिव्या गंधर्वा ननृतुर्जगुः ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमं २ योसौ ग्रा-
हः स वै सद्यः परमाश्चर्यरूपधृक् मुक्तो देवलशापेन हूहूर्गंधर्वसत्तमः ३

स्वपार्षदं कृत्वाह हरिः
निन्ये निजं पदं १ हूहूः श्रेष्ठो गंधर्वसत्तमः असौ देवलस्य शापेन ग्राहो जातः स वै ततः सद्यो मुक्तः सन् उत्तमश्लोके
... गायनेत्यन्वयः ४ एवं ह्येतिहासे ... कथा सरसि ... क्रीडन्नसौ ... प्रविष्टं देवलं पादे प्रगृह्य ... च ।

भा० ग०
अ० टी०
४

कथंभूतं यशसो धाम आश्रयं अतः कीर्तन्याः कीर्तनीया गुणाः सती कथा च यस्य तं ४ स्वं गंधर्वलोकं ५ कु। ॥
लाचले मलयाद्रावाश्रमो यस्य ८ तूष्णीं रहस्युपासीनं वीक्ष्य ९ शापमेवाह अकृता अशिक्षिता बुद्धिर्यस्य गजो
यथा स्तब्धमतिस्तथैवायं अतः स एव गजो भवत्विति शेषः दिष्टं दैवप्रापितं तदुपधारयन्नालोचयन् कौंजरीं।

प्रणम्य शिरसाधीशमुत्तमश्लोकमव्ययं अगायत यशोधाम कीर्तन्यगुणसत्कथं ४ सोनु ॥
कंपित ईशेन परिक्रम्य प्रणम्य तं लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ५ गजेंद्रो
भगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ६ स वै पूर्वमभू
द्राजा पांड्यो द्रविडसत्तमः इंद्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ७ स एकदाराधनकाल आ
त्मवान् गृहीतमौनव्रत ईश्वरं हरिं जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः
८ यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः तं वीक्ष्य तूष्णीमकृतार्हणा
दिकं रहस्युपासीनमृषिश्चुकोप ह ९ तस्मा इमं शापमदादसाधुरयं दुरात्माकृतबुद्धिरद्य विप्रा
वमंता विशतां तमिस्रं यथा गजः स्तब्धमतिः स एव १० श्रीशुक उ० एवं शप्त्वा गतोऽगस्त्यो भग
वान्नृप सानुगः इंद्रद्युम्नोपि राजर्षिर्दिष्टं तदुपधारयन् ११ आपन्नः कौंजरीं योनिमात्मस्मृ
तिविनाशिनीं हर्यर्चनानुभावेन यद्गजत्वेप्यनुस्मृतिः १२ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेना
पि पार्षदगतिं गमितेन युक्तः गंधर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतं स्वभवनं गरुडासनोगात्
१३ एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणं स्वर्ग्यं यशस्यं कलिकल्मषापहं
दुःस्वप्ननाशं कुरुवर्य शृण्वतां १४

योनिमापन्नः तर्हि पश्चात्कथं आत्मस्मृतिर्जातेत्यत आह हर्यर्चनस्यानुभा
वेनेति १२ अद्भुतं स्वभवनमगात् १३ एतद्गजराजमोक्षणं नाम कृष्णानुभावस्तवेरितः कथंभूतं तत्राह स्वर्ग्य

स्क० ८
राम:
४

अतः श्रेयस्कामाः एतद्यथावदनुकीर्तयन्ति १५ अनेन स्तवेन मोक्षो भवतीति कुतो ज्ञातं साक्षाद्भगवद्वचनादेवेत्याह इदमाहे
आदिश्यावस्थमाह प्रसंगादन्यस्यापि स्मरणे फलमुच्यते सर्वेषां द्वितीयान्तानां स्मरतीत्यष्टमेनान्वयः अव्यक्तं माया अव्य

यथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये १५ इदमाह हरिः
प्रीतो गजेन्द्रं कुरुसत्तम शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः १६ श्रीभगवानुवाच ये मां त्वां च स
रश्चेदं गिरिकन्दरकाननं वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् १७ शृङ्गाणीमानि धिष्ण्यानि
ब्रह्मणो मे शिवस्य च क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरं १८ श्रीवत्सं कौस्तुभं मालां गदां कौ
मोदकीं मम सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरं १९ शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयां
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च २० मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे कर्माण्यनन्त
पुण्यानि सूर्यं सोमं हुताशनं २१ प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययं दाक्षायणीर्धर्मपत्नीः
सोमकश्यपयोरपि २२ गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणं ध्रुवं ब्रह्मऋषीन्सप्त पुण्य
श्लोकांश्च मानवान् २३ उत्थायापररात्रान्ते प्रयताः सुसमाहिताः स्मरन्ति मम रूपाणि मुच्यन्ते
ह्येनसोऽखिलात् २४ ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुध्य निशात्यये तेषां प्राणात्यये चाहं ददा
मि विमलां मतिं २५ श्रीशुक उवाच इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमं हर्षयन्विबु
धानीकमारुरोह खगाधिपं २६ इति श्रीभागवते महापुराणे अष्टमस्कन्धे गजेन्द्रमोक्षणे चतुर्थोऽध्यायः ४

यं धर्मभक्तिलक्षणं सोमकश्यपयोरपि पत्नीर्दाक्षायणीः २२ सितवारणमैरावतं सुसमाहिताः एकाग्रचि
त्ताः मम रूपाणि मद्विभूतीः २४ जलजोत्तमं शङ्खवरं प्रध्मोपवादयित्वा २६ इत्यष्टमस्कन्धे चतुर्थः ४

अस्मिन्नाख्यानमष्टाभिरध्यायैरनुवर्ण्यते स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः १ पंचमे पंचमस्याथ षष्ठस्य च कथ्य
मन्वन्तु विप्रशापाच्च निःश्रीकैः कृता देवैः हरिस्तुतिः २ तामससोदरः भ्राता तस्य वैकुंठसंज्ञस्य

श्रीशुक उवाच राजन्नुदितमेतत्ते कर्माघनाशनं हरेः गजेंद्रमोक्षणं पुण्यं रैवतं त्वंतरं शृणु १
पंचमो रैवतो नाम मनुस्तामससोदरः बलिविंध्यादयस्तस्य सुता हार्जुनपूर्वकाः २ विभुरिंद्रः
सुरगणा राजन्भूतरयादयः हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ३ पत्नी विकुंठा
शुभ्रस्य वैकुंठैः सुरसत्तमैः तयोः स्वकलया जज्ञे वैकुंठो भगवान्स्वयं ४ वैकुंठः कल्पितो
येन लोको लोकनमस्कृतः रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ५ तस्यानुभावः
कथितो गुणाश्च परमोदयाः भौमान्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ६ षष्ठश्च चक्षुषः
पुत्रश्चाक्षुषो नाम वै मनुः पूरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ७ इंद्रो मंत्रद्रुमस्तत्र
देवा आप्यादयो गणाः मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः ८ तत्रापि देवः संभूत्यां वैराज
स्याभवत्सुतः अजितो नाम भगवानंशेन जगतःपतिः ९ पयोधिं येन निर्मथ्य सुराणां साधि
ता सुधा भ्रममाणोंऽभसि धृतः कूर्मरूपेण मंदरः १० श्रीराजोवाच यथा भगवता ब्रह्मन्म
थितः क्षीरसागरः यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ११ यथामृतं सुरैः प्राप्तं किंचान्य
द्भवत्ततः एतद्भगवतः कर्म वदस्व परमाद्भुतं १२ त्वया संकथ्यमानेन महिम्ना सात्व
तांपते: नातितृप्यति मे चित्तं सुचिरं तापतापितं १३ हरेरनुभावः सनकादिशापेन दैत्यतां प्राप्ता
भ्यां स्वपार्षदाभ्यां वराहादिरूपेणायुद्धादिलक्षणः गुणाश्च ब्रह्मण्यतादयः परमोदयाश्च महोदयः कथि
तास्ते मया पठ्यकथा इत्यर्थः ६ पयोधिमिति अम्बुचरात्मना कूर्मरूपेण सुराणां साधिता सुधा येन उक्ता मुख्या पि च चित्त

नोत्तिष्ठेरन्न पुनर्जीवितवंत इत्यर्थः १५ दुर्वाससा हि कदाचिन्मार्गे गच्छता इंद्रं दृष्ट्वा स्वकंठस्था माला तस्मै दत्ता ते
न च श्रीमदेनानादृत्यैरावतस्य कुंभयोर्निक्षिप्ता स च गजो मत्तः पद्भ्यां मालां चूर्णीचकार ततः कुपितो दुर्वासास्तं श
शाप त्रिभिर्लोकैः सह निःश्रीको भवेति तदेतदाह यदा दुर्वाससः शापेनेति इज्यादयः यागाद्याः १६ असुरानय।
थादेवं वैलक्षण्येन वृद्धान् निलोकयेत्यर्थः १९ हरिं शरणं गताः संतो यथापूर्वं प्राप्स्याम इति हर्षेणो।

श्रीसूत उवाच एवं पृष्टो भगवान्वैद्वैपायनसुतो द्विजाः अभिनंद्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे १४ श्री
शुक उवाच यदा युद्धेऽसुरैर्देवा वध्यमानाः शितायुधैः गतासवो निपतिता नोत्तिष्ठेरन्स्म भूयशः १५
यदा दुर्वाससः शापात्सेंद्रा लोकास्त्रयो नृप निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः १६ नि
शाम्यैतत्सुरगणा महेंद्रवरुणादयः नाध्यगच्छन्स्वयं मंत्रैर्मंत्रयंतो विनिश्चयं १७ ततो ब्रह्मसभां
जग्मुर्मेरोर्मूर्धनि सर्वशः सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने १८ स विलोक्येंद्रवाय्वादीन्निः
सत्वान्विगतप्रभान् लोकानमंगलप्रायानसुरानयथा विभुः १९ समाहितेन मनसा संस्मरन्पुरु
षं परं उवाचोत्फुल्लवदनो देवान्स भगवान्परः २० अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रु
मघर्मजातयः यस्यावतारांशकलाविसर्जिता व्रजाम सर्वे शरणं तमव्ययं २१ न यस्य वध्यो न च र
क्षणीयो नोपेक्षणीयादरणीयपक्षः अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्वतमांसि काले २२

त्फुल्लं विकसितं वदनं यस्य २० मनुष्यादयो जरायुजांडजोद्भिज्जस्वेदजाः यस्यावतारः पुरुषः तस्यांशो ब्र।
ह्मा तस्य कला मरीच्यादयः ताभिर्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः २१ ननु तर्हि सर्वेष्वसौ समः स्या
त् किं तच्छरणाश्रयेण सत्यं यद्यप्येवं तथापि अद्यास्मत्पक्षपाती भविष्यतीत्याशयेनाह न यस्येति द्वाभ्यां

अ॰ स्थितिपालनस्य क्षणः कालः अतः सुरप्रियः सन् स्वीयानां नः शं सुखं करिष्यति २३ यत्र क्षीराब्धौ हरेर्वासस्तदेव तत्त
मसः परं स्थानं यद्वा लोकालोकालोकात्परतो वर्तमानत्वात्तमसः परं स्थानं जगाम २४ दैवीभिर्लोके प्रसिद्धाभिर्वैदिकीभि
र्गीर्भिः स्तुतिमकरोत् २५ देववरं नमामहे हे देववर त्वां नमाम इति वा वरत्वे हेतुः सत्यं कुतो ऽविक्रियं यतः सत्यं कुतः अनंतः
आद्यं च अनादि आद्यंतवतो हि वृद्ध्यादिविक्रिया भवति किंच गुहाशयं सर्वांतरं कुतः निष्कलं निरुपाधित्वं कुतः
मनोग्रयानं मनसोपि पूर्वावस्थ मनः प्राप्तिस्थाने ततः प्रागेव विद्यमानत्वात् तथा च श्रुतिः अनेजदेकं मनसो जवीयो

अयं तु तस्य स्थितिपालनक्षणः सत्वं जुषाणस्य भवाय देहिनां तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो
धास्यति शं सुरप्रियः २३ श्रीशुक उवाच इत्याभाष्य सुरान्वेधाः सह देवैररिंदम अजितस्य पदं सा
क्षाज्जगाम तमसः परं २४ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय वै विभो स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्वव
हितेंद्रियः २५ श्रीब्रह्मोवाच अविक्रियं सत्यमनंतमाद्यं गुहाशयं निष्कलमप्रतर्क्यं मनोग्र
यानं वचसानिरुक्तं नमामहे देववरं वरेण्यं २६ विपश्चितं प्राणमनोधियात्मनामर्थेंद्रियाभास
मनिद्रमव्रणं छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे २७ ॥ ॥ ॥

नैनद्देवा आप्नुवन्पूर्वमर्षत् तद्धावतोन्यानत्येति तिष्ठदिति वचसा अनिरुक्तं अविषयत्वात् यद्वाचानभ्युदि
तं येन वागभ्युद्यत इति श्रुतेः मनोवचसोरगोचरत्वात् एवं कार्यं यत्र वा सर्वेषां हेतुहेतुमद्भावः २६ किंच प्राणादी
नां विपश्चितं ज्ञातारं आत्मा अहंकारो देहो वा ननु तद्व्यतिरिक्तं ज्ञेयमस्तीत्याह अर्था विषयाः इंद्रियाणि त
द्ग्राहकाणि तदुभयरूपेणाभासत इति तथाभूतं तथाप्यनिद्रं स्वप्नसुषुप्तवदज्ञानरहितं कुतः अव्रणं अदेहं अ
तदेवाक्षरं खमिव व्यापिनं च सर्वत्र हेतुः यत्र यस्मिन् गृध्रपक्षौ जीवपक्षपातिनौ छायातपौ अविद्या च त

अर्पयन्नवेदेति यदुक्तं तत्प्रपंचयन्नाह ३१ इमे वयं देवाः ऋषयश्च यस्य प्रियया तन्वा सत्त्वेनैव सृष्टाः अपि बहिरन्तश्च
सत्प्रकाशाभ्यामाविः प्रकटमपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्मः इतरप्रधानाः रजस्तमोमयाः कुतो विद्युः तेन
मामेति पूर्वेणान्वयः ३१ इदानीं वैराजरूपेण स्तुवन्नात्मार्पयति पादौ महीति द्वादशभिः यत्र महत्यां जरायुजादिभू
तसर्गः स महापुरुषः पादौ सेन्नः प्रसीदतु आत्मतन्त्रः पादादिमत्त्वेपि न तत्परतन्त्रः कुतः ब्रह्म अप्रच्युतब्रह्मरूपः

इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरंतराविः गतिं न सूक्ष्मामृषयश्च विद्महे कुतोसु
राद्या इतरप्रधानाः ३१ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः स वै महापूरुष
आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ३२ अंभस्तु यद्रेत उदारवीर्यं सिध्यंति जीवंत्युत व
र्द्धमानाः लोका यतोथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ३३ सोमं मनो य
स्य समामनंति दिवौकसां यो बलमंध आयुः ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभू
तिः ३४ अग्निर्मुखं यस्य तु जातवेदाः जातः क्रियाकांडनिमित्तजन्मा अंतःसमुद्रेनुपचन्स्वधा
तून् प्रसीदतां नः स महाविभूतिः ३५

तत्कुतः महती विभूतिरैश्वर्यं यस्य सः ३२ उदारं वीर्यं शक्तिर्यस्य तत्
रेतो यस्य रेतः प्रसीदतु उदारवीर्यतामाह यतोम्भसो लोकाः सिध्यन्ति जायन्ते ३३ यः सोमो देवानामन्धः अन्नं अ
मृतं बलमायुश्च नगानां वृक्षाणां प्रकर्षेण जनयति वर्द्धयतीति प्रजनः तं यस्य मनः समामनन्ति स प्रसीदतु ३४ अ
ग्निर्यस्य मुखं जातः कथंभूतः जातवेदा धनं यस्मात् क्रियाकांडं तस्य प्रतिपाद्यं कर्म तन्निमित्तं जन्म यस्य अंतःसमुद्रे उ

एष तरणिर्यस्य चक्षुरासीत् कथंभूतः देवयानं अर्चिरादिमार्गे देवता त्रयीमयः सैषा त्रय्येव विद्या तपतीति श्रुतेः ब्रह्म
णो धिष्ण्यं उपासनास्थानं य एषोऽन्तरादित्ये हिरण्मयः पुरुष इति श्रुतेः मुक्तेर्द्वारं देवयानत्वात् अमृतं च पुण्यलोक
त्वात् मृत्युश्च कालात्मकत्वात् एवंभूतस्तरणिर्यस्य चक्षुः सः ३६ कथंभूतो वायुः चराचराणां सह ओज आदि धर्मवान् प्रा
णः ये प्राणं वयं तु आद्यधिष्ठातारो देवाः सम्राजं भृत्या इव अन्वास्म अनुसृत्य स्थिताः एवंभूतो वायुः यस्य प्राणादभू

यस्य चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यं द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महा
विभूतिः ३६ प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः अन्वास्म सम्राजमिवा
नुगा वयं प्रसीदतां नः स महाविभूतिः ३७ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः
प्राणेंद्रियात्मासुशरीरकेतं प्रसीदतां नः स महाविभूतिः ३८ बलान्महेंद्रस्त्रिदशाः प्रसादान्म
न्योर्गिरीशो धिषणाद्विरिंचः खेभ्यश्छंदांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ३९
श्रीर्वक्षसः पितरश्छाययासन् धर्मः स्तनादितरः पृष्ठतो भूत् द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्र
सीदतां नः स महाविभूतिः ४० विप्रो मुखाद्ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ऊर्वो
र्विडोजोंघ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ४१

त्सः ३७ खानि देहगतच्छिद्राणि प्राणाः पंचवृत्तिः
इंद्रियाणि च आत्मा मनः असवो नागकूर्मादयः शरीरं चैते यो केतं आश्रयभूतं खं यस्य पुरुषस्य नाभ्याः प्रजज्ञे
सः ३८ यस्य बलात् महेंद्रो जज्ञे छंदांसि ऋषयश्च खेभ्यः कः प्रजापतिः ३९ इतरः अधर्मः ४० विट् वैश्यः
ओजो नैपुण्यं तस्य वृत्तिः अंघ्रिजौ वित्तयौ अवेदः शूद्रो अवेदः वेदत्वातिरिक्ता शुश्रूषा च वृत्तिः तद्वौ ते

भा०गी०
स्क० टी०
१२

उपरिउत्तरोष्ठात् नस्तनासिकातोद्युतिःकांतिःपशव्यःपशूनांहितःकामःस्पर्शेनाभूत् ४२ द्रव्यंभूतानिवयः
कालःविशेषंलौकिकंप्रपंचं यद्यस्माद्दुर्विभाव्यं कुतःप्रबुधापबाधं विद्वद्भिरपोह्यमानंयादृशंतैरप्रबुधानांमायेत्यव
बोधोयस्मिन्निरस्यः ४३ तदेवंसप्रपंचमुपवर्ण्यनिष्प्रपंचमुपवर्णयन्प्रणमति नमोस्त्विति वृत्तिभिर्दर्शना
दिभिःनभस्वान्वायुःतस्येवऊतिःलीलायस्यतस्मै ४४ तेसस्मितंमुखांबुजं दिदृक्षूणांनोस्मच्चक्षुरादिकर

लोभोधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तःपशव्यःस्पर्शेनकामः भ्रुवोर्यमःपक्ष्मभवस्तुकालःप्रसी
दतांनःसमहाविभूतिः ४२ द्रव्यंवयःकर्मगुणान्विशेषंयद्योगमायामहितंवदंति यद्दुर्विभा
व्यंप्रबुधापबाधंप्रसीदतांनःसमहाविभूतिः ४३ नमस्तुतस्माउपशांतशक्तयेस्वाराज्यलाभ
प्रतिपूरितात्मने गुणेषुमायारचितेषुवृत्तिभिर्नसज्जमानायनभस्वदूतये सत्वंनोदर्शयात्मा
ग।३ नमस्मत्करणगोचरं प्रपन्नानांदिदृक्षूणांसस्मितंतेमुखांबुजं ४५ तैस्तैःस्वेच्छाभूतैःरूपैःका
लेकालेस्वयंविभो कर्मदुर्विषहंयन्नोभगवांस्तत्करोतिहि ४६ क्लेशभूर्यल्पसाराणि
कर्माणिविफलानिच देहिनांविषयार्तानांनतथैवार्पितंत्वयि ४७

णगोचरंयथाभवत्येवंचात्मानंदर्शय ४५ भक्तेच्छानुवर्तित्वंचतववक्तृशोहृष्टमेवेत्याह तैस्तैरिति य
न्नोदुर्विषहमशक्यंकर्मतद्भगवान्स्वयमेवकरोतिहि ४६ नचवाहिर्मुखानामिवत्वद्भक्तानामस्माकं
त्वदर्पितानिकर्माणिविपरीतफलानिभवितुमर्हंतीत्याह क्लेशोभूरिर्येषुअल्पंसारंफलं
येषुयद्वाविफलान्यवसकामानांकर्माणित्वय्यर्पितंतुनैवतथा ४७

रामः
१२

तत्रावैफल्यमुपपादयति अवमः अल्पोपि कर्मकल्पः कर्माभासोपि ईश्वरार्पितश्चेद्विफलाय अमायनकल्प
ते हि यस्मात्स एवेश्वरः पुरुषस्यात्मा अतएव दयितो हितश्च न त्वात्मनि दयिते हिते चार्पितं निष्फलं स्यात् २१
अनंतफलत्वमाह यथा हि मूलावसेचनं स्कंधानां शाखानां च भवति ४९ एवं सत्यपि त्वदर्पितकर्म
णां त्वदेकान्तानामस्माकं यन्निमित्तमिदं दुःखमिति त्वमेव वेत्सीत्याशयेनाह नमइति दुर्वितर्क्याण्यात्मक

नावमः कर्मकल्पोपि विफलायेश्वरार्पितः कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः
४८ यथा हि स्कंधशाखानां तरोर्मूलावसेचनं एवमाराधनं विष्णोः सर्वेषामात्मनश्च
हि ४९ नमस्तुभ्यमनंताय दुर्वितर्क्यात्मकर्मणे निर्गुणाय गुणेशाय सत्त्वस्थाय च सांप्रतं
५० इति श्रीभागवते महापुराणे अष्टमस्कंधे मन्वन्तरवर्णने पंचमोऽध्यायः ५ श्रीशुक उ
वाच एवं स्तुतः सुरगणैर्भगवान् हरिरीश्वरः तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः १ तेनै  २५
व सहसा सर्वे देवाः प्रतिहतेक्षणाः नापश्यन् खं दिशः क्षोणीमात्मानं च कुतो विभुं २ विरिं
चो भगवान्दृष्ट्वा सह शर्वेण तां तनुं स्वच्छां मरकतश्यामां कंजगर्भारुणेक्षणां ३ तप्तहे
मावदातेन लसत्कौशेयवाससा प्रसन्नचारुसर्वांगीं सुमुखीं सुन्दरभ्रुवं ४ ॥ ॥

णां स्वभावचेष्टितानि यस्य तस्मै ५० इत्यष्टमस्कंधे भावार्थदीपिकायां पंचमोऽध्यायः ५ षष्ठे पुनः
टी० स्तुतिं विष्णोराविर्भूते सुरैः कृता तन्मन्त्राद्वा सुरैः साकं समन्त्रार्थं महोद्यमः १ सहस्राणामर्काणामुदये द्युति
रिव द्युतिर्यस्य १ महसा तेजसा प्रतिहतानीक्षणानि चक्षूंषि २ तामाविर्भूतां तनुं विरिंचो तुष्टावेति पं
चमेनान्वयः कंजगर्भवदरुणे ईक्षणे यस्याः ३ तप्तहेमवदवदातेन पीतेन लसता कौशेयवाससा।

त्रं महांतो मणयो यस्मिन् तेन किरीटेन कर्णाभरणे कुंडले ताभ्यां निर्भातौ यौ कपोलौ ताभ्यां श्रीर्मुखांबुजे।
यस्याः ५ कौस्तुभः आभरणं कंठे यस्याः लक्ष्मीं वक्षसि बिभ्रतीं ६ देवप्रवरो ब्रह्मा सर्वांगैरवनिंगतैः साष्टां
गंप्रणतैः अनावरावरासे यन्नाभेः ताभ्यः इति ब्रुवन् ब्रह्माभिप्रेति निस्पृहत्वविभुत्वे भगवतस्ततो ७ श्रीमूर्ते
रवमाविर्भाव एव न त्वस्मदादिवज्जन्मादि तत्रास्तीत्याह नजातजन्मा इत्यादि यस्य कृतः अगुणाय अतो निर्वाण
सुखस्यार्णवाय अपारमात्मस्वरूपायेत्यर्थः तथापि अणोरणिम्ने अतिसूक्ष्माय दुर्ज्ञेयत्वात् वस्तु।

महामणिकिरीटेन केयूराभ्यां च भूषितं कर्णाभरणनिर्भातकपोलश्रीमुखांबुजं ५ कां
चीकलापवलयहारनूपुरशोभितं कौस्तुभाभरणं लक्ष्मीं बिभ्रतीं वनमालिनं ६ सुद
र्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासितं तुष्टाव देवप्रवरः सशर्वः पुरुषं परं ७ सर्वामरगणैः
साकं सर्वांगैरवनिंगतैः ७ श्रीब्रह्मोवाच अजातजन्मस्थितिसंयमाय गुणाय निर्वा
णसुखार्णवाय अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ८ रूपं तवैतत्पु
रुषर्षभेज्यं श्रेयोर्थिभिर्वैदिकतांत्रिकेण योगेन धातः सह नस्त्रिलोकान् पश्याम्यमुष्मिन्नु
ह विश्वमूर्तौ ९

तत्तु अपरिगण्यं दुरधिगतं धाम मूर्तिर्यस्य तस्मै न चैतदसंभावितं यतो महानचिंत्योनुभावो यस्य ८
तन्मूर्तेः सनातनत्वमपरिमेयत्वं चोपपादयति रूपमिति हे पुरुषर्षभ हे धातः एतत्तव रूपं वैदिकेन तांत्रि
केण च योगेन उपायेन श्रेयोर्थिभिः सदा इज्यं पूज्यं अतो नेदमिदानीमपूर्वं जातमिति भावः ननु पूर्वं
देवाः पूज्यत्वेन प्रसिद्धाः सत्यं सर्वमत्रैवांतर्भूतमित्याह उ अहो हस्फुटं अमुष्मिंस्त्वयि नोस्मान् त्रिलो

विश्वमूर्तित्वमेवाह त्वमीति घटस्य मृत्तिका यथा आदिरंतश्च मध्यं च तथा त्वमस्य जगतः तत्र हेतुः परस्मा
त्प्रधानादपि परः ३ मृत्तिकादृष्टान्तेन परिणामं प्राप्नुवारयति त्वमिति त्वया स्वाधीनया अनन्तगुणात्म
या परिणामेष्वगुणमेव त्वां युक्ताः पश्यन्ति मनीषिणो विवेकिनः विपश्चितः शास्त्रज्ञाः ९ एतदेव सदृ
ष्टान्तमाह यथाग्निं काष्ठे मंथनेन क्षीरं च गोषु दोहनादिना भुवि अन्नं व्रीह्यादिकर्षणादिना अंबु

त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्तरासीदिदमात्मतंत्रे त्वमादिरंतो जगतोस्य मध्यं घटस्य
मृत्स्नेव परः परस्मात् १० त्वं माययात्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः पश्यंति यु
क्ता मनसा मनीषिणो गुणव्यवायेप्यगुणं विपश्चितः ११ यथाग्निमेधस्यमृतं च गोषु भुव्यन्नमं
बूद्यमने च वृत्तिं योगैर्मनुष्या अधियंति हि त्वां गुणेषु बुद्ध्या कवयो वदंति १२ तं त्वा वयं नाथ
समुज्जिहानं सरोजनाभातिचिरेप्सितार्थं दृष्ट्वा गता निर्वृतिमेव सर्वे गजा दवार्ता इव गां
गमंभः १३ स त्वं विधत्स्वाखिललोकपाला वयं यदर्थास्तव पादमूलं समागतास्ते
बहिरंतरात्मन् किं चान्यद्विज्ञाप्यमशेषसाक्षिणः १४

उद्यमनेन खननेन उद्यमेनेप्युत्थकारे वा गीत्यादिना वृत्तिं जीविकां यद्वा अंबु उद्यमने घटीयंत्रादिना
दृशो योगेरुपायैर्मनुष्या अधियंति प्राप्नुवंति तथा कवयस्त्वां बुद्ध्या गुणेष्वधियंतीति वदंति च १२ हे
नाथ सरोजनाभ आतिचिरादीप्सितमर्थं तं योगैकप्राप्यं त्वां समुज्जिहानं आविर्भवंतं प्रत्यक्षमीक्ष्य
दृष्ट्वा अद्य वयं निर्वृतिं गताः दवार्ताः दावाग्निपीडिताः १३ यदर्थं यत्तत्कार्यं यतेतेति चेत्तत्राह हे अंतरा
त्मन् अशेषसाक्षिणस्तव बहिः किंचान्यद्विज्ञाप्यमस्ति १४ ॥

एवंमेव किंचित्कुरुतेति चेत्तत्राह अहमिति अग्नेः केतवो विस्फुलिंगा इव तत्वतो वयं पृथग्विभाताः सं-
तः आत्मनः शं क्षेमं किं वा विद्मः अतस्त्वमेव द्विजानां देवानां च मंत्रं विधत्स्व ऽस्मदेकुरु तत्सुपायमुपदि-
शेत्यर्थः १५ हृदयं मंत्रं उपदेशं अस्त्वाभिप्रेतं यथा तत्रैव विज्ञाय जगाद संवृतानि नियमितानि सर्वा-
णि कारकाणींद्रियाणि येषां तान् १६ ईश्वरस्यापि तथैवाभिप्रेतमित्याह एक एवेश्वरः समर्थोपि १७

अहं गिरित्रश्च सुरादयो ये दक्षादयोग्नेरिव केतवस्ते किं वा विदामेश पृथग्विभाता विधत्स्व
शं नो द्विजदेवमंत्रं १५ श्रीशुक उवाच एवं विरिंच्यादिभिरीडितः सन् विज्ञाय तेषां हृदयं
यथैव जगाद जीमूतगंभीरया गिरा बद्धांजलीन्संवृतसर्वकारकान् १६ एक एवेश्वरस्त
स्मिन्सुरकार्ये सुरेश्वरः विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः १७ श्रीभगवानुवा
च हंत ब्रह्मन्नहो शंभो हे देवा मम भाषितं शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः
१८ यात दानवदैतेयैस्तावत्संधिर्विधीयतां कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः
१९ अरयोपि हि संधेयाः सति कार्यार्थगौरवे अहिमूषकवद्देवा ह्यर्थस्य पदवीं गतैः २०
अमृतोत्पादने यत्नः क्रियतामविलंबितं यस्य पीतस्य वै जंतुर्मृत्युग्रस्तोमरो भवेत् २१ क्षि
प्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः मंथानं मंदरं कृत्वा नेत्रं कृत्वा तु वासुकिं सहा
येन मया देवा निर्मंथध्वमतंद्रिताः २२

हे सुराः देवाः अन्ये च गंधर्वादयः वः आत्मनः स्वतो यावद्वो
वृद्धिर्भवति १९ अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तैः ततः पश्चादहिमूषकवद्दुष्टघातकभावेन वर्तितव्यमि-
तिशेषः यद्वा पेटिकायां निरुद्धाहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण संधिं विधत्ते पश्चात्तमेव कदाचि-
द्भक्षयति तथार्थमार्गप्रवृत्तैः प्रथमं संधेया इत्यर्थः ततस्तैः सह यत्कार्यं तदाह अमृतोत्पादन इति यथाम्-

ननुतर्हितेषाममृतपानेनाममृताः स्युस्तत्राह क्लेशभाजइति बलिभिःसहकारिभिःसाध्या अर्थास्तदनुसरणं। विनानसिद्ध्यंतीतिकृत्वासामादिकमुपदिशति यूयमितिद्वाभ्यांहेसुराः २३ संरंभेणासंभ्रमेणसांत्वयासा ममार्गेणायथासिद्ध्यंति वस्तुषुमथनादुत्पन्नेषुसुरास्तुबलिमुपेयुःउपजग्मुः २७ असंयत्तानपि दृष्ट्वाश्लो

क्लेशभाजोभविष्यंतिदैत्यायूयंफलग्रहाः यूयंतदनुमोदध्वंयदिच्छंत्यसुराःसुराः २३ नसंरंभे
णसिद्ध्यंतिसर्वेर्थाःसांत्वयायथा नभेतव्यंकालकूटाद्विषाज्जलधिसंभवात् २४ लोभःका
र्योनवोजातुरोषःकामस्तुवस्तुषु २५ श्रीशुकउवाच इतिदेवान्समादिश्यभगवान्पुरुषोत्तमः
तेषामंतर्दधेराजन्स्वच्छंदगतिरीश्वरः २६ अथतस्मैभगवतेनमस्कृत्यपितामहः भवश्चज
ग्मतुःस्वंस्वंधामोपेयुर्बलिंसुराः २७ दृष्ट्वारीनप्यसंयत्ताञ्जातक्षोभान्स्वनायकान् न्यषेधद्दै
त्यराट्श्लोक्यःसंधिविग्रहकालवित् २८ तेवैरोचनिमासीनंगुप्तंचासुरयूथपैः श्रियापर
मयाजुष्टंजिताशेषमुपागमन् २९ महेंद्रःश्लक्ष्णयावाचासांत्वयित्वामहामतिः अभ्यभाषत
तत्सर्वंशिक्षितंपुरुषोत्तमात् ३० तदरोचतदैत्यस्यतत्रान्येयेसुराधिपाः शंबरोरिष्टनेमिश्चये
चत्रिपुरवासिनः ३१ ततोदेवासुराःकृत्वासंविदंकृतसौहृदाः उद्यमंपरमंचक्रुरमृतार्थेप
रंतप ३२ ततस्तेमंदरगिरिमोजसोत्पाट्यदुर्मदाः नदंतउदधिंनिन्युःशक्ताःपरिघबाहवः
३३ दूरभारोद्वहश्रांताःशक्रवैरोचनादयः अपारयंतस्तंवोढुंविवशाविजहुःपथि ३४ निपतन्स
गिरिस्तत्रबहूनमरदानवान् चूर्णयामासमहताभारेणकनकाचलः ३५

क्यःकीर्त्यर्हःवैरोचनिं
बलिंजितमशेषंत्रैलोक्यंयेनतं २९ तत्सर्वममृतोन्मथनादि ३० तत्रयेऽन्येवासुराधिपाःपौलोमकालेयाद

यश्चतेभ्यश्चारोचयत् संविदंसमयंपरिघाइवबाहवोयेषां ३५ ॥

विसर्जितः प्रस्थापितः सुपर्णोनत्रस्थितेवासुकेरागमनायोगादितिभावः ३९ इत्यष्टमेषष्ठोऽध्यायः ६ सप्तमेमथ
नोद्भूतविषभीत्याखिलेर्जनैः स्तुतः सन्कृपयारुद्रः पपौविषमितीर्यते फलभागेनतवाप्यमृतेभागोभविष्यतीतिस

तांस्तथाभग्नमनसोभग्नबाहूरुकंधरान् विज्ञायभगवांस्तत्रबभूवगरुडध्वजः ३६ गिरिपा
तविनिष्पिष्टान्विलोक्यामरदानवान् ईक्षयाजीवयामासनिर्जरान्निर्व्रणान्यथा ३७ गिरिंचा
रोप्यगरुडेहस्तेनैकेनलीलया आरुह्यप्रययावब्धिंसुरासुरगणैर्वृतः ३८ अवरोप्यगिरिंस्कं
धात्सुपर्णःपततांवरः ययौजलांतउत्सृज्यहरिणासविसर्जितः ३९ इतिश्रीभागवतेमहापुरा
णेऽष्टमस्कंधेऽमृतमथनेमंदराचलानयनेषष्ठोऽध्यायः ६ श्रीशुकउवाच तेनागराजमाम
न्त्र्यफलभागेनवासुकिं परिवीयगिरौतस्मिन्नेत्रमब्धिंमुदान्विताः १ आरेभिरेसुरायत्ताअमृ
तार्थेकुरूद्वह हरिःपुरस्ताज्जगृहेपूर्वंदेवास्ततोऽभवन् २ तन्नैच्छन्दैत्यपतयोमहापुरुषचेष्टि
तं नगृह्णीमोवयंपुच्छमहेरंगममंगलं ३ स्वाध्यायश्रुतसंपन्नाःप्रख्याताजन्मकर्मभिः इ
तितूष्णींस्थितान्दैत्यान्विलोक्यपुरुषोत्तमः ४ स्मयमानोविसृज्याग्रंपुच्छंजग्राहसामरः =
कृतस्थानविभागास्तएवंकश्यपनंदनाः ५ ममंथुःपरमायत्ताअमृतार्थंपयोनिधिं ५ म
थ्यमानेऽर्णवेसोऽद्रिरनाधारोह्यपोऽविशत् ध्रियमाणोपिबलिभिर्गौरवात्पाण्डुनंदन ६ ते =
सुनिर्विण्णमनसःपरिम्लानमुखश्रियः आसन्स्वपौरुषेनष्टेदैवेनातिबलीयसा ७ ७

मंत्र्य वासुकिंनेत्रंगिरेःपरिवीयसंवेष्ट्य अब्धिंमथितुमारेभिरे वासुकेर्मुखंतीव्रंदैत्यान्ग्राहयितुमेव। पू
पूर्वंहरिःपुरस्तान्मुखंजगृहे ततोभवन्मुखंजगृहुः २ कृतोधारतोस्थानविभागोयैः ५ दैवेनहेतुनास्वपौरुषेनष्टे ७

विघ्नेशस्य विधितेन रचितं विघ्नस्य वितथ्यः सत्याभिसंधिः संकल्पो यस्य ८ लक्षयोजनप्रस्तारो विस्तारो यस्याः सा
ति तथा तेन पृष्ठेन ९ तस्या गिरेरावर्तनं भ्रमणं अगकंड्पनं येन १० आसुरेण असुराकारेण दैवेन देवाकारेण रू
पेण विष्णुन् आत्मनि देवदैत्यमध्ये गोत्रे दार्ढ्यरूपेण नेत्रे ऽभेद्यावाधरूपेण ११ परेण हरिणा क्षोभितेन नक्राणां च

त्रिलोकाविघ्नेशाविधिं तदेश्वरो दुरन्तवीर्यो वितथ्याभिसंधिः कृत्वा वपुः काच्छपमद्भुतं महत् प्रवि
श्य तोयं गिरिमुज्जहार ८ तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः दधार
पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ९ सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं
गिरिमङ्ग पृष्ठतः बिभ्रत् तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः १० तथासुरानावि
शदासुरेण रूपेण तेषां बलवीर्यमीरयन् उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः
११ उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टु
वद्भिः सुमनोभिवृष्टः १२ उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ममन्थुर
ब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रं १३ अहीन्द्रसाहस्रकठोरदृङ्मुखश्वासाग्नि
धूमाहतवर्चसोऽसुराः पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरलाइवाभवन् १४
देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् समभ्यवर्षन् भगवद्वशा
घना ववुः समुद्रोर्म्युपगूढवायवः १५ ॥ ॥

कं समूहो यस्मिन् १३ दृशश्च मुखानि च श्वासाश्च अहीन्द्रस्य
साहस्रं अपरिमिताः कठोराये दृगादयः तेभ्यो निर्गता येऽग्निधूमास्तैराहतं वर्चो येषां ते सरलाद्रु
मविशेषाः १४ देवांस्तु भगवद्वशा घनाः समभ्यवर्षन् समुद्रोर्मिभिरुपगूढा वायवश्च शीतला ववुः

सा ६

धृतोद्रिर्येन स धृताद्रिः भगवान्परमपुरुषोऽनन्तरमशोभतेत्यन्वयः कथंभूतः कनकपरिधिः पीतवासाः कर्णौ
विद्योतमाना विद्युत्कुण्डललक्षणा यस्य स तथा मूर्ध्नि भ्राजन्तो विलुलिताः कचा यस्य स तथा जैत्रैर्जिष्णुभिः
दंदशूकं सर्पं प्रतिगिरिः प्रतिद्वंद्वी पर्वतः १७ हालाहलमित्याह्वो नाम यस्य संभ्रान्ता उद्वृत्ता मकरादयश्च य

च: २

मथ्यमानात्तदा सिन्धोर्देवासुरवरूथपैः यदा सुधा न जायेत निर्ममन्थाजितः स्वयं १६
मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तने
त्रः जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा मथ्नन्मथ्ना प्रतिगिरिरिवाशोभताथो धृता
द्रिः १७ निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः संभ्रान्तमीनो
न्मकराहिकच्छपात्तिमिंद्विपग्राहतिमिंगिलाकुलात् १८ तदुग्रवेगं दिशि दिश्यु
पर्यधो विसर्पदुत्सर्पदसह्यमप्रति भीताः प्रजा दुद्रुवुरंग सेश्वरा अरक्ष्यमाणाः
शरणं सदाशिवं १९ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याभिमतं मुनीनां
आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः २० ॥

स्मिन्मत्स्यादिभिराकुलाच्च १८ तद्विषं अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा कुतः उग्रो वेगो य
स्य तदेवाह दिशि दिशीति यद्वा उग्रवेगा रोमांच स्वेदादयो यस्मात् अत एवासह्यं विलोक्य भीताः अन्येन
केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुः जग्मुः १९ त्रिलोक्या उद्भवाय देव्या सह अद्रौ कैलासे आसी

निर्गुणं सगुणं चैव शिवं हरिपराक्रमैः स्तुवंत स्तु प्रजेशानां नाम स्पष्टं तांतरं तयोः नन्वेवंभूतो विष्णुरिति प्रसिद्धं तत्रा।
ऽगुणमयेति अस्य जगतो यदा सर्गादीन् धत्से तदा हे भूमन् स्वदृक् स्वतः सिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां स धत्से २३
तत्र हेतुः त्वं ब्रह्मेति सदसतो भावान् देवतिर्यगादिरूपान् भावयतीति तथा स्वरूपतस्तु ब्रह्मातिरिक्तं नास्तीत्याह आ
त्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाभातः यस्मादीश्वरः स्वतः सिद्धज्ञानत्वमुपपादयति २४ जगदात्मनात्मा

प्रजापतय ऊचुः देवदेव महादेव भूतात्मन् भूतभावन त्राहि नः शरणापन्नांस्त्रैलोक्यदह
नाद्विषात् २१ त्वमेकः सर्वजगत ईश्वरो बंधमोक्षयोः तं त्वामर्चंति कुशलाः प्रपन्नार्तिहरं गु
रुं २२ गुणमय्या स्वशक्त्यास्य सर्गस्थित्यप्ययान्विभो धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभि
धां २३ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः
२४ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेंद्रियद्रव्यगुणः स्वभावः कालः क्रतुः सत्यमृतं च ध
र्मस्त्वय्यक्षरं यत्त्रिवृदामनंति २५ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवांघ्रि
पंकजं कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशं २६

नः प्रकारमाह त्वं शब्दस्य
वेदस्य योनिः अतः स्वतः सिद्धज्ञानस्त्वं जगदादिर्महत्तत्त्वं आत्मा च अहंकारः कथंभूतः प्राणेंद्रियद्रव्या
= णां कारणभूता गुणा यस्य राजसादि त्रिविधस्त्वमेव स्वभावादयश्च त्वमेव कृतः संकल्पः सत्यमृतं
चेति यो धर्मः स त्वं महदादिरूपत्वे हेतुः त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वयि त्वदाश्रयं तदामनंति
= यद्वा एवंभूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः २५ अखिलदेवतात्मा ऽग्निः सर्वदेवता

परे अवरे च आत्मानो जीवास्तेषां सा आत्मा पणतवात्मा अहंकारः २७ त्रयीमयात्मन् वेदत्रयमूर्ते २८ पंचो
पनिषदः तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा मंत्रा यैर्मुखैरष्टोत्तरत्रिंशन्मंत्राणां वर्गः तेषामेव मंत्रा
णां यदष्टौ देहानाष्टोत्तरत्रिंशत्कलात्मका मंत्राः स्वर्थः अवस्थितिः उपरतावस्था २९ अधर्मस्योर्मिषु दंभ
लोभादिषु येरूर्मिभिः विसर्गः प्रतिसर्गः संहारः यद्वा ये सत्त्वादिभिः त्रिविधः सर्गः तानि नेत्रत्रयं हे देव

नाभिर्नमस्ते स्वसमं नमस्त्वान्स्र यैश्चचद्दं षिजलं स्मरेत: परावरात्मा प्रपणतवात्मासो
सोमनोद्यौर्भगवञ्छिरस्ते २७ कुक्षिः समुद्रा गिरयोस्थिसंघा रोमाणि सर्वौषधिवीरुधस्ते छं
दांसि साक्षात्तव सप्तधातव स्त्रयीमयात्मन् हृदयं सधर्मः २८ मुखानि पंचोपनिषस्तवेश यैस्त्रिं
शत्षडोत्तरमंत्रवर्गः यत्तच्छिवाख्यं परमार्थतत्वं देव स्वयं ज्योतिरवस्थितिस्ते २९ छायात्व
धर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि साख्यात्मनः शास्त्रकृतस्तवेक्षा छंदोमयो देव ऋषिः
पुराणः ३० नते गिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यं ज्योतिः परं यत्र रजस्त
मश्च सत्त्वं न यद्ब्रह्म निरस्तभेदं ३१ कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः
स्तुतये न तत्ते यत्त्वत्कृतात्मकृतं स्वनेत्रवह्निस्फुलिंगशिखया भसितं नवेदः ३२

छंदोमयो ऋषिर्वेदः सततवेद्यात्म ईक्षणं साख्यात्मनुरिति पाठे मनुर्वेदः तमेवाह छंदोमय इति ३० हे गिरि
त्रातेपरं ज्योतिरखिलानां लोकपालादीनां गम्यं न भवति कुतः यत्र रजआदिनास्ति किंतज्ज्योतिः यन्नि
रस्तभेदं ब्रह्म ३१ कामश्च अध्वरश्च दक्षयज्ञः त्रिपुरादयश्चये अनेकभूतद्रुहस्तान् क्षपयतः संहरतः
सोतत्कम स्तुतये न भवति अत्यल्पमेतदित्यर्थः गरभक्षणस्याप्यचर्यभाविलेनासिद्धवन्निर्देशः स्तुतये

म्येवं निंद्यं परानुग्रहव्यग्रं त्वां ये निंदंति ते निर्लज्जा इत्याहुः ये त्विति उमया सह चरंतं तं तस्यां नितरां रतं कामिनं कथयंति तथा ॥
तपसाभितप्तं श्मशाने चरंतं उग्रं क्रूरं परुषं च हिंस्रं कथयंति ते कथंभूतं आत्मारामाश्च गुरवो विश्वहितोपदेष्टार
स्तैर्हृदि चिंतितमंघ्रिद्वंद्वं यस्य तथाभूतमपि तपसाभितप्तमपि ते नूनं तवोतिमविदन्निति काकुः त्वल्लीलां नै
व विदुरित्यर्थः अतो हातलज्जाः त्यक्तत्रपाः कथमात्मारामैः सेवितं चरणयुगलं स्यात् कामित्वसंभवे कथं वा
तपसाभितप्तत्वं श्मशानस्थस्योग्रत्वं गुरुत्वं वा संभवतीत्यविचार्यैव प्रलापोद्धत इत्यर्थः ३४ आस्तां तावन्निंद

ये त्वात्मारामगुरुभिर्हृदि चिंतितांघ्रिद्वंद्वं चरंतमुमया तपसाभितप्तं कत्थंत उग्रपरुषं निरतं
श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ३४ तत्तस्य ते सदसतोः परतः परस्य नांजः स्वरू
पगमने प्रभवंति भूम्नः ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि शक्तिमात्रं
३५ एतत्परं प्रपश्यामो न परं ते महेश्वर मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ३६
श्रीशुक उवाच तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः सर्वभूतसुहृद्देव इदमाह सतीं प्रियां
३७ शिव उवाच अहो बत भवान्येतत्प्रजानां पश्य वैशसं क्षीरोदमथनोद्भूतात्कालकूटादु
पस्थितं ३८ आसां प्राणपरीप्सूनां विधेयमभयं हि मे एतावान्हि प्रभोरर्थो यद्दीनपरिपाल
नं ३९ प्राणैः स्वैः प्राणिनः पांति साधवः क्षणभंगुरैः बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ४०

कानां वार्ता महांतोऽपि तव तत्त्वं न जानंतीत्याह तत्तस्मात्तव स्वरूपस्य गमने ज्ञाने ब्रह्मादयोऽपि न समर्थाः संस्तवने
तु कुतः शक्ताः स्युः तत्र वयं कथं प्रभवाम यतस्तेषां सर्गेऽस्य नार्वाचीनाः तथापि यदेतत्स्तवनं एतदात्म
शक्तिपरिमितमात्रमित्यर्थः ३५ तदेवाहुः एतत्परमिति न परं रूपं तथापि त्वद्दर्शनादेव कृतार्था वयमित्याहुः
मृडनायेति ३६ तत्प्रभावमविचार्य विषपानेऽप्रवृत्तं तमाकर्ण्य चिरं प्रिया वारयेदिति शंकया तामनुज्ञाप
यन्नाह अहो बतेति सार्धैस्त्रिभिः वैशसं दुःखं प्राणपरीप्सूनां प्राणरक्षणेच्छूनां मया प्रभोः समर्थस्यार्थः

भा०गी०
अ०टी०
२१

कृपयतः कृपां कुर्वतः पुंसः ४१ मेमतः स्वस्तिः शोभनामास्तमास्वस्त्वं निजजीवितमस्त्वित्यर्थः ४२ जग्धुमत्तुं करत
लीकृत्य करतलपरिमितमात्रं ४३ तस्यापि गुणातत्समयस्यसंरितविमुललाटगतात्रिनिर्गताग्निज्वा
लालेशाजाज्वल्यमानस्य जनचतुर्दशभुवनं दग्धुं क्षमस्य जगदेकनाथस्य जलकल्मषः जलदोषो
विषं स्ववीर्यं दर्शयामास यस्मात्तद्गले नीलं चकार साधोः कृपालोः ४४ प्रस्कन्नं गलितं अपरे सवि

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ४१ तस्मादि
दं गरं भुंजे प्रजानां स्वस्तिरस्तु मे एवमामंत्र्य भगवान्भवानीं विश्वभावनः ४२ तद्विषं जग्धु
मारेभे प्रभावज्ञान्वमोदत ततः करतलीकृत्य व्यापिहालाहलं विषं ४३ अभक्षयन्महा
देवः कृपया भूतभावनः तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ४४ यच्चकार गले
नीलं तच्च साधोर्विभूषणं तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ४५ परमाराधनं त
द्धि पुरुषस्याखिलात्मनः निशम्य कर्म तच्छंभोर्देवदेवस्य मीढुषः ४६ प्रजा दाक्षायणी ब्र
ह्मा वैकुंठश्च शशंसिरे प्रस्कन्नं पिबतः पाणेर्यत्किंचिज्जगृहुः स्म तत् ४७ वृश्चिकाहि
विषौषध्यो दंदशूकाश्च ये परे ४८ इति श्रीभागवते अष्टमस्कंधे अमृतमथने सप्तमो
ध्यायः ७ श्रीशुक उवाच पीतगरे वृषांकेण प्रीतास्तेऽमरदानवाः ममंथुस्तरसा सिंधुं हवि
र्धानी ततोऽभवत् १ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः यज्ञस्य देवयानस्य मेध्याय हवि
षे नृप २ ततउच्चैःश्रवा नाम हयोऽभूच्चंद्रपांडुरः तस्मिन्बलिः स्पृहां चक्रे नेंद्र ईश्वरशिक्षया ३

षाः तेऽपि जगृहुः अनेन विषस्यातीव तीव्रतोक्ता ॥ इत्यष्टमे सप्तमः ७ अष्टमे मथ्यमाने श्रीलक्ष्म्याविर्भावतेषु
रैः धन्वंतरेर्हेतोः सोममोहिन्या दुर्वह पीते हविर्धानी सुरभिः १ देवयानस्य ब्रह्मलोकमार्गप्रापकस्य यज्ञस्य

४५

३

रामः

१९

१३॥१४॥ परंस्थानमाश्रयं ध्रुवं नित्यं अव्यभिचारिणो नित्याः संतो गुणा यस्मिन् तं नान्वविंदत् क्वचित्कस्यचिद्दोषमाह नूनं ... वाते १५ ततैवाह नूनमिति त्रिभिः मन्युनिर्जयो नास्ति दुर्वासःप्रभृतिषु शुक्रादिषु संगवर्जितं ज्ञानं नास्ति महत्त्वेपि ब्रह्म सोमादीनां कामनिर्जयः परतो व्यपाश्रयः ... किं सईश्वरः १६ न भूतसौहृदं परशुरामादिषु न मुक्तिकारणं त्यागः शिबिप्रभृतिषु पुंसः कार्तवीर्यादेः वीर्यमस्ति अजवेगनिष्कृतं कालवेगेन परिहृतं तु न भवति गुणसंगवि

ततोभिषिषिचुर्देवीं श्रियंपद्मकरांसतीं दिगिभाःपूर्णकलशैःसूक्तवाक्यैर्द्विजेरितैः १३ समुद्रःपीतकौशेयवाससीसमुपाहरत् वरुणःस्रजंवैजयंतींमधुनामत्तषट्पदां १४ भूषणानिविचित्राणिविश्वकर्माप्रजापतिः हारंसरस्वतीपद्ममजोनागाश्चकुंडले १५ ततःकृतस्वस्त्ययनोत्पलस्रजंनदद्द्विरेफांपरिगृह्यपाणिना चचालवक्त्रंसुकपोलकुंडलंसव्रीडहासंदधतीसुशोभनं १६ स्तनद्वयंचातिकृशोदरीसमंनिरंतरंचंदनकुंकुमोक्षितं ततस्ततोनूपुरवल्गुशिंजितैर्विसर्पतीहेमलतेवसाबभौ १७ विलोकयंतीनिरवद्यमात्मनःपदंध्रुवंचाव्यभिचारिसद्गुणं गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषुनान्वविंदत १८ नूनंतपोयस्यनमन्युनिर्जयोज्ञानंक्वचित्तच्चनसंगवर्जितं कश्चिन्महांस्तस्यनकामनिर्जयःसईश्वरःकिंपरतोव्यपाश्रयः १९ धर्मःक्वचित्तत्रनभूतसौहृदंत्यागःक्वचित्तत्रनमुक्तिकारणं वीर्यंनपुंसोस्त्यजवेगनिष्कृतं नहिद्वितीयोगुणसंगवर्जितः २० ॥क्वचिच्चिरायुर्नहिशीलमंगलंक्वचित्तदप्यस्तिनवेद्यमायुषः यत्रोभयंकुत्रचसोप्यमंगलःसुमंगलःकश्चनकांक्षतेहिमां २१

वर्जितः सनकादिः द्वितीयः समवरोन हि समाधिनिष्ठत्वात् चिरायुष्यपि मार्कंडेयादौ शीलं मंगलं नास्ति रुद्रियद्मनशीलत्वात् क्वचित्तदप्यस्ति हिरण्यकशिपुप्रभृतौ आयुषस्तु स्थैर्यं न वेद्यं दुर्ज्ञानं भगवद्द्वेषात् कस्मात् एवमपि सुसंभवान् यत्र कुत्र च सोपि रुद्र मार्कंडे

चा६

वारुणीं वारुणीं देवत्वं पदं तन्मयी सुरा २९ दीर्घौ पीवरौ दोर्दण्डौ यस्य कंबुग्रीवः शंखवन्नाभिरिव त्रिरेखा सुवृत्ता । ग्रीवा यस्य ३० स्निग्धः कुंचितः केशानामंतो यस्य ३२ इज्यभाक् यज्ञभागभोक्ता अमृतेन आभृतं परिपूर्णं

श्रीशुक उवाच इत्यवलोकिता देवाः सप्रजापतयः प्रजाः शीलादिगुणसंपन्ना लेभिरे निर्वृतिं परां २७ निःसत्वा लोलुपा राजन्निरुद्योगा गतत्रपाः यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः २८ अथासीद्वारुणी देवी कन्या कमललोचना असुरा जगृहुस्तां वै हरेरनुमतेन ते २९ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ३० दीर्घपीवरदोर्दण्डः कंबुग्रीवोरुणेक्षणः श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ३१ पीतवासा महोरस्कः सुमृष्टमणिकुंडलः नीलकुंचितकेशांतः सुभगः सिंहविक्रमः ३२ अमृतापूर्णकलशं बिभ्रद्वलयभूषितः स वै भगवतः साक्षाद्विष्णोरंशांशसंभवः ३३ धन्वंतरिरिति ख्यात आयुर्वेददृगिज्यभाक् तमालोक्यासुराः सर्वे कलशं चामृताभृतं ३४ लिप्संतः सर्ववस्तूनि कलशं तरसाहरन् नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने विषण्णमनसो देवा हरिं शरणमाययुः इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत् ३५ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसां अहं पूर्वमहं पूर्वं नत्वं

३६ मिथः दैत्यानां परस्परं कलहोत्पादनेन योगमायया वः अर्थं साधयिष्यामि अतो मा खिद्यत इत्याह इति शेषः तदे॥
वाहमिथ इति तर्षः कामः तद्युक्तानि चेतांसि येषां इत्येवं सर्वबलानां कलिरभूत् ३७ ॥ ॥ ॥

दुर्बलानां त्वाक्रोशप्रकारमाह देवा इति द्वाभ्यां ये देवाः तुल्येनायासेन हेतवः साधकाः तुल्य आयासो हेतुर्यस्य धनादिर्येषामि
ति वा सत्रयागे यथा सर्वेषां समं फलं तद्वत् तथा च श्रुतिः ऋद्धिकामाः सत्रमासीरन्निति ये यजमानास्ते ऋत्विज
इति ३८ तद्रूपं वर्णयति पंचभिः प्रेक्षणीयं च तदुत्पलश्यामं च सर्वावयवेषु सुंदरं समानयोः कर्णयोराभरणे यस्मिंस्तच्च तत्
च ३९ शोभना ग्रीवा यस्य तत् कंठाभरणं यस्मिन्निति वा सुभुजयोरंगदाभ्यां भूषितं ४३ विरजांबरेण संवीतो नितं।

देवाः स्वंभागमर्हंति ये तुल्यायासहेतवः सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ३८ इति
स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः दुर्बलान्प्रबला राजन् गृहीतकलशा मुहुः ३९ एतस्मि
न्नंतरे विष्णुः सर्वोपायविदीश्वरः योषिद्रूपमनिर्देश्यं दधार परमाद्भुतं ४० प्रेक्षणी
योत्पलश्यामं सर्वावयवसुंदरं समानकर्णाभरणं सुकपोलोन्नसाननं नवयौवननि
र्वृत्तस्तनभारकृशोदरं मुखामोदानुरक्तालिझंकारोद्विग्नलोचनं ४१
बिभ्रत्सुकेशभारेण मालमुत्फुल्लमल्लिकां सुग्रीवकंठाभरणं सुभुजां
गदभूषितं ४३ विरजांबरसंवीतनितंबद्वीपशोभया कांच्या प्रविलसद्वल्गुचलच्चरणनूपुरं
४४ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ४५
इति श्रीभागवते महापुराणेऽष्टमस्कंधे भगवन्मायोपलंभनंनामाष्टमोऽध्यायः ८ ॥

प्रबला २
१३
८३

बएव द्वीपः विशालत्वात् तत्र शोभा यस्याः तया कांच्या प्रकर्षेण विलसत् वल्गु यथा भवत्येवं चलंतो चरणा
यो नूपुरे यस्मिन् ४४ सव्रीडेन स्मितेन सह विक्षिप्ता कंपिता या भ्रूः तस्या विलासेन सह यान्यवलोकितानि
तैः दैत्ययूथपानां चेतःसु मुहुर्मुहुः काममुद्दीपयन् ४५ इत्यष्टमेऽष्टमः ८ ॥॥

भा॰पु॰
अ॰टी॰
२२

नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने तद्वंचनेन देवेभ्योऽमृतं दत्तं तदीर्यते १ अहो रूपं सौंदर्यं धाम द्युतिरिति वदंतः कान्
मित्यादि पप्रच्छुः २ मथ्नंतीव व्यथयंतीव ३ कस्यासीत्यपुत्रत्वं अस्माभिः यतस्त्वं न केनचिद्दृष्टपूर्वेत्याहुः नेति
त्वां त्वा अमरादिभिरस्पृष्टपूर्वां न जानीम इति न अपि तु जानीम एव ४ आत्मामिंद्रस्वर्द्धीनेस्त्वीश्वरेणैव

श्रीशुक उवाच तेन्योन्यतोसुराः पात्रं हरंतस्त्यक्तसौहृदाः क्षिपंतो दस्युधर्माण आयां
तीं ददृशुः स्त्रियं १ अहो रूपमहो धाम अहो अस्या नवं वयः इति ते तामभिद्रुत्य पप्रच्छुर्जातहृ
च्छयाः २ का त्वं कंजपलाशाक्षि कुतो वा किं चिकीर्षसि कस्यासि वद वामोरु मथ्नंतीव म
नांसि नः ३ न वयं त्वामरैर्दैत्यैः सिद्धगंधर्वचारणैः नास्पृष्टपूर्वां जानीमो लोकेशैश्च कु
तो नृभिः ४ नूनं त्वं विधिना सुभ्रूः प्रेषितासि शरीरिणां सर्वेंद्रियमनःप्रीतिं विधातुं सघृणेन किं ५
सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ६ वयं कश्य
पदायादा भ्रातरः कृतपौरुषाः विभजस्व यथान्यायं नैव भेदो यथा भवेत् ७ इत्युपामंत्रितो दैत्यै
र्मायायोषिद्वपुर्हरिः प्रहस्य रुचिरापांगैर्निरीक्षन्निदमब्रवीत् ८ श्रीभगवानुवाच कथं कश्य
पदायादाः पुंश्चल्यां मयि संगताः विश्वासं पंडितो जातु कामिनीषु न याति हि ९ शालावृकाणां
स्त्रीणां च स्वैरिणीनां सुरद्विषः सख्यान्याहुरनित्यानि नूत्नं नूत्नं विचिन्वतां १० श्रीशुक उवा
च इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोसुराः जहसुर्भावगंभीरं ददुश्चामृतभाजनं ११

संपादितमित्याहुः नूनमिति सर्वेंद्रियाणां च मनसश्च प्रीतिं विधातुं सघृणेन किं प्रेषितासि किं वा यदृच्छयैवागता ५
सि नैवं प्रेषितेत्यर्थः भेदो विग्रहो यथा न भवेत्तथा ७ संगता अनुरक्ताः ९ हे सुरद्विषः भावेन केनापि प्रायेणा

रामः
२२

ईषत्स्मितेन शोभायस्याः तया मया कृतं साधुवा साधुवा यद्यभ्युपेतं अंगीकृतं हरिर्विभजते २२ असुरपुंगवाः दैत्य श्रेष्ठाः असमाप्तप्रियतामजानंतः २३ यथोपजोषं यथाप्रीति अहतस्य लक्षणं अहतं यंत्रनिर्मुक्तमुक्तं वासः स्वयं भुवा शस्तं तन्मांगलिकं यावत्तावन्मात्रेणासर्वदा प्रागग्रेषु कुशेषु पाविविशुः २५ धूपैरामोदितायां सुरभीकृतायां शालायां २६ अथ तस्यां शालायां हे नरेंद्र साकलशपाणीराविवेश कथंभूता नामगाविधा दाक निष्ठकरस्य

ततोऽह्नि हित्वा मतभाजनं न हरिर्विभागैरविलसितशोभया गिरा यद्यभ्युपेतकचसाधुवाकृतमया बो विभजे सुधामिमां २२ इत्यमिथ्यान्ततनस्या आकर्णयासुरपुंगवाः अप्रमोविदलस्यतत्पेत्यन्वमसत २३ अथोपोष्य कृतस्नाना हुत्वा च हविषानलं दत्वा गोविप्रभूतेभ्यः कृत्स्नत्स्यपनाः द्विजैः २४ यथोपजोषं वासांसि परिधायाहतानि ते कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः २५ प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च धूपामोदितशालायां जुष्टायां माल्यदीपकैः २६ तस्मिन्नरेंद्र करभोरुशाद्धकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी सा कूजनीकनकनूपुरशिंजितेन कुंभस्तनी कलशपाणिरथाविवेश २७ तां प्रेक्ष्य सर्वे कनककुंडलचारुकर्णांनासाकपोलवदनां परदेवतां च संवीक्ष्य संभ्रममुपेत्य स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकांता २८

ग २

=

२९

करभोरुद्विः करसदृशौ सुवृत्तावुरू यस्याः सा उद्वशल्कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन विशालायाः श्रोण्या अलसा मंदा गतिर्यस्याः सा यांमतरे करभसदृशयोरुर्वो लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेनालसगतिश्च मदेन विह्वले ईक्षिणी यस्याः २७ तां प्रेक्ष्य सर्वां संवीक्ष्य देवासुराः संभ्रमंत्राः कंठभूलां कनकमयकुंडले यस्याः सा चासौ चारुः कर्णांतरो यस्याः सा च विगलितो विस्रस्तः स्तनपट्टिकायाः अ

टि

टि

टि

टि

भा०ग०
अ०टी०
२२

एवं तान्मोहयित्वा यत्कृतवान् तदाह त्रिभिः असुराणां सुधादानं सर्पाणां क्षीरदानमिव दुर्नयं अन्यायं मत्वा तां।
सुधां तेभ्यो न व्यभजत् अयं भावः दैत्यैर्मे दीयतां साध्वसाधु वा सर्वमनुमतमेव अतो मदुक्तान्देवानेव सुधां पाय
यिष्यामि १९ किं चैतैर्यथान्यायं विभजस्वेत्युक्तं न चैतेभ्यो न्यायं क्रूरेभ्यो दानं न्याय्यं अतस्तेभ्यः सुधां न दास्यामि
ति पंक्तीः पृथग्विविधाः कल्पयित्वा विधाय तानसुरपंक्तिषु स्वेषु स्वेषु तेषां सजातीयेषु तांश्च असुरानापतारणा
यैमेवोपवेशयामास २० उपसंचरैर्वचनमानप्रियवाक्यादिनानानतिक्रम्यातिक्रम्यगमनैर्दूरस्थानपि देवान् २१

असुराणां सुधादानं सर्पाणामिव दुर्नयं मत्वा जातिनृशंसानां न तां व्यभजदच्युतः १९ कल्प
यित्वा पृथक्पंक्तीरुभयेषां जगत्पतिः तांश्चोपवेशयामास स्वेषु स्वेषु च पंक्तिषु २० दैत्यान्गृही
तकलशो वंचयन्नुपसंचरैः दूरस्थान्पाययामास जरामृत्युहरां सुधां २१ ते पालयंतः समयम।
सुराः स्वकृतं नृप तूष्णीमासन्कृतस्नेहाः स्त्रीविवादजुगुप्सया २२ तस्यां कृतातिप्रणयाः प्रण
यापायकातराः बहुमानेन चाबद्धा नोचुः किंचन विप्रियं २३ देवलिंगप्रतिछन्नः स्वर्भानु
र्देवसंसदि प्रविष्टः सोममपिबच्चंद्रार्काभ्यां च सूचितः २४ चक्रेण क्षुरधारेण जहार पिब
तः शिरः हरिस्तस्य कबंधस्तु सुधयाप्लावितोऽपतत् २५ शिरस्त्वमरतां नीतमजो ग्रहमची
क्लृपत् यस्तु पर्वणि चंद्रार्कावभिधावति वैरधीः २६ पीतप्रायेऽमृते देवैर्भगवाल्लोकभावनः
पश्यतामसुरेंद्राणां स्वं रूपं जगृहे हरिः २७ ॥

तयाऽस्मिन्कृतः स्नेहो येषु स्त्रिया सह विवादस्य जुगुप्सया २२ कृतः अतिप्रणयः स्नेहो यैः प्रणयापायेन कातराः।
भीताः एतेनावत्कपणाः पूर्वं किंचिद्भवं तु पूर्वं तु धीराः त्वां प्रतीत्य ध्वमित्यादि बहुमानेन चाबद्धाः नियंत्रिताः स
मयपालनादिभिः बद्धैरेतैः कार्यो रविप्रियं किंचिदपि नोचुः किंतु तूष्णीमासन् देवपंक्तौ चंद्रार्कयोर्मध्ये प्रवि

सौवितः असंस्पृष्टः ग्रहत्वं यदि बलं ग्रहत्वाधिकारिणं २७

वं३

हरिभक्तानामेवोत्तमः फलति नान्येषामित्येवमाख्यानतात्पर्यमाह एवमिति समादेशाद्यो येषां हेतुर्मंदराद्रिरर्थः
समुद्रे हि प्रवीरूप्यादिर्विविधः कल्पः फलं केषांचिज्जातं केषांचिन्नेति वैचित्र्यं येषां तेषु फले वैषम्यं वेत्त्येवमं बुद्धि
त्यर्थः तदेवाह तत्र तेषु यस्य पादपंकजरजःश्रयणाद्धेतोरमृतं फलमापुः स एव सेव्य इत्यर्थः यन्न दैत्यास्तस्य बंधात्
२८ एतदेवोपपादयति यदिति असुः प्राणाः वसु धनं प्राणादिभिर्देहात्मजादिषु नृभिर्यद्युज्यते प्रयुज्यते देहाद्यर्थं
यत्क्रियते इत्यर्थः तदसत् असत्फलं भवति कुतः पृथक्त्वात् भेदाश्रयत्वात् शाखानिषेचनत्वात् तैरेव प्राणादिभि

एवं सुरासुरगणाः समदेशकालहेत्वर्थकर्ममतयोऽपि फले विकल्पाः तत्रामृतं सुरगणाः फ
लमंजसापुर्यत्पादपंकजरजःश्रयणान्न दैत्याः २८ यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्दे
हात्मजादिषु नृभिस्तदसत्पृथक्त्वात् तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भव
ति मूलनिषेचनं यत् २९ इति श्रीभागवते महापुराणेऽष्टमस्कंधेऽमृतमथने नवमोऽध्यायः ९
श्रीशुक उवाच इति दानवदैतेया नाविंदन्नमृतं नृप युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मु
खाः १ साधयित्वामृतं राजन्पाययित्वा स्वकान्सुरान् पश्यतां सर्वभूतानां ययौ गरुडवाहनः २

रीश्वरोद्देशेन यत्क्रियते तत्तु सत् महाफलं भवति कुतः अपृथक्त्वात् ईश्वरस्य सर्वत्रानुगतत्वात् तत्र दृष्टांतः
यत्तरोर्मूलनिषेचनं तद्यथा सर्वस्य स्कंधशाखादेरपि भवतीति यद्वा स्वत्वापेक्षया पृथक्त्वं यथा लो
के तेन भेददृष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् अपृथक्त्वं परमात्मन्यर्पणं(?) तैरेव तद्देव यत् क्रियते तत्स
द्भवतीति शेषं समानं २९ अष्टमे नवमोऽध्यायः ९ दशमे ममसंग्रामे देवमायाविमोहिता
सुरेषु वा विर्वभौ हरिः १ तदेवममृतावाप्तिर्नाभक्तानामिति नीतिं भक्तमत्सरतः प्राणहानिः पुनर्दर्श्यते २

रणः संग्रामः उदन्वतः समुद्रस्य रोधसि तीरे बभूव ५ अन्योन्यं समासाद्य निजघ्नुः ६ चित्रध्वजपटादिभिश्च वीराणां मालाभिश्च याजिभिः देवदानववीराणां ध्वजिन्यौ यादसां मालाभिः सागराविव रेजतुरिति चतुर्णाम्।

सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनंदनाः अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ३ ततः सुरगणाः सर्वे सुधया पीतयैधिताः प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ४ तत्र दैवासुरो नाम रणः परमदारुणः रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ५ तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ६ शंखतूर्यमृदंगानां भेरीडमरिणां महान् हस्त्यश्वरथपत्तीनां नदतां निस्वनोऽभवत् ७ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः हया हयैरिभाश्चेभैः समसज्जंत संयुगे ८ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः केचिद्गौरमुखैरृक्षैर्द्वीपिभिर्हरिभिर्भटाः ९ गृध्रैः कंकैर्बकैरन्ये श्येनभासैस्तिमिंगिलैः शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः १० शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ११ अन्ये जलस्थलखगैः सत्वैर्विकृतविग्रहैः सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः १२ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः महाधनैर्वज्रदंडैर्व्यजनैर्बर्हचामरैः १३ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः १४ देवदानववीराणां ध्वजिन्यौ पांडुनंदन रेजतुर्वीरमालाभिर्याद

•न्वयः पाण्डुराभिरविवासितैरमलैः आतपत्रैश्च बर्हैश्च चामरैश्च व्यजनैर्वातेनोद्धूतैः उत्तरोष्णीषैश्च सूर्य

वके६

रामः
२४

असुराणां याचमूः तस्याः पतिः स बलिर्यानमास्थितः १६ उदये उदयगिरिशिखरस्थितः चंद्र इव विरेजे इति त्रयाणा

वैरोचनो बलिः संख्ये सोऽसुराणां चमूपतिः यानं वैहायसं नाम कामगं मयनिर्मितं १६ सर्वसां
ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनं १७ आस्थितस्तं हि मानां
ग्र्यं सर्वानीकाधिपैर्वृतः बालव्यजनछत्राग्र्यै रेजे चंद्र इवोदये १८ तस्यासन्सर्वतो यानैर्वृथा
नापतयोऽसुराः नमुचिः शंबरो बाणो विप्रचित्तिरयोमुखः १९ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरि
ल्वलः शकुनिर्भूतसंतापो वज्रदंष्ट्रो विरोचनः २० हयग्रीवः शंकुशिराः कपिलो मेघदुंदुभिः
तारकश्चक्रदृक्शुंभो निशुंभो जंभ उत्कलः २१ अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः अ
न्ये पौलोमकालेया निवातकवचादयः २२ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः सर्व
एते रणमुखे बहुशो निर्जितामराः २३ सिंहनादं विमुंचंतः शंखान्दध्मुः महारवान् दृष्ट्वा सपत्ना
नुत्सिक्तान्बलिभित्कुपितो भृशं ऐरावतं दिक्करिणमारूढो विगतिः स्वराट् यथा स्वबलं समावृण
मुदयाद्रिमहर्पतिः २५ तस्यासन्सर्वतो देवा नानावाहध्वजायुधाः लोकपालाः सहगणैर्वा
य्वग्निवरुणादयः २६ तेऽन्योन्यमभिसंसृत्य क्षिपंतो नामभिर्मिथः आह्वयंतो विशंतोऽग्रे युयुधु
र्द्वंद्वयोधिनः २७ युयोध बलिरिंद्रेण तारकेण गुहोऽयुत वरुणो हेतिना युद्ध्यन्मित्रो राजन्प्र
हेतिना २८ यमस्तु कालनाभेन विश्वकर्मा मयेन वा शंबरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः २९

मन्वयः १८ सर्वतिप्रसवणानियहिसिन्नितिमस्थारासाहसूंयं २२ नानावाहनादीनिमेषांते २६ देवाऽसुराश्चमिथो

तार्द

जयति १६

सूर्यो देवः एक एव शतेन बलिसुतैः बाणो ज्येष्ठो येषां तैः ३० निसुंभसुंभाभ्यां देवी ३१ आरोहैः तैः सह वाहाः तैः सहि
ताः अन्ये च वाहाः पृथक् अन्ये केवलं गजादय उक्ताः कंधरः तावाहूरु यायेषां छिन्नानि ध्वजादीनि येषां ३२ ते
षां देवादीनां पदाघातैः रथांगैश्च चूर्णितादायोधनात् रणात् उत्थितो रेणुः दिशः खं द्युमणिं च सूर्यं छादयन् सन् देवता

अपराजितेन नमुचिरश्विनौ वृषपर्वणा सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च ३० रा
हुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः निसुंभसुंभयोर्देवी भद्रकाली तरस्विनी ३१ वृषा
कपिस्तु जंभेन महिषेण विभावसुः इल्वलः सह वातापिर्ब्रह्मपुत्रैररिंदम ३२ कामदेवेन दु
र्मर्ष उत्कलो मातृभिः सह बृहस्पतिस्तूशनसा नरकेण शनैश्चरः ३३ मरुतो निवातकव
चैः कालेयैर्वसवोऽमराः विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ३४ त एवमाजावसुरा
सुरेंद्रा द्वंद्वेन संहत्य च युध्यमानाः अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरा
सितोमरैः ३५ भुशुंडिभिश्चक्रगदर्ष्टिपट्टिसैः शक्त्युल्मुकैः प्रासपरश्वधैरपि निस्त्रिंशभ
ल्लैः परिघैः समुद्गरैः सभिंदिपालैश्च शिरांसि चिच्छिदुः ३६ गजास्तुरंगाः सरथाः पदातयः
सारोहवाहा विविधा विखंडिताः निःकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूष
णाः ३७ तेषां पदाघातरथांगचूर्णितादायोधनादुल्बण उत्थितस्तदा रेणुर्दिशः खं द्युम
णिं च छादयन्न्यवर्तताऽसृक्स्रुतिभिः परिप्लुतः ३८ ॥

देर्न्यवर्तत कथंभूतान् असृक्स्रुतिभिः परि
प्लुतान् सिक्तान् यद्वा परिप्लवनाद्धेतोर्न्यवर्तत भावे क्तः रक्तधाराणां न्यवर्तनमुच्छलनादित्यर्थः अप्रमाणे तपा
ठे रेणोर्विशेषणं ३८ श्रीरामाय नमः रामः रामः

शिरोभिर्महाभुजैश्च करभसदृशैरूरुभिश्च सा रणभूमिः प्रकर्षेणास्तृता सती बभौ कथंभूतैः शिरोभिः उद्धृता-
नि उत्पतितानि किरीटानि कुण्डलानि च येभ्यस्तैः संरम्भयुक्ताः दृशो येषु तैः परिदष्टा दष्टाः दन्तैरोष्ठाः येषु तैः पतितानि
यानि स्वशिरांसि तत्रत्यैरक्षिभिः तैः पश्यन्तः इत्यर्थः उद्यतान्यायुधानि येषु दोर्दण्डेषु तैर्युक्ताः ४० वाहानैरावतपादर-

शिरोभिरुद्धृतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः । महाभुजैः साभरणैः सहायुधैः साप्रा-
स्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥ कबंधास्तत्र चोत्पेतुः पतितस्वशिरोक्षिभिः । उद्यतायुधदोर्दण्डै-
राधावन्तो भटान्मृधे ॥ ४० ॥ बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः । चतुर्भिश्चतुरो वाहानेकेनारो-
हमार्च्छयत् ॥ ४१ ॥ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः । चिच्छेद निशितैर्भल्लैरसंप्राप्तान्ह-
सन्निव ॥ ४२ ॥ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे । तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिन-
द्धरिः ॥ ४३ ॥ ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः । यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ॥
४४ ॥ ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः । ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ततो नि-
पेतुस्तरवो दह्यमाना दवाग्निना । शिलाः सटङ्कशिखराश्चूर्णयन्त्यो द्विषद्बलम् ॥ ४६ ॥ महोरगाः
समुत्पेतुर्दन्दशूकाः सवृश्चिकाः । सिंहव्याघ्रवराहाश्च मर्दयन्तो महागजान् ॥ ४७ ॥ ततो महाघ-
ना व्योम्नि गम्भीरपरुषस्वनाः । अङ्गारान्मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४८ ॥ यातुधान्य-
श्च शतशः शूलहस्ता विवाससः । छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणाः प्रभो ॥ ४९ ॥ सृष्टो दै-
त्येन सुमहान्वह्निः श्वसनसारथिः । सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥

क्षकान् आरोहं गजयन्तारं आर्च्छयत् विव्याध ४१ दुर्मर्षः असहनो बलिः ४३ टङ्कवन्ति साग्रैः शिखरैः सहि-

भा॰गा॰
अ॰टी॰
२९

उद्धूतैस्तरंगैरावर्तैश्च भीषणः ५१ एवमन्यैश्च दैत्यैः सृज्यमानासु यत्र यदा तदा ते ध्यातः सन् ५३ अष्टौ आयुधयुक्ता बाहवो यस्य श्रीकौस्तुभश्च अनर्घ्यं किरीटं च कुंडले च उल्लसंति श्रीकौस्तुभादीनि यस्मिन् ५४ असुराणां कूटकर्म मंत्रादिप्रयोगः तस्माज्जाताः महिना महिम्ना हरेः स्मृतिरेव सर्वासां विपदां विमोक्षणम् यथा किमुत हरेः प्रवे

ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत प्रचंडवातैरुद्धूततरंगावर्तभीषणः ५१ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ५२ न तत्प्रतिविधिं यत्र विदुरिंद्रादयो नृप ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः ५३ ततः सुपर्णांसकृतांघ्रिपल्लवः पिशंगवासा नवकंजलोचनः अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुंडलः ५४ तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणं ५५ दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ५६ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तं आहत्य तिग्मगदयाहनदंडजेंद्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाद्यः ५७ इति श्रीभागवते महापुराणेऽष्टमस्कंधे देवासुरसंग्रामे दशमोऽध्यायः १० ॥

शात्यर्थः ५५ इभारिवाहः सिंहवाहः अहिनोत् क्षिप्तवान् लीलया पतत् गृहीत्वा अहनत् अहनत् हे नृप यस्य चक्रेण कृत्तशिरसौ पेततुः तं तथाभूतमपि आहत्य स्वयं च अंडजेंद्रं गरुडमहनत् तं हतं गदासुमालिनश्च इत्यर्थः आद्यः हरिः ५७ इत्यष्टमस्कंधे दशमोऽध्यायः १० रामायनमः रामायनमः रामः

त ३

रामः

५६

एकादशे तु देवेषु दैत्यघातिषु नारदः देवान्निवारयच्छुक्रो मृतान्दैत्यानजीवयत् १ उदयच्छत् उद्यतवान् १ निबद्धान्यक्षाणि येषां तान् बालान्जित्वा नटः कपटद्यूतनिपुणो नेषां धनं हरति तथा हे मूढ मायेशान् अस्मान् जेतुमिच्छसि ४ मन्त्रप्रभावेण गगनेऽवस्थानमाह आरुरुक्षन्ति आरोढुमिच्छन्ति ये च उत्सिसृप्सन्ति उल्लङ्घ्य यियासन्ति मोक्षमिच्छन्ति

श्रीशुक उवाच अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयानुकम्पया जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान्रणे यैरभिसंहताः पुरा १ वैरोचनाय संरब्धो भगवान्पाकशासनः उदयच्छद्यदा वज्रं प्रजा हा हेति चुक्रुशुः २ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरःस्थितं मनस्विनं सुसंपन्नं विचरन्तं महामृधे ३ नटवन्मूढ मायाभिर्मायेशान्नो जिगीषसि जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनं ४ आरुरुक्षन्ति मायाभिरुत्सिसृप्सन्ति ये दिवं तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्च पदादधः ५ सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा शिरो हरिष्ये मन्दात्मन्घटस्व

व२ स३ ज्ञातिभिः सह ६ बलिरुवाच संग्रामे वर्तमानानां कालचोदितकर्मणां कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ७ तमिमं कालरशनं जनाः पश्यन्ति सूरयः न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः ८ न वयं मन्यमानानामात्मानं तत्र साधनं गिरो वः साधुशोच्यानां गृह्णीमो मर्मताडनाः ९॥

मा२

त्सर्पिः अधः विधुनोमि पातयामि ७ कालरशनं कालयन्त्रितं अतो न हृष्यन्ति तत्रैवं विवेके यूयमपण्डिताः। अनिपुणाः ८ तत्र कीर्तिजयादौ आत्मानं साधनं मन्यमानानां वो गिरो न गृह्णीमः मर्मसु ताडनं याभिस्ताः ९ ॥

विभुमिंद्रं १० तोत्रमंकुशः तेनाहत इव ११ सयानः विमानसहितः १२ नमुचिर्बलः पाकश्चेति त्रयस्त्राजग्मुः १९ त्रयाणां

श्रीशुक उवाच इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः १०
एवं निराकृतो देवो वैरिणा तथ्यवादिना नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः ११ प्राहरत्कु
लिशं तस्मा अमोघं परमर्दनः सयानो न्यपतद्भूमौ छिन्नपक्ष इवाचलः १२ सखायं पतितं दृष्ट्वा ज
म्भो बलिसखः सुहृत् अभ्ययात्सौहृदं सख्युर्हतस्यापि समाचरन् १३ स सिंहवाह आसाद्य ग
दामुद्यम्य रंहसा जत्रावताडयच्छक्रं गजं च सुमहाबलः १४ गदाप्रहारव्यथितो भृशं विह्व
लितो गजः जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ १५ ततो रथो मातलिना हरिभिर्दशशतै
र्वृतः आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः १६ तस्य तत्पूजयन्कर्म यन्तुर्दानवसत्तमः शूले
न ज्वलता तं तु स्मयमानोऽहनन्मृधे १७ सेहे रुजं सुदुर्मर्षां सत्त्वमालम्ब्य मातलिः इंद्रो जम्भस्य संक्रु
द्धो वज्रेणापाहरच्छिरः १८ जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः नमुचिश्च बलः पाकस्त
त्रापेतुस्त्वरान्विताः १९ वचोभिः परुषैरिंद्रमर्दयन्तोऽस्य मर्मसु शरैरवाकिरन्मेघा धाराभि
रिव पर्वतं २० हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः तावद्भिरर्दयामास युगपल्ल
घुहस्तवान् २१ शताभ्यां मातलिं पाको रथं सावयवं पृथक् सकृत्संधानमोक्षेण तदद्भुत
मभूद्रणे २२ नमुचिः पंचदशभिः स्वर्णपुंखैर्महेषुभिः आहत्य व्यनदत्संख्ये सतोय इव तोयदः
२३ सर्वतः शरकूटेन शक्रं सरथसारथिं छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः २४

पृथग्विक्रमानाह हरीनिति त्रिभिः हर्यश्वस्य इंद्रस्य तावद्भिर्दशभिः शतैश्च २२ आहत्य इंद्रं विद्ध्वा २३ प्रावृड्घालीनः सूर्य २४

राम:

आर्द्रशुष्काभ्यां मृत्युर्नैवेति ३८ उभयात्मकमेवाह न शुष्केण न चार्द्रेण फेनेन तथा श्रुतिः अपां फेनेन नमुचेः
शिर इन्द्रोदवर्तयत इति ४० अनुचरैरुपगीयमानाः स्वर्ययुः उपगीयमानैरनुचरैः सहेति वा ४५ अविनष्टा।

रिति शक्रं विषीदंतमाह वागशरीरिणी नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ३७
मयास्मै यद्वरो दत्तो मृत्युर्वै नार्द्रशुष्कयोः अतोऽन्यश्चिंतनीयस्ते उपायो मघवन्रिपोः ३८
तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः ध्यायन्फेनमथापश्यदुपायमुभयात्मकं ३९
न शुष्केण न चार्द्रेण जहार नमुचेः शिरः तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुं ४०
गंधर्वमुख्यौ जगतुर्विश्वावसुपरावसू देवदुंदुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ४१ अ
न्येप्येवं प्रतिद्वंद्वान्वाय्वग्निवरुणादयः सूदयामासुरस्त्रौघैर्मृगान्केसरिणो यथा ४२
ब्रह्मणा प्रेषितो देवान्देवर्षिर्नारदो नृप वारयामास विबुधान्दृष्ट्वा दानवसंक्षयं ४३
श्रीनारद उवाच भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः श्रिया समेधिताः सर्व उपार
मत विग्रहात् ४४ श्रीशुक उवाच संयम्य मन्युसंरंभं मानयंतो मुनेर्वचः उपगीयमाना
नुचरैर्ययुः सर्वे त्रिविष्टपं ४५ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते बलिं विप
न्नमादाय अस्तं गिरिमुपागमन् ४६ तत्राविनष्टावयवान्विद्यमानशिरोधरान् उ
शना जीवयामास संजीवन्या स्वविद्यया ४७ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेंद्रियस्मृ
तिः पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ४८ इति श्रीभागवते महापुराणेऽष्ट
मस्कंधे देवासुरसंग्रामे एकादशोऽध्यायः ११

अवयवा येषां विद्यमाना शिरोधरा येषां तान् प्रत्यापन्नानि पुनः प्राप्तानींद्रियाणि स्मृतिश्च येन सः ४८

माद

रामः॥

द्वादशे मोहिनीरूपं विभ्रमालोकनोत्सुकं भवं संमोहयामास हरिः पुनरशेषवत् १ अमुह्यन्नसुरा विमोहि
ययानतद्दृष्टं इति वक्तुं महादेवमोहोपसुपवर्ण्यते २ हरिः सोममपाययदितीदं निशम्य स यत्रास्ते तत्र तद्रूपं द्रष्टुं
ययाविति पूर्वेणान्वयः २ सोमया उमया सह ३ त्वयि किंचिन्नबाध्यर्थं वयं त्वाश्रयमानसाः इति वक्तुं महादेवस्तु
ष्टाव ह्रीमिश्छाभिः ४ त्वयि महामायाविनि परमेश्वरे न हि किल किंचिद्घटितमिव वयं तु परमेकान्तेन दु
ःखमागता इति वदन्नो संबोधयन्स्तौति हे देवदेव कुतो हे देवानां देवत्वं तत्राह हे जगद्व्यापिन् तत्कुतः

श्रीबादरायणिरुवाच वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् मोहयित्वा सुरगणा
न्हरिः सोममपाययत् १ वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः सह देव्या ययौ द्रष्टुं
यत्रास्ते मधुसूदनः २ सभाजितो भगवता सादरं सोमया भवः सूपविष्ट उवाचेदं प्रति
पूज्य स्मयन् हरिं ३ श्रीमहादेव उवाच देवदेव जगद्व्यापि जगदीश जगन्मय सर्वेषामपि
भावानां त्वमात्मा हेतुरीश्वरः ४ आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः यतोऽव्ययस्यनै
तानि तत्सत्यं ब्रह्म चिद्भवान् ५॥

हे जगन्मय तर्हि किं प्रधानं न हे जगदीश तच्च कुतस्तत्राह सर्वेषा
मपि त्वं हेतुः अत ईश्वरः आत्मत्वाच्च न जडं प्रधानं त्वमित्यर्थः ४ ननु जगन्मयत्वे त्वया जगत उत्पत्त्यादि
ना सत्त्वेन च जाड्येन च ममापि किं तथात्वं कुतेन हि नहीत्याह आद्यन्तौ मध्यं च अस्य जगतो ब्रह्मणो भवं
ति अथ यस्य एतानि आद्यन्तमध्यानि न संति यच्च ब्रह्म इदं अहंकारास्पदं देहद्वयं अहं च अहंकारास्पदं देहद्व
यं बहिर्भोग्यं अन्यद्रोकं च त... यच्च चिद्रूपं च ब्रह्म तद्भवान् अतो न तव विकारादिशंकेत्यर्थः ५

तवैवं भूतस्य विमुमुक्षूणामाचारः प्रमाणमित्याह तवैवेति उभयतः इहामुत्र च संगं त्यक्त्वा ६ ननु ब्रह्मैव चेदहं त
र्हि संसारोदासीनस्य मम चरणांभोजोपासनया किं तेषां तत्राह त्वमिति ब्रह्मत्वेपि त्वं नात्यंतमुदासीनः किंच वि
श्वस्य प्रपंचस्योदयादीनां हेतुः तदुपाधीनामात्मनां जीवानामीश्वरश्च ततस्तत्फलदाता तर्हि किं राजादि
वत्कर्माद्यपेक्षया सेवकेभ्यः फलं ददासि नहि नहि अनपेक्षत्वात् तर्हि किमीश्वरत्वेन तत्राह तेरात्म
भिः तत्फलदानार्थमपेक्ष्यत इति तदपेक्षः तस्य भावस्तत्ता तया अनपेक्षत्वमेव दर्शयितुं तदीयं ब्रह्म
त्वं विशिनष्टि पूर्णममृतं च सुखरूपं विषयसुखवैलक्षण्यार्थमाह अविकारं नित्यं आनंदमात्रं च अतः।

तवैव चरणांभोजं श्रेयःकामा निराशिषः विसृज्योभयतः संगं मुनयः समुपासते ६ त्वं
ब्रह्म पूर्णममृतं विगुणं विशोकमानंदमात्रमविकारमनन्यदन्यत् विश्वस्य हेतुरुदय।
स्थितिसंयमानामात्मेश्वरश्च तदपेक्षतयानपेक्षः ७ एकस्त्वमेव सदसद्द्वयमद्वयं
च स्वर्णं कृताकृतमिवेह न वस्तुभेदः अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणव्य
तिकरो निरुपाधिकस्य ८ ॥

विशोकं तत्कुतो विगुणं किंच अन्येनैन्न विद्यते अन्यद्यस्मात् ब्रह्मव्यतिरिक्ताभावादपि निरपेक्षत्व
मित्यर्थः नार्हसि वीतमकत्वेन तद्विकारप्रसंगो दुर्वारः तत्राह अन्यत्सर्वतो व्यतिरिक्तं च कारणत्वात् न त्वे
वं भूतस्य सुखात्मकब्रह्मस्वरूपस्य तवाप्यपेक्षास्ति अतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमि
त्यर्थः ७ अनन्यत्वमन्यत्वं चैकस्य कुत इत्याशंक्याह एक इति तेनोपपादयति सदसत्कार्यकारणरूपं द्वयं अ
द्वयं च परमकारणत्वमेवैकः कृतं कुंडलादिरूपं द्वयं अकृतं च केवलं अद्वयं स्वर्णं यथैकमेव तद्वदेवेह

अत एव त्वां बहुधा वर्णयंति तत्त्वतस्तु केपि न जानंतीत्याह द्वाभ्यां त्वां ब्रह्म वेदांतिनोऽवयंति मन्यंते त्वामेव धर्ममी
मांसका मन्यंते सांख्याः प्रकृतेः परं पुमांसं सांख्याः विमलोत्कर्षिणो ज्ञाना क्रियायोगास्तु हि सत्या ईशाना अ
नुग्रहा चेत्येवं नव शक्ति युतं परं यां च रात्राः महापुरुषं पातंजलाः ६ परा पूर्वा ह्यासत्त्वसर्गाः सत्त्वगुणोनसृष्टा
अपि यन्नत्वया विरचितं विश्वमपि खलु तत्त्वतो न जानंति किं पुनस्त्वां हे ईश अमहं इंद्राजसंतामसं च वक्ष्ये उत्पत्ति

त्वां ब्रह्म केचिदवयंत्युत धर्ममेके केचित्परं सदसतोः पुरुषं परेशं अन्ये वयंति नव शक्ति युतं परं
त्वां केचिन्महापुरुषमव्ययमात्मतंत्रं ६ नाहं परायुः ऋषयो न मरीचिमुख्या जानंति यद्विरचितं खलु सत्त्वसर्गाः यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः ७ स
त्वं समीहितमदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबंधमोक्षौ वायुर्यथा विशति खं च
चराचराख्यं सर्वं तदात्मकतयाऽवगमोऽवरुंत्से ८ अवतारा मया[illegible]दृष्टा रममाणस्य ते गु
णैः सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतं ९ येन संमोहिता दैत्याः पायिताश्चामृतं सुराः त
द्दिदृक्षव आयाताः परं कौतूहलं हि नः १०॥

अपेयामीते न जानंतीति किमु वक्तव्यं ७ किं तु त्वं सर्वं जानासी
त्याह स त्वं सर्वं अवरुंत्से आप्नोषि जानासि किं तत्सर्वं समीहितं स्वकृतं अदः स्थितिजन्मनाशं अमुष्य जगतो ज
न्मादि भूतानामीहितं च जगतो भवबंधं च मोक्षं च यथा प्राप्नोषि दृष्टोतः चराचराख्यं इह जातं खं च यथा वायुरावि
शति तथाकर्षम अवरुंत्से तदात्मकतया तस्य सर्वस्यात्मतयेत्यर्थः आत्मत्वे हेतुः अवगमः ज्ञानरूप इति ८
एवं स्तुत्वा प्रस्तुतं विज्ञापयति अवतारा इति द्वाभ्यां १०

सुरकार्याणि योषिद्वेषेण भविष्यतीति पश्यता अयं भावः अवश्यं तावदस्मान् दैत्यान् वञ्चयित्वा देवेभ्योऽमृतं दे
यं न चैवं वैषम्यं स्वान्तरे लोकस्तु मुचितं अतो वञ्चनमोहनादिसारं कामिनीरूपं मया धृतमिति १२ तद्रूपं दर्शयि
ष्यामि संकल्पप्रभवः कामः तस्योदयो यस्मात् १३ विचित्राणि पुष्पाणि अरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिं
न् लसद्दुकूलेन पर्यस्ता परिवृता नितम्बे मेखला यस्यास्तां १५ उत्पतत् एतत्कंदुकलीलावशेन ये आवर्तनो

श्रीशुक उवाच एवमभ्यर्थितो विष्णुर्भगवान् शूलपाणिना प्रहस्य भावगंभीरं गिरिशं प्रत्यभा
षत १२ कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः पश्यता सुरकार्याणि गते पीयूषभाजने १३
तत्तेहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम कामिनां बहुमंतव्यं संकल्पप्रभवोदयं १४ श्रीशुक उ
वाच इति ब्रुवाणो भगवांस्तत्रैवांतरधीयत सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया १४ ततो
ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे विक्रीडतीं कंदुकलीलया लसद्दुकूल
पर्यस्तनितंबमेखलां १५ आवर्तनोद्वर्तनकंपितस्तनप्रकृष्टहारोरुभरैः पदेपदे प्रभज्यमा
नामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः १६ दिक्षु भ्रमत्कंदुकचापलैर्भृशं प्रोद्विग्नता
रायतलोललोचनां स्वकर्णविभ्राजितकुंडलोल्लसत्कपोलनीलालकमंडिताननां १७

द्वर्तनेन मनोन्नमनेन ताभ्यां कंपितयोः स्तनयोः प्रकृष्टहाराणां चोरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव।
चलत्पदमेव प्रवालवत्कोमलं ततस्ततो नयंतीं १६ दिक्षु भ्रमतः कंदुकस्य चापलैश्चाञ्चल्यैर्भृशं प्रोद्वि
ग्नतारे आयते लोले चंचले लोचने यस्याः स्वकर्णाभ्यां विभ्राजिते कुंडले ताभ्यां मुल्लसन्तौ कपोलौ ताभ्यां

सन्नह्यतीं वध्नतीं जगद्विमोहयंतीं १८ तां वीक्ष्य देवः श्रीरुद्रः आत्मानमंतिके स्थितामुमां स्वगणांश्च न वे
द कथंभूतः इत्येवंभूतया कंदुकलीलया ईषद्व्रीडया स्फुटस्मितेन सह विसृष्टापांगः कटाक्षः तेन मुष्ट

क्वणदुकूलं कवरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना विनिघ्नतीमन्यकरेण
कंदुकं विमोहयंतीं जगदात्ममायया १९ तां वीक्ष्य देव इति कंदुकलीलयेषद्व्रीडास्फुटस्मितविसृ
ष्टकटाक्षमुष्टः स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमंतिक उमां स्वगणांश्च वेद १९
तस्याः कराग्रात्स तु कंदुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः वासः ससूत्रं लघु मारुतोह
रद्भवस्य देवस्य किलानुपश्यतः २० एवं तां रुचिरापांगीं दर्शनीयां मनोरमां दृष्ट्वा तस्यां म
नश्चक्रे विषज्जंत्यां भवः किल २१ तयोपहृतविज्ञानस्तत्कृतस्मरविह्वलः भवान्या अ
पि पश्यंत्या गतह्रीस्तत्पदं ययौ २२ सा तमायांतमालोक्य विवस्त्रा व्रीडिता भृशं निलीयमाना
वृक्षेषु हसंती नान्वतिष्ठत २३ तामन्वगच्छद्भगवान्भवः प्रमुषितेंद्रियः कामस्य च वशं नी
तः करेणुमिव यूथपः सोनुव्रज्यातिवेगेन गृहीत्वानिच्छतीं स्त्रियं केशबंध उपानीय बाहु
भ्यां परिषस्वजे २५ सोपगूढा भगवता करिणा करिणी यथा इतस्ततः प्रसर्पंती विप्रकी
र्णशिरोरुहा २६ आत्मानं मोचयित्वांग सुरर्षभभुजांतरात् प्राद्रवत्सा पृथुश्रोणी माया देव

वंचितः अत एव स्वयं पतत्स्त्रियाः प्रेक्षणं तया च प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य १९ तं कं
दुकमनुव्रजंत्याः स्त्रियाः लघु सूक्ष्मं वासः ससूत्रं कांचीसहितं २० तत्पदं तस्याः समीपं ययौ २२ विषज्जं

एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च सन्निहितो बभूव ३१ तद्देहमायया जडीकरणं स्वनिष्ठा प्रक

तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः २८ तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः शुष्मिणो यूथपस्येव वासितामनुधावतः २९ यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते ३० सरित्सरःसु शैलेषु वनेषूपवनेषु च यत्र क्व चासन्नृषयस्तत्र सन्निहितो हरः ३१ स्कन्ने रेतसि सोपश्यदात्मानं देवमायया जडीकृतं नृपश्रेष्ठ संन्यवर्तत कश्मलात् ३२ अथावगतमाहात्म्य आत्मनो जगदात्मनः अपरिज्ञेयवीर्यस्य न मेने तदु हाद्भुतं ३३ तमविक्लवमव्रीडमालक्ष्य मधुसूदनः उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुं ३४ श्रीभगवानुवाच दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः यन्मे स्त्रीरूपया स्वैरं मोहितोस्यंग मायया ३५ को नु मेतितरेन्मायां विषक्तस्त्वदृते पुमान् तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः ३६ सेयं गुणमयी माया न त्वामभिभविष्यति मया समेता कालेन कालरूपेण भागशः ३७ श्रीशुक उवाच एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ३८ आत्मांशभूतां तां मायां भवानीं भगवान्भवः शंसतामृषिमुख्यानां प्रीत्याचष्टाथ भारत ३९ अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः अहं कलानामृषभोपि मुह्ये ययावशोन्ये किमुतास्वतन्त्राः ४० यं मामपृच्छस्त्वमुपेत्य योगात्समासहस्रान्त उपारतं वै स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेद ४१

तं ३५ कालेन सख्यादिनिमित्तेन मया कालरूपेण भागशो

राम॥

अध्यायार्थनिगमनं इतीति एतत्कीर्तनादौ फलमाह एतदिति ४५ भगवता कृतं भक्तप्रयत्नजातं स्मरन्नमस्क
रोति असतामविषयं भावो भजनं तेन गम्यमंघ्रिं प्रपन्नान् सिंधुमथ्यं सिंधोर्मथ्यते जातममृतं यः आशयत् अभो
जयत् ४७ इत्यष्टमे द्वादशः १२ त्रयोदशेनुवर्ण्यंते सप्तमादीन्यनुक्रमात् मन्वंतराणि सर्वाणि यद्बुधानि च ॥

श्रीशुक उवाच इति निगदितस्तात विक्रमः शार्ङ्गधन्विनः सिंधोर्निर्मथने येन धृतः पृष्ठे महाच
लः ४५ एतन्मुहुः कीर्तयतोनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् यदुत्तमश्लोकगुणा
नुवर्णनं समस्तसंसारपरिश्रमापहं ४६ असदविषयमंघ्रिं भावगम्यं प्रपन्नानमृतममरवर्या
नाशयत्सिंधुमथ्यं कपटयुवतिवेषो मोहयन्यः सुरारींस्तमहमुपसृतानां कामपूरं नतोस्मि ४७
इति श्रीभागवते महापुराणे अष्टमस्कंधे शंकरमायामोहनं नाम द्वादशोध्यायः १२ श्रीशुक उवा
च मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु १ इक्ष्वाकुर्नभ
गश्चैव धृष्टः शर्यातिरेव च नरिष्यंतोथ नाभागः सप्तमो दिष्ट उच्यते २ करूषश्च पृषध्रश्च द
शमो वसुमान्स्मृतः मनोर्वैवस्वतस्यैते दश पुत्राः परंतप ३ आदित्या वसवो रुद्रा विश्वेदेवा
मरुद्गणाः अश्विनावृभवो राजन्निंद्रस्तेषां पुरंदरः ४ कश्यपोत्रिर्वसिष्ठश्च विश्वामित्रोथ
गौतमः जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ५ अत्रापि भगवज्जन्म कश्यपाददितेरभूत्
आदित्यानामवरजो विष्णुर्वामनरूपधृक् ६ संक्षेपतो मयोक्तानि सप्त मन्वंतराणि ते भविष्याण्य
थ वक्ष्यामि विष्णोः शक्त्यान्वितानि च ७ ॥

कश्यपः १ सप्तमादिमन्वंतराण्याह मनुरित्यादिनाध्या।
वदध्यायसमाप्ति आदित्यादयो देवाः इत्यन्वयः भगवतो जन्म अवतारः तमेवाह आदित्यानां विवस्वानर्य।

अष्टमं मन्वन्तरं कथामाह विवस्वत इति त्रिभिः ८ एके वडवां तृतीयामाहुः स तु संज्ञैव वडवेति मतं तदुक्तं षष्ठे सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवीति यमश्च यमी च यमुना श्राद्धदेवश्चेति त्रयः सुताः सावर्णिः पुत्रः

विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे संज्ञा छाया च राजेंद्र ये प्रागभिहिते तव ८ तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः यमो यमी श्राद्धदेवश्छायायाश्च सुताञ्छृणु ९ सावर्णिस्तपती कन्या भार्या संवरणस्य या शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ १० अष्टमेंतर आयाते सावर्णिर्भविता मनुः निर्मोकविरजस्काद्याः सावर्णितनया नृप ११ तत्र देवाः सुतपसो विरजा अमृतप्रभाः तेषां विरोचनसुतो बलिरिंद्रो भविष्यति १२ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयं राद्धमिंद्रपदं हित्वा ततः सिद्धिमवाप्स्यति १३ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः निवेशितोऽधिके स्वर्गादधुनास्ते स्वराडिव १४ गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा ऋष्यशृंगः पितास्माकं भगवान्बादरायणः १५ इमे सप्तर्षयस्तत्र भविष्यंति स्वयोगतः इदानीमासते राजन्स्वे स्व आश्रममंडले देवगुह्यात्सरस्वत्यां सार्वभौम इति प्रभुः स्थानं पुरंदराद्धृत्वा बलये दास्यतीश्वरः १७ नवमो दक्षसावर्णिर्मनुर्वरुणसंभवः भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप १८ पारा मरीचिगर्भाद्या देवा इंद्रोऽद्भुतः स्मृतः द्युतिमत्प्रमुखास्तत्र भविष्यंत्यृषयस्ततः १९ ॥

पदत्रयं याचमानाय इमां सर्वां महीं सप्तमे मन्वंतरे दत्त्वाष्टमे मन्वंतरे विष्णोः प्रसादादेव राद्धं लब्धमिंद्रपदं हित्वा इत्यर्थः १३ रामः परशुरामः द्रोणपुत्रः अश्वत्थामा १५ इदानीं तु स्वयोगतः आसते १६ अद्भुतः इंद्रः १९ रामः॥

हविष्मत्प्रमुखाः स्तुताः नामैव केषांचिन्नामान्याह हविष्मानिति २२ विष्वक्सेनो जातः सन् २५ एकादशमस्त्या

आयुष्मतो बुधायां भगवत्कला भ. विश्रीयेन संराद्धां त्रिलोकीं भोक्ष्यते ततः २० दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः २१ तत्रापि जज्ञे भवते हरेर्विश्वसृजो गृहे अंमूर्तिरिति विख्यातो येनाप्यायेन वै जगत् २२ हविष्मान्सुकृतिः सत्यो जयो मूर्तिस्तदा द्विजाः सुवासनविरुद्धाद्या देवाः शंभुः सुरेश्वरः २३ विष्वक्सेनो विषूच्यां तु शंभोः सख्यं करिष्यति जातः स्वांशेन भगवान्गृहे विश्वसृजो विभुः २४ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् अनागतास्तत्सुताश्च सत्यधर्मादयो दश २५ विहंगमाः कामगमा निर्वाणरुचयः सुराः इंद्रश्च वैधृतस्तेषामृषयश्चारुणादयः २६ आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति २७ भविता रुद्रसावर्णी राजन्द्वादशमो मनुः देववानुपदेवश्च देवश्रेष्ठादयः सुताः २८ ऋतधामा च तत्रेंद्रो देवाश्च हरितादयः ऋषयश्च तपोमूर्तिस्तपस्व्याग्नीध्रकादयः २९ स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः अंतरं सत्यसहसः सूनृतायाः सुतो विभुः ३० मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ३१ देवाः सुकर्मसुत्रामसंज्ञा इंद्रो दिवस्पतिः निर्मोकतत्वदर्शाद्या भविष्यंत्यृषयस्तदा ३१ देवहोत्रस्य तनय उपहर्ता दिवस्पतेः योगेश्वरो हरेरंशो बृहत्यां संभविष्यति ३२ मनुर्वा इंद्रसावर्णिश्चतुर्दशम एष्यति उरुगंभीरबुद्ध्याद्या इंद्रसावर्णिवीर्यजाः ३२ ॥

दिरार्षः २६ तस्य मनोरंतरं साधयिष्यति सत्यसहसः सूनृतायाश्च सुतः सन् दिवस्पतेरिंद्रस्योपहर्ता संपादकः

प्रसंगाद्वर्णांतरेऽपि जगद्यात्राप्रवर्त्तनमाह ज्ञानमिति द्वाभ्यां सिद्धाः सनकादयः ऋषयो याज्ञवल्क्यादयः योगेशा दत्तात्रेयादयः तत्तद्रूपः सन् ज्ञानं कर्म च योगं च ब्रूते ८ प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोति निहंति दस्यून् स्वराड्वपुः राजमूर्त्तिः सर्वेषामभावाय भवति पृथग्विविधा गुणाः शीतोष्णादयो यस्य ९ नामरूपात्मिकया मायया विमोहितात्मभिरभिर्जनैः नानादर्शनैः शास्त्रैः स्तूयमानो निरूप्यमाणोऽपि नैव दृश्यत इत्यर्थः

ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ८ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः कालरूपेण सर्वेषामभावाय पृथग्गुणः ९ स्तूयमानो जनैरेभिर्मायया नामरूपया विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते १० एतत्कल्पविकल्पस्य प्रमाणं परिकीर्त्तितं यत्र मन्वंतराण्याहुश्चतुर्दश पुराविदः ११ इति श्रीभागवते महापुराणेऽष्टमस्कंधे मन्वंतरानुवर्णने चतुर्दशोऽध्यायः १४ श्रीराजोवाच बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत भूतेश्वरः कृपणवल्लब्धार्थोऽपि बबंध तं १ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः यज्ञेश्वरस्य पूर्णस्य बंधनं चाप्यनागसः २ ॥

१० प्रासंगिकं निरूप्य प्रस्तुतमेवोपसंहरति एतत्कल्पविकल्पस्य अवांतरकल्पस्य ११ इत्यष्टमे चतुर्दशः १५ बलिं पंचदशे विश्वजिताचार्यैरयाजयन् ततोऽसौ स्वर्गमजयद्यथाहि वानिलिलिपिरे अत्रेर्पतनवाध्यायां वामं वामनचेष्टितं किमहच्छलतो यत्र बलेर्भूयाननुग्रहः ईश्वरः स्वयं कृपणवत्कस्माद्धरिरयाचत लब्धार्थोऽपि भूत्वापि तं कस्माद्बबंध २ ॥ ॥ ॥

तत्रतावद्बलेस्त्रिलोकीमपहर्तुं यात्राद्यलंकृतवानितिवक्तुं ब्राह्मणाराधनबलेरकाण्ड एव स्वर्गविजयं।
समाह पराजितश्रीरित्यादिना यावदध्यायसमाप्ति पूर्वं पराजितोऽश्रीर्हीनः इंद्रेण असुभिश्च त्याजितः सन् भृ
गून् भृगुवेषधान् शुक्रादीन् महात्मा उदारचित्तः अर्थानां निवेदनेनार्पणेन ३ त्रिणाकं स्वर्गं जेतुमिच्छन्तं वि
श्वजिता यागेनायाजयन् महाभिषेकेणैन्द्रेणैव हूच ब्राह्मणप्रसिद्धेन हर्यश्वस्येंद्रस्य ये तुरंगास्तेषामिव।

श्रीशुक उवाच पराजितश्रीरसुभिश्च हापितो हीन्द्रेण राजन् भृगुभिः स जीवितः सर्वात्म
नातानभजद्भृगून् बलिः शिष्यो महात्मार्थनिवेदनेन ३ तं ब्राह्मणा भृगवः प्रीयमा
णा अयाजयन् विश्वजिता त्रिणाकं जिगीषमाणं विधिनाभिषिच्य महाभिषेकेण म
हानुभावाः ४ ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरंगवर्णाः ध्वजश्च सिंहेन वि
राजमानो हुताशनादास हविर्भिरिष्टात् ५ धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ
कवचं च दिव्यं पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ६ एवं
स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् प्रदक्षिणीकृत्य कृतप्रणा
मः प्रह्रादमामन्त्र्य नमश्चकार ७ अथारुह्य रथं दिव्यं भृगुदत्तं महारथः सुस्रग्ध
रोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः ८ हेमांगदलसद्बाहुः स्फुरन्मकरकुण्डलः र।
राज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ९ ॥ ॥

वर्णो हरितो येषां ४ पुरटं सुवर्णं तूणावक्षयौ अरिक्तौ अक्षयशरौ पितामहः प्रह्रादः जलजं शंखं ६
विप्रैरर्जितः संपादितो योधनार्थो युद्धपरिकरो यस्य तैरेव कल्पितं स्वस्त्ययनं मंगलवाचनादि यस्य आमंत्र्य
पृष्ट्वा ७ अथारुह्य रराजेति द्वयोरन्वयः सुस्रग्धरः शोभनमाल्यधरः ८ हेमांगदाभ्यां लसंतौ बाहू यस्य धिष्ण्य

रामः॥

तुल्यमैश्वर्यं वपुः लं च श्रीश्च येषां तैः स्वयंप्रभैः पयोर्वृद्धिः तो यथा विवृद्धि दृयोरन्वयः परिधीन्दिशः १० स्वःस्वर्गंप्रति
षमरो ११ धिकृत्यामुखवितत्यां विधापुरीं अस्मा केरवपरित्यज्यैपरुद्दारयः पत्ताधिता ऽलिबैरामस्यां पिदुपुरीमनु
वर्णिपतिरम्याभितिसार्धैरेकादशभिः उपवनानि फलप्रधानानि निवाउद्यानानि पुष्पप्रधानानि दूरस्थानि।
चलैः रम्याः कूजंति विहंगमिथुनानि येषु गायंतो मत्तामधुव्रता येषु १२ प्रवालादीनामुरुभारो येषां सुताः शाखा येषां
तेऽमरद्रुमाः १३ यत्र यासु सुरसेविताः प्रमदाः क्रीडंति ताः हंसादिकुलैः राकुलाय्याप्ता नालिन्यः सरांसि प

तुल्यैश्वर्यवपुःश्रीभिः स्वयंकौबेरैः स्वयंप्रभैः विवृद्धिरिव वृद्धिभिरिद्धद्धिः परिधीनिव १० ततो
विकर्षिन्महतीमाधुरीं ध्वजिनीविभुः यथाविंदुपुरीमस्या लोकेपयोन्विवरोदसी ११ रम्या
मुपवनोद्यानैः श्रीमद्भिर्नंदनादिभिः कूजद्विहंगमिथुनैर्गीयमानमधुव्रतैः १२ प्रवा
लफलपुष्पोरुभारशाखामरद्रुमैः हंससारसचक्राह्वकारंडवकुलाकुलाः १३ न
लिन्यो यत्र क्रीडंति प्रमदाः सुरसेविताः आकाशगंगयावृत्तां परिधिभूतया १४
प्राकारेणाजिवर्णेन साट्टालेनोन्नतेन च रत्नपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः १५
जुष्टां विभक्तपथ्यां विज्ञकर्मविनिर्मितां सभाचत्वररथ्याढ्यां विमानैर्बहुदैर्युतां शृं
गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः १६

त्रयेषु संनिवेशैरुपवनोद्यानैरम्याभितिपूर्वेणोवान्वः।
यः किंचपरिखाभूता या आकाशगंगया वृत्तां १४ प्राकारेणासौवर्णेनचावृत्ता अट्टालाः प्राकारोप
रिरचिता उन्नतानि युद्धस्थानानि तत्सहितानि रत्नपट्टानि कपाटानि येषु तैर्द्वारैः अवांतरैः स्फटिकमये
गोपुरैश्च पुरद्वारैर्जुष्टां १५ विभक्ताः प्रपथ्या राजमार्गा यस्याः सभा उपवेशस्थानानि चत्वराणि प्रांगनानि र।
थ्या उपमार्गाः तैराढ्यां संपन्नां अन्युर्वुइंदशाकोटयः तैर्गणानीयेरनंतैर्विमानैर्युतां वज्रविद्रुममय्योवेदयो येषु

नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः रूपवन्नार्यः स्वलंकृताः स्त्रियो यत्र यस्यां भ्राजंते १७ सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगंधिकस्रजामामोदं १८ हेमगवाक्षेभ्यो निर्गच्छता धूमेन सुरप्रिया अप्सरसः १९ मुक्तामयैर्वितानैः मणिहेममयैः केतुभिश्च ध्वजैः नानापताकाभिः युक्ताभिः वलभीभिश्च विमाना॥

यत्र नित्यवयोरूपाः श्यामा विरजवाससः भ्राजंते रूपवन्नार्य अर्चिर्भिरिव वह्नयः १७ सुरस्त्रीकेशविभ्रष्टनवसौगंधिकस्रजां यत्रामोदमुपादाय मार्ग आवाति मारुतः १८ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगंधिना पांडुरेण प्रतिच्छन्नमार्गे यांति सुरप्रियाः १९ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृतां शिखंडिपारावतभृंगनादितां वैमानिकस्त्रीकलगीतमंगलां २० मृदंगशंखानकदुंदुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभां २१ यां न व्रजंत्यधर्मिष्ठाः खला भूतद्रुहः शठाः मानिनः कामिनो लुब्धा एभिर्हीना व्रजंति यत् २२ तां देवधानीं स वरूथिनीपतिर्बहिः समंताद्रुरुधे पृतन्यया आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुंजन्भयमिंद्रयोषितां २३ मघवांस्तमभिप्रेत्य बलेः परममुद्यमं सर्वदेवगणोपेतो गुरुमेतदुवाच ह २४ ॥

नां शिखिपारावतभृंगनादितां वैमानिकस्त्रीणां कलगीतैर्मंगलां २१ उपदेवानां गंधर्वादीनां गीतकैश्च मनोरमां जि ताप्रभा साह्लादी प्रधिष्ठात्री देवता यया तां अन्यैरजितप्रभामिति पाठांतरे जिताग्रहाः सूर्यादयो यया यत्

रामः ॥

केनहेतुनाएवंतेजसाऊर्जितआसीत् २५ प्रतिव्योढुमपाकर्तुं २६ यतःकारणादेतस्यौजआदित यतोजआदेः एतस्य समुद्यमः २७ उपभृतं संचितं २८ तत्रोचितं मंत्रमाह तस्मादिति त्रिविष्टपमुत्सृज्य निलयमदर्शनं याते यतःकालात् ३० केनास्य विपर्ययः स्यादित्यत आह एष इति विप्राणां बलेन उदर्कः उत्तरोत्तरं अधिकं फलं यस्य सः

इंद्र उवाच भगवन्नुद्यमो भूयान्बलेर्नः पूर्ववैरिणः अविषह्यमिमं मन्ये केनासीत्तेजसोर्जितः २५ नैनं कश्चित्कुतो वापि प्रव्योढुमधीश्वरः पिबन्निव मुखेनेदं लिहन्निव दिशो दश २६ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः २७ ओजः सहो बलं तेजो यत एतत्समुद्यमः श्रीगुरुरुवाच जानामि मघवञ्छत्रोरुन्नतेरस्य कारणं शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः २८ भवद्विधो भवान्वापि वर्जयित्वेश्वरं हरिं नास्य शक्तः पुरः स्थातुं कृतांतस्य यथा जनाः २९ तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपं यात कालं प्रतीक्षंतो यतः शत्रोर्विपर्ययः ३० एष विप्रबलोदर्कः संप्रत्यूर्जितविक्रमः तेषामेवापमानेन सानुबंधो विनंक्ष्यति ३१ एवं सुमंत्रितार्थास्ते गुरुणार्थानुदर्शिना हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ३२ देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीं देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयं ३३ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः शतेन हयमेधानामनुव्रतमयाजयन् ३४ ततस्तदनुभावेन भुवनत्रयविश्रुतां कीर्तिं दिक्षु वितन्वानः स रेजे उडुराडिव बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलंभितां कृतकृत्यमिवात्मानं मन्यमानो महामनाः ३६ इति श्रीभा० अ० पं

॥३१ सुमंत्रितः अर्थः कार्यं येषां ते निलयं जग्मुः ३२ एवं प्राप्तमिंद्रपदं स्थिरीकर्तुमयाजयन् अनुव्रतं अनुवर्तिनं द्विजदेवैर्ब्राह्मणैरुपलंभितां प्रापितां ३६ इति श्रीभावार्थदीपिकायां अष्टमस्कंधे पंचदशोऽध्यायः १५ ॥

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥१॥ इदानीं श्रीवामनावतार।
प्रसंगमाह एवमित्यादि यावत्समाप्ति नष्टेष्वदृश्येषु सत्सु ॥१॥ सः कश्यपः पत्नीमिदमाह दीनवदनत्वादिक
मालक्ष्य वक्ष्यमाणविकल्पमन्वपृच्छत् ॥३॥ अप्यभद्रमिति सप्तभिः हे भद्रे मृत्योः छन्दमिच्छामनुवर्तन्त इति यथा मृत्यव

श्रीशुक उवाच एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा हृते त्रिविष्टपे दैत्यैः पर्यतप्यदना
थवत् ॥१॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात् निरुत्सवं निरानन्दं समाधेर्विरतश्चि
रात् ॥२॥ स पत्नीं दीनवदनां कृतासनपरिग्रहः सभाजितो यथान्यायमिदमाह कुरूद्वह ॥३॥ अ
प्यभद्रं न विप्राणां भद्रे लोकेऽधुनागतं न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥४॥ अपि
वाकुशलं किंचिद्गृहेषु गृहमेधिनि धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनां ॥५॥ अपि वाति
थयोऽभ्येत्य कुटुंबासक्तया त्वया गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥६॥ गृहेषु ये
ष्वतिथयो नार्चिताः सलिलैरपि यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥७॥ अप्यग्नयस्तु वे
लायां न हुता हविषा सति त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥८॥ यत्पूजया का
मदुघान्याति लोकान्गृहान्वितः ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखं ॥९॥ अपि
सर्वे कुशलिनस्तव पुत्रा मनस्विनि लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहं ॥१०॥ ॥

श्यावर्तिनो जनस्येत्यर्थः ॥४॥ हे गृहमेधिनि अपि वा किं वा गृहेषु धर्मादेः किंचिदकुशलमिति का का प्रश्नः।
यत्र येषु गृहेषु अयोगिनामपि [illegible] योगः स्वधर्मादिना योगफलं भवति किं वा त्वया ऽपूजिता एवाभ्येत्य
गृहाद्याताः ॥६॥ नार्चिताः अनन्विताः सन्तो यदि निर्गच्छन्ति फेरुराजः शृगालस्तस्य नष्टीयविवरतुल्याः ॥७॥ वेला।
यां होमकाले कर्हिचिन्न हुताः ॥८॥ किं भवत्या आत्मानं मनः अस्वस्थमप्रकृतिस्थं लक्षणैर्मुखम्लान्या

अस्त्वस्य कारणमन्यदस्तीति वक्तुं तस्य च मम भद्रादि किं नास्तीत्याह भद्रमिति द्वाभ्यां इमे गृहाः स्त्रीवर्गस्य परं क्षेत्रं
उद्भवस्थानं त्रिवर्गोपि यथा वर्द्धते तस्य पर्थः ११ भगवतस्तवानुध्यानं यस्मायाक्रियते तस्मात् अग्नयो ऽतिथय इ
त्यादि सर्वं न रिष्यति न हीयते १२ प्रस्तुतं विज्ञापयितुमाह को न्विति १३ संपाद्यं काममाह तवैवेति चतुर्भिः १४ स

ऋषिरुवाच भद्रं द्विजगवां ब्रह्मन् धर्मस्यास्य जनस्य च त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे ११ अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति १२ को नु मे भगवन्कामो न संपद्येत मानसः यस्या भवान्प्रजाध्यक्ष एवं धर्मान्प्रभाषते १३ तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः समो भवांस्तास्वसुरादिषु प्रभो तथापि भक्तं भजते महेश्वरः १४ तस्मादीश भजन्त्या मे श्रेयश्चिन्तय सुव्रत हृतश्रियो हृतस्थानान्सपत्नैः पाहि नः प्रभो १५ परैर्विवासिता साहं मग्ना व्यसनसागरे ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम १६ यथा तानि पुनः साधो प्रपद्येरन्ममात्मजाः तथा विधेहि कल्याणं धिया कल्याणकृत्तम १७ श्रीशुक उवाच एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् १८ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः कस्य के पतिपुत्राद्या मोह एव हि कारणं १९ उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनं सर्वभूतगुहावासं वासुदेवं जगद्गुरुं ३० स विधास्यति ते कामान्हरिर्दीनानुकंपनः अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम

पत्नीः ईर्ष्यैहेनाश्रीर्यैर्बान्द्धतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनं १५ कश्यपः प्रथमं तावत्पुत्रस्नेहं त्याज
यितुं विस्मयव्याजेन तत्त्वमुपदिशति अहो इति सार्द्धेन १९ अत्रापरितुष्टेतां प्रत्याह उपतिष्ठस्वेति द्वाभ्यां नन्व

यथाचमेमनोरथंविदध्यात् यथाचमेआशुतुष्यति तथातत्तेनप्रकारमादिश मयापृष्टःपद्मजोमेयदुक्तवान्
तत्तेप्रवक्ष्यामीत्यन्वयः अमलेशुक्ले तत्रादौपूर्वेद्युः कृत्यमाह सिनीवाल्यामित्यादिना ब्रह्मचार्यप्यतद्वा
आमित्यतेनसंबंधेन यदिलभ्येततर्हि क्रोडविदीर्णया वराहोत्खातया आलिप्य तत्रमंत्रःत्वंदेव्यादि हेदेवि

अदितिरुवाच केनाहंविधिनाब्रह्मन्नुपस्थास्येजगत्पतिं यथामेसत्यसंकल्पोविदध्यात्समनोरथं २२ आदिशत्वंद्विजश्रेष्ठविधिंतदुपधावनं आशुतुष्यतिमेदेवःसीदंत्याःसहपुत्रकैः २३ कश्यपउवाच एतन्मेभगवान्पृष्टःप्रजाकामस्यपद्मजः यदाहतेप्रवक्ष्यामिव्रतंकेशवतोषणं २४ फाल्गुनस्यामलेपक्षेद्वादशाहंपयोव्रतः अर्चयेदरविंदाक्षंभक्त्यापरमयान्वितः २५ सिनीवाल्यांमृदालिप्यस्नायात्क्रोडविदीर्णयायदिलभ्येतवैस्रोतस्येतंमंत्रमुदीरयेत् २६ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छताउद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय २७ निवर्तितात्मनियमोदेवमर्चेत्समाहितः अर्चायांस्थंडिलेसूर्येजलेवह्नौगुरावपि २८ नमस्तुभ्यंभगवतेपुरुषायमहीयसे सर्वभूतनिवासायवासुदेवायसाक्षिणे २९ नमोव्यक्तायसूक्ष्मायप्रधानपुरुषायच चतुर्विंशद्गुणज्ञायगुणसंख्यानहेतवे ३० ॥

त्वंरसायाउद्धृतासि निवर्तितआत्मनियमोनित्यनैमित्तिकोयेनतत्रआवाहनादौनवमंत्रानाह नमस्तुभ्यमिति
पाद्यादौविशेषतस्तुद्वादशाक्षरंवक्ष्यति चतुर्विंशतिर्गुणास्तत्त्वानितानिजानातीतितथातस्मैगुणसंख्या

एवमस्मिन्कृते पक्षे पापसंमूलविद्यया द्वादश्यां हरेरेव पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः तस्य शेषां निर्माल्यं
द्वौ अवरौ येषां तान् असंभवे द्वावपि भोजयेदित्यर्थः समाजितस्तैरनुज्ञातः सन् शेषैर्बंधुभिः सहितः तस्यां

शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ४० ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया नि-
वेदितं तद्भक्ताय दद्याद्भुंजीत वा स्वयं ॥ ४१ दत्त्वाचमनमर्चित्वा तांबूलं च निवेदयेत् जपेदष्टो-
त्तरशतं स्तुवीत स्तुतिभिः प्रभुं ॥ ४२ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दंडवन्मुदा कृत्वा शिरसि तच्छे-
षां देवमुद्वासयेत्ततः ॥ ४३ द्व्यवरान्भोजयेद्विप्रान्पायसेन यथोचितं भुंजीत तैरनुज्ञातः शेषैः से-
ष्टः समाहितः ॥ ४४ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि स्नातः शुचिर्यथोक्तेन विधिना
सुसमाहितः ॥ ४५ पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनं पयोभक्षो व्रतमिदं चरेद्विष्ण्वर्चनादृ-
तः ॥ ४६ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ॥ ४-
७ हरेराराधनं होममर्हणं द्विजतर्पणं प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ४८ ब्रह्म-
चर्यमधःस्वप्नं स्नानं त्रिषवणं चरेत् वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ ४९ अहिं-
स्रः सर्वभूतानां वासुदेवपरायणः त्रयोदश्यामथो विष्णोः स्नपनं पंचकैर्विभोः ॥ ५० कार-
येच्छास्त्रदृष्टेन विधिना विधिकोविदैः पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ ५१ चरुं
निरूप्य पयसि शिपिविष्टाय विष्णवे सूक्तेन तेन पुरुषं यजेत सुसमाहितः ॥ ५२ नैवेद्यं चाति-
गुणवद्दद्यात्पुरुषतुष्टिदं आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः ॥ ५३ तोषयेदृत्विजश्चैव त-
द्विद्ध्याराधनं हरेः भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते अन्यांश्च ब्राह्मणान्शक्त्या ये च

रात्र्यां ब्रह्मचारी सन् श्वोभूते प्रतिपदि पय एव मह्यम् आहारो यस्य अधःस्वप्नं शयनं पंचकैः पंचामृतैः ५८

तुष्टाव सेति बाष्पोद्गमारोति वक्ष्यामे दानेन स्य पदस्य ष्टिरन्तिरंदोषः ७ अपत्यतो विनिर्जित्य दैत्यान त्यू
र्जितान पि भक्तान् रक्षितुमीशस्त्वमित्य स्तो रक्षितिनिमित्तिः यज्ञेश यज्ञपुरुषेति संबोधनैस्त्वामाशकुं किमपि नास्तीति
वदंती प्रार्थयते शंनः कृधि कुरु यतो दीनानां नाथोसि त्वं तीर्थश्रवः कीर्तिर्यस्य श्रवणमेव मंगलं यस्य तन्नाम
धेयं यस्य आपन्नानां शरणागतानां लोकानां वृजिनोपशमायोदयो यस्य ८ भूम्ने महते नमः महत्वे हेतवः विश्वा

प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह उद्वीक्षती सा पिबतीव चक्षुषा
रमापतिं यज्ञपतिं जगत्पतिं ७ अदितिरुवाच यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः
श्रवणमंगलनामधेय आपन्नलोकवृजिनोपशमोदयाद्य शंनः कृधीश भगवन्नसि दीन
नाथः ८ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने स्वस्था
य शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ९ आयुः परं वपुरभीष्टमतुल्य म २
लक्ष्मीर्द्योभूरसाः सकलयोगगुणास्त्रिवर्गः ज्ञानं च केवलमनंत भवंति तुष्टात्त्वत्तो नृणां
किमु सपत्नजयादिराशीः १० श्रीशुक उवाच अदित्यैवं स्तुतो राजन्भगवान्पुष्करेक्ष
णः क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ११ ॥ ॥ ॥

य विश्वस्य भवनस्थितिसंयमनार्थं स्वैरं गृहीताः पुरुशक्तेर्मायाया गुणा येन तस्मै तथापि स्वस्थाय अ
प्रच्युतस्वरूपाय कुतः शश्वदुपबृंहितः नित्यः ऊर्जितो यः पूर्णो बोधस्तेन व्यापादितं निरस्तं आत्मनि तमो
मायालक्षणं येन तस्मै ९ अस्मदीयमनोरथपूरणमीषत्कं कर्मेव नत्वेति कैमुतिकन्यायेनाह आयुः प
रंब्रह्मायुः पुनरपि द्यौर्भूरसातलं च द्योभूरसाः द्यौरिति एवपकपाठे भूस्वरसाश्च विलस्वर्गा इति
त्रिवर्गः रसेतिपाठे त्रीणि पदानि सकलायोगगुणा अणिमादयः १० क्षेत्रज्ञः अंतर्यामी ११ ॥

सपत्नैर्हृतश्रीर्येषां तेषां स्वधामतश्च्यावितानां च पुत्राणां संबंधि यत्तद्भवत्याश्चिरमाकांक्षितं मया विज्ञातं १२ कांक्षितमेवाह तानिति त्रिभिः प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सह उपासितुं एकत्र स्थातुमिच्छसि १४ प्रत्याहृतं यशश्च श्रीश्च यैः तान् अपारणीयाः अनतिक्रमणीयाः यद्यस्मादनुकूलैः ईश्वरः कालो येषां तैर्विप्रैर्गुप्ता इति

श्रीभगवानुवाच देवमातर्भवत्या मे विज्ञातं चिरकांक्षितं यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः १२ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान् प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुं १३ इंद्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषां स्त्रियो रुदंतीरासाद्य द्रष्टुमिच्छसि दुःखिताः १४ आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि १५ प्रायोधुनाते सुरयूथनाथा अपारणीया इति देवि मे मतिः यत्तेनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं

थि ६

ददाति १६ तथाप्युपायो मम देवि चिंत्यः संतोषितस्य व्रतचर्यया ते ममार्चनं नार्हति गंतुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् १७ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः स्वांशेन पुत्रत्वमुपेत्य ते सुतान्गोप्तास्मि मारीचतपस्यधिष्ठितः १८ उपधाव पतिं भद्रे प्रजापतिमकल्मषं मां च भावयती पत्यावेवं रूपमवस्थितं १९ नैतत्परस्मा आख्येयं पृष्ठयापि कथंचन सर्वं संपद्यते देवि देवगुह्यं सुसंवृतं २० ॥

ताः अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा मम मया चिंत्य एव तत्र हेतुः संतोषितस्येत्यादि श्रद्धानुरूपं श्रद्धानुसारेण फलहेतुत्वात् १७ मारीचस्य तपसि अधिष्ठाय स्थितः सन् गोप्तास्मि पालयिष्यामि १८ अतः पतिमुपधाव भज त्वं देवानां गुह्यं रहस्यं सर्वं सुसंवृतं गुप्तं सत् संपद्यते सिध्यति २० ॥

॥ ॥ ॥

प्रभोर्हरेरात्मनि जन्म लब्ध्वा २१ अवितथमीक्षणं दृष्टिर्यस्य सः २२ अनिलो यथा सर्वत्र समोपि साङ्गेण संघ-
र्षेणावनदाहकमग्निमाधत्ते एवं स्वयं पुत्रेषु समोपि दैत्यपक्षत्यागेनादित्यां वीर्यमाधत्तेत्यर्थः धिष्ठितमधिष्ठायोपस्थि-
तं सम्मीडे तुष्टावेत्यर्थः २४ अदितेरेव पूर्वजन्मनि पृश्निरिति नाम तस्या गर्भाय अर्भकाय वेदा गर्भे यस्य
यद्वा वेदानां गर्भाय वेदेषु प्रकाशमानायेत्यर्थः त्रयो लोका नाभौ यस्य सः त्रिनाभः तस्मै त्रयाणां लोकानां पृष्ठे

श्रीशुक उवाच एवं ह्युक्त्वा भगवांस्तत्रैवांतरधीयत अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्म-
नि प्रभोः २१ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् स वै समाधियोगेन कश्यपस्तदबुध्य-
त २२ प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः सोदित्यां वीर्यमाधत्त तपसा चिरसंभृतं २३ स-
माहितमना राजन्दारुण्यग्निं यथानिलः अदित्यां धिष्ठितं गर्भं भगवंतं सनातनं २४ हिरण्यग-
र्भो विज्ञाय समीडे गुह्यनामभिः २५ ब्रह्मोवाच जयोरुगाय भगवन्नुरुक्रम नमोस्तु ते नमो ब्रह्म-
ण्यदेवाय त्रिगुणाय नमो नमः २६ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे त्रिनाभाय त्रिपृष्ठाय
शिपिविष्टाय विष्णवे २७ त्वमादिरंतो भुवनस्य मध्यमनंतशक्तिं पुरुषं यमाहुः कालो भवाना-
क्षिपतीश विश्वं स्रोतो यथांतःपतितं गभीरं २८ त्वं वै प्रजानां स्थिरजंगमानां प्रजापतीनाम-
सि संभविष्णुः दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोप्सु २९ इति श्रीभागवतेऽष्ट-
मस्कंधे भगवदवतारः सप्तदशः १७

उपरिस्थिताय शिपिविष्टाय शिपयः पशवो जीवाः तेष्वंतर्यामितया प्रवि-
ष्टाय यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु अंतस्तिष्ठतीति श्रुतेः यद्वा शिपयो रश्मयस्तैर्वेष्टिताय
इत्यर्थः तथापि विष्णवे व्यापिने २७ अंतःपतितं तृणादि यथा गंभीरं स्रोत आक्षिपति आकर्षति तथा कालात्मा
भवान् विश्वमाक्षिपति संभविष्णुः उपादानशीलोऽसि अयं भावः नह्येवंभूतस्य तव जन्मादिसंभवः किंतु देवा

ततस्त्वष्टादशे भूत्वा वामनः स्वक्रतोर्बलेः यज्ञं गतः स्तुतस्तेन सत्कृतो वर्ण्यतेऽद्भुतः १ इत्थं विरिंचेन स्तुतं कर्म च दैवकार्यलक्षणं वीर्यं च प्रभावो यस्य स हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः अमृतभूः मृत्युजन्मरहितः शंखगदाब्जचक्राणि यस्य संतीति तथा अर्शआदित्वेन मत्वर्थीयो च प्रत्ययः आविसर्गपाठे स चासौ पिशंगवासाश्च १ झषराजो मकरः तदाकारयोः कुंडलयोस्त्विषा उल्लसंती श्रीर्वदनांबुजे यस्य श्रीवत्सो वक्षसि यस्य वलयैरंगदैश्च सहोल्लसंति किरीटादीनि यस्य २ श्रीमत्या वनमालया विराजितः वेश्मगतं तमः ३ अग्निजिह्वा देवा नगाः पर्वताः ४ तत्प्रा

श्रीशुक उवाच इत्थं विरिंचस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्यां चतुर्भुजः शंखगदाब्जचक्रः पिशंगवासा नलिनायतेक्षणः १ श्यामावदातो झषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजः पुमान् श्रीवत्सवक्षा वलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः २ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कंठनिविष्टकौस्तुभः ३ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः द्यौरंतरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ४ श्रोणायां श्रवणद्वादश्यां मुहूर्तेभिजिति प्रभुः सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणं ५ ॥ ॥

दुर्भावसमयमाह श्रोणायामिति भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्यां तत्रापि श्रोणायां श्रवणाख्ये चंद्रस्थिते तत्रापि श्रवणस्य प्रथमांशे अभिजिति नक्षत्रे तच्च शक्त्या दर्शितं अभिजिन्नामनक्षत्रमुपरिष्टादाषाढानां अधस्ताच्छ्रोणाया इति एवं शिष्टेऽभिजिति मुहूर्ते प्रभुः प्रादुर्बभूवेत्यर्थः किंच नक्षत्राण्यश्विन्यादीनि ताराशब्देन तारकाग्रहाः गुरुशुक्रादयः ते आद्या येषां ते [illegible]योपि सर्वे तस्य जन्म दक्षिणमुदारं चक्रुः जन्ममुहूर्ते गुणावहा बभूवुरित्यर्थः ५ ॥ ॥ ॥

विशेषांतरमाह यस्यां द्वादश्यां हरेर्जन्म तस्यां महत्त्वं विदुः तदा च मध्यंदिनगतः सविताऽतिष्ठत् सा च द्वाद
शी विजया नाम श्लोके त्वन्वयः शंखादयो येनेदुः तेषां च चित्रतूर्याणां निर्घोषोऽभवत् ७ देवा मनवः इत्यादीनां कुसु
मैः समवाकिरन्निति तिसॄणामेकेनान्वयः १० विस्मयांतरमाह यत्तद्वपुर्हरिरधारयत् प्रकटितवान् तेनैव वपुषा

द्वादश्यां सविताऽतिष्ठन्मध्यंदिनगतो नृप विजयानाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ६ शं
खदुंदुभयो नेदुर्मृदंगपणवानकाः चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ७ प्रीताश्चा
प्सरसोऽनृत्यन् गंधर्वप्रवरा जगुः तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ८ सिद्धविद्याधरगणाः
सकिंपुरुषकिन्नराः चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ९ गायंतोऽतिप्रशंसंतो नृत्यंतो
विबुधानुगाः अदित्या आश्रमपदं कुसुमैः समवाकिरन् १० दृष्ट्वादितिस्तं निजगर्भसंभवं परं पु
मांसं मुदमाप विस्मिता गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ११ यत्त
द्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः बभूव तेनैव स वामनो वटुः संपश्यतोर्दि
व्यगतिर्यथा नटः १२ तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः कर्माणि कारयामासुः पुरस्कृत्य
प्रजापतिं १३ तस्योपनीयमानस्य सावित्रीं सविताब्रवीत् बृहस्पतिर्ब्रह्मसूत्रं मेखलां क
श्यपोऽददात् १४ ददौ कृष्णाजिनं भूमिर्दंडं सोमो वनस्पतिः कौपीनाच्छादनं माता द्यौश्छत्रं
जगतः पतेः १५ कमंडलुं वेदगर्भः कुशान्सप्तर्षयो ददुः अक्षमालां महाराज सरस्वत्यव्य
यात्मनः १६ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् भिक्षां भगवती साक्षादुमादादंबिका

मातापित्रोः संपश्यतोरेव वामनो वटुर्बभूव दिव्यगतिरद्भुतचेष्टितः स्वयं कथंभूतः अव्यक्तचिद्रूपः कथ
मधारयत् भांति दीप्तिः विभूषणानि चायुधानि च तैर्व्यक्तं यथा भवति तथा १२ कर्माणि जातकर्मादीनि

रामः॥

स एवं संभावितो मारिष. श्रेष्ठो वटुर्ब्रह्मवर्चसेन ब्रह्मर्षिगणसंघुष्टां तां सभामतिक्रम्यारोचत १८ यदंश्वि वटवे
भूवनत्वाहुश्च त्वेत्यादि यावत्समाप्ति यजमानं यज्ञैर्भृगुभि उपकल्पितैः प्रवर्तितैः अखिलेन सारेण बलेन
संभृतः संपूर्णः २० नर्मदाया उत्तरतटे भृगुकच्छसंज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयन्तो बलेः ऋत्विजो भृगवः तं।

स ब्रह्मवर्चसेनैवं सभां संभावितो वटुः ब्रह्मर्षिगणसंघुष्टामत्यरोचत मारिषः १८ समिद्ध
माहितं वह्निं कृत्वा परिसमूहनं परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः १९ श्रुत्वाश्व
मेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः जगाम तत्राखिलसारसंभृतो भारेण गां
सन्नमयन्पदे पदे २० तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञिते प्रवर्तयंतो भृग
वः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविं २१ ते ऋत्विजो यजमानः सदस्या हतत्विषो वामनते
जसा नृप सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोथ दिदृक्षया क्रतोः २२ इत्थं सशिष्ये
षु भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः सदंडछत्रं सजलं कमंडलुं विवेश बिभ्रद्ध
यमेधवाटं २३ मौंज्या मेखलया वीतमुपवीताजिनोत्तरं जटिलं वामनं विप्रं मायामाणव
कं हरिं २४ प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः प्रत्यगृह्णन्समुत्थाय संक्षिप्ता
स्तस्य तेजसा २५ यजमानः प्रमुदितो दर्शनीयं मनोरमं रूपानुरूपावयवं तस्मा आसनमा
हरत् २६ स्वागतेनाभिनंद्याथ पादौ भगवतो बलिः अवनिज्यार्चयामास मुक्तसंगमनोरमं २७॥

व्यचक्षत अपश्यन् आरात्समीपे उदितं रविमिव २१ ते ऋत्विगादय. सूर्यः किलेत्येवमादि वितर्कयां
चक्रुरिति शेषः हयमेधवाटं अश्वमेधमंडपं विवेश २३ उपवीतवद्धृतमजिनमेवोत्तरमुत्तरीयं यस्य २४ संक्षि

चंद्रमौलिरित्यन्वयः अप्यर्थे चकारः चंद्रमौलिरपि गंगारूपं यन्मूर्ध्नि दधार तत्पदः २८ हे आर्य त्वां साक्षा=
त्सत्यं ब्रह्मर्षीणां तप एव मन्ये कथंभूतं तपः वपुर्धरं मूर्तिधारि २९ त्वच्चरणावनेजनैर्वार्भिर्हतमंहो यस्य
तस्य मे पुनीता पवित्री कृता मे मतः प्रतीच्छ गृहाण हे अर्हत्तम पूज्यतम ३३ इत्यष्टमस्कंधे भावार्थदीपिका

तस्यादशौचे किल कल्मषापहं स धर्मविन्मूर्ध्नि दधौ सुमंगलं यद्देवदेवो गिरिशश्चन्द्रमौ
लिर्दधार मूर्ध्नापरया च भक्त्या २८ बलिरुवाच स्वागतं ते नमस्तुभ्यं ब्रह्मन्किं करवाम ते =
ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्धरं २९ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलं अ
द्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ३० अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्व
च्चरणावनेजनैः हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ३१ यद्यद्वटो वां
छसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये गां कांचनं गुणवद्धाम मृष्टं तथान्नपेयमुत वा
विप्रकन्यां ३२ ग्रामान्समृद्धांस्तुरगान्गजान्वा रथांस्तथार्हत्तम संप्रतीच्छ ३३ इति श्री =
भागवते महापुराणे अष्टमस्कंधे बलिवामनसंवादे अष्टादशोऽध्यायः १८ श्रीशुक उवाच
इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतं निशम्य भगवान्प्रीतः प्रतिनंद्येदमब्रवीत् १ श्रीभग
वानुवाच वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करं यस्य प्रमाणं भृगवः
सांपराये पितामहः कुलवृद्धः प्रशांतः २ ॥

यामष्टादशः १८ ऊनविंशे तु हरिणा याचितेन पदत्रयं
प्रतिज्ञाते च बलिना ज्ञानं भार्गववारयन् १ तातुः स्तुतिः स्वयं तु षि इत्यादि प्रस्तुतोचितं वक्तव्यमिति मित्वा स्तुति
पिः स्वयन्नाह वामनः २ वचस्तवैतदिति षोडशभिः हे जनदेव सांपराये पारलौकिके धर्मे पितामहः प्र

निःसत्वस्य लक्षणं यो हि ज्ञात्वा याचकाय प्रत्याख्याता न ददामीति वक्ता कृपणस्य लक्षणं प्रथमं प्रतिज्ञा।
स्य पश्चाद्दाता नेति ३ तीर्थराजानुरूपे यस्मिन् युष्मत्कुले ४ यतो यस्मिन्कुले जातः सोऽग्रे रमस्याउर्वशौ ६
परागृदृशः बहिर्दृष्टेः ७ अतो हृदये स्थितं मां न ज्ञास्यतीत्येवान्निश्चित्य श्वासानिलान्तर्हितः सूक्ष्मो देहो य

नत्येतस्मिन्कुले कश्चिन्निःसत्वः कृपणः पुमान् प्रत्याख्याता प्रतिश्रुत्य यो वादाता द्विजा
तये ३ न सन्ति तीर्थे युधि चार्थिनार्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः युष्मत्कुले यद्यश
सामलेन प्रख्यातरुद्धानलय यो ध्रुवः ४ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीं प्रतिवीरं
दिग्विजये नाविंदत गदायुधः ५ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतं आत्मानं ज
यिनं मेने तद्वीर्यं भूर्यनुस्मरन् ६ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा हंतुं भ्रातृहणं क्रुद्धो
जगाम निलयं हरेः ७ तमायांतं समालोक्य शूलपाणिं कृतांतवत् चिंतयामास कालज्ञो वि
ष्णुर्मायाविनां वरः ८ यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव अतोऽहमस्य हृदयं प्रवेक्ष्या
मि परागृदृशः ९ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेंद्र श्वासानिलांत
र्हितः सूक्ष्मदेहस्तत्प्राणरंध्रेण विविग्नचेताः १० स तन्निकेतं परिमृश्य शून्यमपश्यमा
नः कुपितो ननाद क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः ११ अ
पश्यन्निति होवाच मयान्विष्टमिदं जगत् भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् १२

स्य विविग्नमतिकंपितं चेतो यस्य अनुकंपितचित्त इति वा तस्वार्थः न ददर्श अतः प्रविष्टत्वात् पुमान्यतः।
= सकाशान्नावर्तते तद्धामैव नूनं गतः नित्यमुक्तत्वादिति वास्तवोर्थः एवं मन्युपर्यंतमसवेडे विस्मो वैरं यत्कृत

कथं नामासौ क्रूरस्त्रियो मत्तोऽजीविष्यन्नेव कालं रवैरमुपैतीति शिष्टवानित्याशंक्याह वैरानुबंध एतावानामृत्योर्भ
वति देहिनां देहे निरूढाभिमानवतामज्ञानहेतुकः अहंमानेनोपबृंहितो मन्युरुपन्न भवत्येव यतोऽज्ञानप्रभवः अज्ञान
निवृत्तौ तु प्राकृपो रूपतया गो मा ह्यमेवेत्यर्थः १३ तदेवं पूर्वजानां स्तुत्वात्मनस्त्वत्तः स्तोति पितेति द्विजवेषधारिणो म
हेन्द्रादेवा एते न तु द्विजा इति तद्विद्वानपि स याचितः सन् स्वीयमायुर्ददौ एषां दो १४ ममपदासंमितानीति त्रिवि
क्रमपदाभिप्रायेण न चानृतवादः तत्रापि स्वपदस्य वामनपदमात्रं यावदर्थमेव प्रतिग्रहो मत्त इतः १७ ईश्वरस्यापि

वैरानुवंध एतावानामृत्योरिह देहिनां अज्ञानप्रभवो मन्युरहंमानोपवृंहितः १३ पिता प्रह्ला
दपुत्रस्ते तद्विद्वान्द्विजवत्सलः स्वमायुर्द्विजलिंगेभ्यो देवेभ्योदात्स याचितः १४ भवानाचरिता
न्धर्मानास्थितो गृहमेधिभिः ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः १५ तस्मात्त्वत्तो म
हीमीषद्वृणेहं वरदर्षभात् पदानि त्रीणि दैत्येंद्र संमितानि पदा मम १६ नान्यत्ते कामये राज
न्वदान्याज्जगदीश्वरात् नैनः प्राप्नोति वै विद्वान्यावदर्थप्रतिग्रहः १७ बलिरुवाच अहो ब्रा
ह्मणदायाद वाचस्ते वृद्धसंमताः त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा मां वचोभिः
समाराध्य लोकानामेकमीश्वरं पदत्रयं वृणीते योऽबुद्धिमान्द्वीपदाशुषं १९ न पुमा
न्मामुपव्रज्य भूयो याचितुमर्हति तस्माद्वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे २० ॥

याच्ञाकारणं याच्ञाप्रकारं चोक्त्वा बलेर्धनप्रश्नोत्तरत्वेन गर्वातिरेकेणाधिक्षेपप्रकारमाह अहो इति। वृ
द्धैः तेषां वाचो वृद्धानां संमताः त्वं तु बालः बालिशमतिश्चेति च्छेदः स्वार्थं प्रति अबुध इति च भक्तानामेवार्थे बुद्ध्यधि
शेन स्वार्थे परिपूर्णस्य तव त्वन्यतिरेकेण स्वार्थमवादित्यर्थः १८ अबुधत्वमेवाह मामिति द्वीपस्य दाशुं दा
यकं दातारं अबुद्धिमान् वस्तुबुद्धिमानित्यवच्छेदः १९ कामं यथेच्छं सम्यक् आदरप्रसारणेनेत्यर्थः अतएव तथा प्रति

पुनरपि निःस्पृहत्वमेवाविष्कुर्वन्नाह यावंत इति सप्तभिः २१ नववर्षसमेतेन द्वीपेनापि सप्तानां द्वीपवराणां इच्छया। २२ तृष्णया अंतं न गता इत्यस्माभिः श्रुतं २३ असंतुष्टस्तु त्रिभिर्लोकैरपि न सुखं वर्त्तते २४ आशुशुक्षणिरग्निः २५ सिद्धोहं कृतार्थः एतावतैव सर्वस्यापहारो मिदिरिति गूढोभिप्रायः तदेवाह वित्तं हि यावत्प्रयो

श्रीभगवानुवाच यावंतो विषयाः प्रेष्ठास्त्रिलोक्यामजितेंद्रियं न शक्नुवंति ते सर्वे प्रतिपूरयितुं नृप २१ त्रिभिः क्रमैरसंतुष्टो द्वीपेनापि न पूर्यते नववर्षसमेतेन सप्तद्वीपवरेच्छया २२ सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः अर्थैः कामैर्गता नांतं तृष्णाया इति नः श्रुतं २३ यदृच्छयोपपन्नेन संतुष्टो वर्त्तते सुखं नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः २४ पुंसोयं संसृतेर्हेतुरसंतोषोर्थकामयोः यदृच्छयोपपन्नेन संतोषो मुक्तये स्मृतः २५ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्षणिः २६ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् एतावतैव सिद्धोहं वित्तं यावत्प्रयोजनं २७ श्रीशुक उवाच इत्युक्तः स हसन्नाह वांछातः प्रतिगृह्यतां वामनाय महीं दातुं जग्राह जलभाजनं २८ विष्णवे क्ष्मां प्रदास्यंतमुशना असुरेश्वरं जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः २९ शुक्र उवाच एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः कश्यपाददितेर्जातो देवानां कार्यसाधकः ३० प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता न साधु मन्ये दैत्यानां महानुपगतोनयः ३१ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतं दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः त्रिभिः क्रमैरिमांल्लोकान्विश्वकायः क्रमिष्यति सर्वस्वं विष्णवे दत्वा मूढ वर्त्तिष्यसे कथं ३३

जनमेव सुखं आधिक्यस्य क्षेपणाव हत्वादित्य।

र्थः अनयः अन्यायः ३१ अन्यायमेवाह एष इति त्रिभिः अनुमया परत्रपमेव ... तेनाधिके तत्राह त्रिभिरिति क्रमि

तथापि प्रतिश्रुतं संपादनीयमेवेति चेत्तत्राह क्रमत इति द्वाभ्यां एकेन पादन्यासेन भूमिं क्रममाणस्य त्वर्थः तार्ती-
यस्य तृतीयपदन्यासस्य ३४ तथापि सर्वस्वदानात्कीर्तिलाभो भविष्यतीति चेत्तत्राह न तद्दानमिति न पश्यन्ते कागुप।
कर्मप्रवृत्ते ३६ ननु तर्हि श्रुत्यनैतिकपमन्तं वा च्यं तत्राह सार्धैः षड्भिः अत्रापि सत्यानृते तत्र व्यवस्थापयाव बह्वृचश्रु-
त्यादि प्रथमं ओमिति सत्यं नेत्यनृतमित्यादिना सत्यानृतयोः लक्षणपूर्वकं स्तुतिनिंदाभ्यां सत्यं विहितं अनृतं च नि।
षिद्धं अनृतं च परंपराया एतद्रूक्तमद्वारमित्यादिना सत्ये दोषाननृते च गुणानुक्तौ तस्मात्काल एव दद्यात्काले

क्रमतो गां पदैकेन द्वितीयेन दिवं विभो। खं च कायेन महता तार्तीयस्य कुतो गतिः ३४
निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतं प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान्
३५ न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ३६ ध-
र्माय यशसेऽर्थाय कामाय स्वजनाय च पंचधा विभजन्वित्तमिहामुत्र च मोदते ३७
अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत्
३८ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य जीवतः वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्म

न दद्यात् तस्यापन्ने सत्यमिति पुनीकरोति सूपसंहारेण वृत्तिसंकटादिष्वनृतमप्यनुज्ञातं तमिमं श्रुत्यर्थं दर्शि-
यन्नाह द्वाभिः ओमित्यंगीकारेण यत्प्रोक्तं तत्सत्यं नेति यदाह तदेवानृतं ३८ ननु सत्यमीषदनृतं विना न सिद्ध्यै।
तोत्याशंक्याह सत्यं पुष्पफलं विद्यात् जानीयात् आत्मवृक्षस्य देहस्य यस्य वृक्षस्य कुतः जीयते श्रुत्यो च्यते
इत्यर्थः यावत्तरुर्न शुष्यते पर्याप्ति श्रुत्या वाचः सत्यं पुष्पं फलं वेत्युक्तं तथापि विवादो देहनिर्वाहाधीनत्वा-
दात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तं भवतु पुष्पफलस्थानीयं सत्यं ततः किमत आह वृक्षे देहेऽजीवति तत्सु

राम:।।

ननु तर्हि इदं मम तव वा सर्वं दास्ये इत्यंगीकृत्य अनृतं स्यादित्याह सर्वमिति तथा च श्रुतिः अथैतत्पूर्वं र्योम यत्ओमित्येतदिति पद्मसर्वं नेति ब्रूयात् पापिका स्य कीर्तिर्जायते सैनं तत्रैव हन्यादिति अनीदृतिसंकटादिष्वनृतेन दोषायेत्युपसंहरति स्त्रीषु प्रोत्साहनेन वशीकारे नर्मणि परिहासे विवाहे च वरादिस्तुतौ गवां ब्राह्मणानां चार्थे हिंसायां वकस्यचित्प्राप्तायां तथा च वाशिष्ठवचनः वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेदिति तथा च श्रुतिः

सर्वं नेत्यनृतं ब्रूयात् स दुष्कीर्तिः श्वसन्मृतः स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे ४३ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितं ४३ इति श्रीभागवते महापुराणे अष्टमस्कंधे वामनप्रादुर्भावे एकोनविंशतिरध्यायः १९ श्रीशुक उवाच बलिरेवं गृहपतिः कुलाचार्येण भाषितः तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुं १ बलिरुवाच सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनां अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् २ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजं प्रतिश्रुत्य ददामीति प्राह्रादिः कितवो यथा ३ न ह्यसत्यात्परोऽधर्म इति होवाच भूरियं सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरं ४ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलंभनात्

तिः तस्मात्काल एव रयात्कालेन दद्यात् तस्मात्तस्मात्ते मिथुनीकरोतीति ४५ इत्यष्टमस्कंधे भावार्थदीपिकायामेकोनविंशोऽध्यायः १९ विंशे त्वनृतभीतोऽसौ ज्ञात्वापि कपटं हरेः ददावेव ततो विष्णुः सहसा ववृधेऽद्भुतं १ भगवता त्वया प्रोक्तं सत्यं किं तत् योऽर्थकामादिकं न बाधेत स गृहमेधिनां धर्म इति २ कथं प्रत्याचक्षे निराकरोमि ननु प्रत्याख्याने दोषा उक्तास्तत्राह नाहमिति अधन्यात् दारिद्र्यात् मृत्योरपि ५॥

ज१ नरं२ हमः॥

किं च यद्यद्धरादिकं तत्तत्सर्वं संपरेतं मृते पुरुषे हास्यति त्यक्ष्यत्येव तत्किमिति जीवतैव स्वयं न देयमिति भावः तथापि
तावद्वृत्तिसंकटपरिहारार्थं धर्येयमिति चेत्तत्राह तस्येति विप्रश्चेन्नार्थेन दत्तेनापि तनुष्येत् तर्हि तस्या।
र्थस्य त्यागे दाने किं निमित्तं न किंचित् याचितार्थस्य त्यागे दाने विप्रस्याश्रितो बन्धुदानं प्रियमेव स्यात् अतस्तद्या।
चितं सर्वं देयं न वा किंचिदिति भावः ६ तर्हि न देयमेवेति चेत्तत्राह श्रेय इति दुस्त्यजैरसुभिरपि को विकल्पो वि
चारः ७ यैर्देहं दूरे दुर्निवर्तिभिरियं वुभुजे उपभुक्ता तेषामिह लोकात्परलोकं भोगान्नितिवा कालो

यद्ददास्यति लोकेऽस्मिन्संपरेतं धरादिकं तस्य त्यागे निमित्तं किं विप्रस्तुष्येन्न तेन चेत् ६
श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु
७ यैरियं बुभुजे ब्रह्मन्दैत्येन्द्रैरनिवर्तिभिः तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं
भुवि ८ सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः न तथा तीर्थ आयाते श्रद्धया ये धनत्य
जः ९ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः कुतः पुनर्ब्रह्म
विदां भवादृशां ततो वटोरस्य ददामि वाञ्छितं १० ॥

अग्रसीत् संहृतवान् न तु भुवि तैरधिगतं प्राप्तं यशो ग्रसीत् अतः कीर्तिरेव साध्या नान्यदिति भावः ८ देह
त्यागादपि धनत्यागो कीर्तिर्भवतीत्याह सुलभा इति तनुं त्यजन्तीति तनुत्यजः तथा तीर्थपात्रे आगते तु श्रद्धया ध
नत्याग एव मया कार्य इति भावः ९ तर्हि निर्धनत्वेऽपि दैन्यं स्यादिति चेत्तत्राह मनस्विन इति यादृशां ता
दृशानामप्यर्थिनां कामोपनयेन कामपूरणेन दुर्गतिर्दैन्यमिति यत् तच्छोभनं न तु भवादृशानां तु कामोपन
येन कामपूरणेन दुर्गतिर्दैन्यमिति यत् तच्छोभनं येन न दुर्गतिः शोभनमिति किं पुनर्वक्तव्यमित्यर्थः १०।

ननु नायं वटुः किंतु विष्णुस्तव शत्रुरित्युक्ते तर्हि सुतरामेव दास्यामीत्याह यजन्तीति परः शत्रुर्वास्तु ११ यद्यपि ।
यशो न जिहासति तर्हि युद्धे मां हत्वा एनां भूमिं हरेत् शयीत वा सम्यग्ज्ञातः सन्समक्षितेशयीतेति वा संबन्धः १२

यजन्ति यज्ञं क्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः । स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै हि क्षितिमीप्सितां मुने ११ यद्यप्यसावधर्मेण मां बध्नीयादनागसं । तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुं १२ एष वा उत्तमश्लोको न जिहासति यद्यशः । हत्वा मैनां हरेद्युद्धे शयीत निहतो मया १३ श्रीशुक उवाच एवमश्रद्धितं शिष्यमनादेशकरं गुरुः । शशाप दैवप्रहितः सत्यसंधं मनस्विनं १४ दृढं पण्डितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया । मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः १५ एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् । वामनाय ददावेनामर्चित्वोदकपूर्वकं १६ विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी । आनिन्ये कलशं हैममवनेजन्यपां भृतं १७ यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा । अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः १८ तदासुरेन्द्रं दिवि देवतागणा गंधर्वविद्याधरसिद्धचारणाः । तत्कर्म सर्वेऽपि गृणन्त आर्जवं प्रसूनवर्षैर्ववृषुर्मुदान्विताः १९ नेदुर्मुहुर्दुन्दुभयः सहस्रशो गंधर्वकिंपूरुषकिन्नरा जगुः । मनस्विनानेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयं २० तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकं । भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत २१ ॥

अश्रद्धितं अजातश्रद्धं १४ जालकं मुक्तामयमाभरणविशेषः तन्मालावती अवनेजनीनामपां कलशं भृतं
पूर्णं अवर्धत वाञ्छातः प्रवृद्धस्तत्तामिति बलिनापूर्वमुक्तत्वात् गुणत्रयमात्मा नियन्ता यस्य तत् अत एव भूः

ऋत्विगादिसहितोबलिस्तस्यहरेःकायेएतद्विश्वंददर्श २२ तदेवप्रपंचयतिरसामितिपादादिभिः सप्तभिः
मारुतंगणंवायुसंघंइंद्रसेनोबलिःसेनायस्यसःइंद्रस्यदर्शनीयत्वात् २३ ऐक्षत् आत्मान्स्वपार्षदान्मुख्यान्

कायेबलिस्तस्यमहाविभूतेः सहर्त्विगाचार्यसदस्यएतत् ददर्शविश्वंत्रिगुणंगुणात्मके
भूतेंद्रियार्थाशयजीवयुक्तं रसामचष्टांघ्रितलेऽस्यपादयोर्महींमहीध्रान्पुरुषस्यजंघ
योः पतत्रिणोजानुनिविश्वमूर्तेरूर्वोर्गणंमारुतमिंद्रसेनः २३ संध्यांविभोर्वाससिगु
ह्यऐक्षत्प्रजापतीञ्जघनेआत्ममुख्यान् नाभ्यांनभःकुक्षिषुसप्तसिंधूनुरुक्रमस्योरसि
चर्क्षमालां २४ हृद्यंगधर्मंस्तनयोर्मुरारेरृतंचसत्यंचमनस्यथेंदुं श्रियंचवक्षस्यरविं
दहस्तांकंठेचसामानिसमस्तरेफान् २५ इंद्रप्रधानानमरान्भुजेषुतत्कर्णयोःककुभोद्यौ
श्चमूर्ध्नि केशेषुमेघान्श्वसनंनासिकायामक्ष्णोश्चसूर्यंवदनेचवह्निं २६ वाण्यांचछं
दांसिरसेजलेशंभ्रुवोर्निषेधंचविधिंचपक्ष्मसु अहश्चरात्रिंचपरस्यपुंसोमन्युंल
लाटेधरेऽवलोभं २७ स्पर्शेचकामंनृपरेतसांभः पृष्ठेत्वधर्मंक्रमणेषुयज्ञं छायासु
मृत्युंहसितेचमायांतनूरुहेष्वोषधिजातयश्च २८ नदीश्चनाडीषुशिलानखेषुबुद्धा
वजंदेवगणानृषींश्च प्राणेषुगात्रेस्थिरजंगमानिसर्वाण्यनीदंभुवनंनिरीक्ष्य २९ सर्वे
ऽसुराःकश्मलमापुरंगसुदर्शनंचक्रमसह्यतेजः धनुश्चशार्ङ्गंस्तनयित्नुघोषं पर्जन्यघो
षोजलजःपांचजन्यः ३० ॥

पद्मान् ऋक्षमालां नक्षत्रपंक्तिं २४ अंगहेराजन् समस्तान्रेफांश्च
शब्दान् घोषश्च घांच २५ रसेरसनेरेतसि रेतसि क्रमणेषुपादन्यासेषु ओषधिजातीश्च २८ प्राणेषु
इंद्रियेषु सर्वाण्यनीदं स्पष्टदिवाकांतरं २९ सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणान्वयः ३० ॥

च ५

विद्याधरसंज्ञोसिः ३१ मीनकुंडले मकरकुंडले स्फुरंति किरीटादीनि यस्य सः मधुव्रतानां स्रजो यस्यां तया वनमालया श्रीवत्सादिभिश्चावृतो बभौ ३२ उरुक्रमत्वमेवाह क्षितिमिति द्वितीयं पदं क्रमतो बिलिपतेस्त्रि विष्टपं ते दीयं किंचिन्मात्रं जातं तृतीयाय तु न किंचिदपि ३३ तत्र हेतुः उरुक्रमस्यांघ्रिस्त्रिविष्टपादुपर्युपरि गच्छन् महर्जनाभ्यां तपसः परं सत्यलोकं गत इति इति श्रीभागवतभावार्थदीपिकायामष्टमस्कंधे विंशो

कौमोदकी विष्णुगदा तरस्विनी विद्याधरोसिः शतचंद्रयुक्तः तूणोत्तमावक्षयसायकौ च सु नंदमुख्या उपतस्थुरीशं ३१ स्फुरत्किरीटांगदमीनकुंडलः श्रीवत्सरत्नोत्तममेखलाव रैः मधुव्रतस्रग्वनमालया वृतो रराज राजन् भगवानुरुक्रमः ३२ क्षितिं पदैकेन बले र्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृ तीयाय तदीयमण्वपि ३३ उरुक्रमस्यांघ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ३४ इति श्रीभागवते महापुराणे अष्टमस्कंधे महाविश्वरूपो नाम विंशतितमोऽध्यायः २० श्रीशुक उवाच सत्यं समीक्ष्याब्जभवो नखेंदुभिर्हतस्वधामद्युतिरावृतोभ्यगा त् मरीचिमिश्रा ऋषयो बृहद्व्रताः सनंदनाद्या नरदेव योगिनः १ ॥ ॥

ध्यायः २० एकविंशे पदापूर्तिमिषेणैव बलिं बंधनं विष्णुनाकृतमुक्त्वा तस्य ख्यापयितुं जने १ उरुक्र मस्यांघ्रिस्तपसः परं गतः इत्युक्तं ततः किं वृत्तं तदाह सत्यं सत्यलोकं प्राप्तं तमंघ्रिं समीक्ष्याब्जभवोभ्यगात् नखामरीचिमिश्राद्यश्च निकटा यो रन्वयः कथंभूतो ब्जभवः हरेरंघ्रेर्नखा एवं इंदवः तैर्हता स्वधाम्नो द्युति

अंगानि शिक्षादीनि ६ पुराणानि तत्संहिताश्च योगसमीरणेन दीपितं ज्ञानमेवाग्निस्तेन रंधितं दग्धं कर्मकल्मषं कर्म
फलं यैस्ते च सर्वे तमंघ्रिं ववंदिरे यस्यांघ्रेः स्मरणानुभावतः अकर्मकं कर्मभिरप्राप्यं विष्णोरंघ्रये ३ स्वयं यन्ना

वेदोपवेदा नियमान्वयान्विता स्तर्केतिहासांगपुराणसंहिताः ये चापरे योगसमीरदीपितज्ञा
नाग्निना रंधितकर्मकल्मषाः २ ववंदिरे यत्स्मरणानुभावतः स्वायंभुवं धाम गता अकर्मकं
अथांघ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोर्हणोदकं ३ समर्च्य भक्त्याभ्यगृणाच्छु
चिश्रवा यन्नाभिपंकेरुहसंभवः स्वयं धातुः कमंडलुजलं तदुरुक्रमस्य पादावनेजनपवित्र
तया नरेंद्र ४ स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ब्रह्मा
दयो लोकनाथाः स्वनाथाय समादृताः ५ सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये
तोयैः समर्हणैः स्रग्भिर्दिव्यगंधानुलेपनैः ६ धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलांकुरैः
स्तवनैर्जयशब्दैश्च शंखदुंदुभिनिःस्वनैः ७ जांबवानृक्षराजस्तु भेरीशब्दैर्मनोजवः वि
जयं दिक्षु सर्वासु महोत्सवमघोषयत् ८ महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाच्ञया ऊचुः
स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ९ ॥

भिपंकेरुहसंभवः तस्य विष्णोरंघ्रिं समभ्यर्च्य लोकत्रयं निमार्ष्टि पवित्रयति संक्षिप्ता उपसंहृता आत्मविभूतिः स्व
विस्तारो येन तस्मै यद्वा पूर्वं वामनरूपेणास्थिताय स्तवनैः ७ त्रिपदव्याजयाच्ञया याच्ञाकपटयाच्ञया तया।
स्वभर्तुर्बलेर्महीं हृतां दृष्ट्वा ऊचुः ९ ॥ ॥ ॥

किमर्थं तु लसदाह नैवेत्यादि सार्धैस्त्रिभिः १० अनुचराश्चते असुराश्च १३ अर्थीकृत्य अनुकूलः २४ पौरुषैः कालमति=

नवायं ब्रह्मबंधुर्विष्णुर्मायाविनां वरः द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति १० अनेन या=
चमानेन शत्रुणा वटुरूपिणा सर्वस्वं नो हृतं भर्तुर्न्यस्तदंडस्य बर्हिषि ११ सत्यव्रतस्य सततं दीक्षित
स्य विशेषतः नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः इ
त्यायुधानि जगृहुर्बलेरनुचरासुराः १३ ते सर्वे वामनं हंतुं शूलपट्टिशपाणयः अनिच्छतो बले रा
जन्प्राद्रवन्जातमन्यवः १४ तानभिद्रवतो दृष्ट्वा दितिजानीकपान्नृप प्रहस्यानुचरा विष्णोः प्रत्यषेध
न्नुदायुधाः १५ नंदः सुनंदोऽथ जयो विजयः प्रबलो बलः कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्त्रि
राट् १६ जयंतः श्रुतदेवश्च पुष्पदंतोऽथ सात्वतः सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीं १७
हन्यमानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः वारयामास संरब्धान्काव्यशापमनुस्मरन् १८ हे वि
प्रचित्ते हे राहो हे नेमे श्रूयतां वचः मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् १९ यः प्रभुः स
र्वभूतानां सुखदुःखोपपत्तये तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् २० यो नो भवाय प्रागासी
दभवाय दिवौकसां स एव भगवानद्य वर्तते तद्विपर्ययं २१ बलेन सचिवैर्बुद्ध्या दुर्गैर्मंत्रौषधादि
भिः सामादिभिरुपायैश्च कालं नात्येति वै जनः २२ भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः दैव
र्द्धैस्त एवाद्य युधि जित्वा नदंति नः २३ एतान्वयं विजेष्यामो यदि दैवं प्रसीदति तस्मात्कालं प्रती
क्षध्वं यो नोऽर्थत्वाय कल्पते श्रीशुक उवाच पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः रसां निर्विविशू रा

वर्तितुं पुमानीश्वरः समर्थो न भवति हरेरनुचरा देवाः दैवेन ऋद्धैः समृद्धैर्भवद्भिः २३ अर्थत्वाय आनुकूलाय २५॥

त्रिभुवनपतिषु राजत इति विराट् प्रभोश्चिकीर्षितं ज्ञात्वा अयमर्थः अस्य सर्वस्वापहारेण ममेत्यभिमानं संत्याज्येदानी
महस्वीकारेणाहंकारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति नचानेन तुल्योऽन्यः कोपि सद्यो धीरो वास्तीति त
दृशः प्रख्यापनार्थं किंचिद्दुःखमपि तु मर्षीष्यतीति मनोभिप्रायं ज्ञात्वा तं बबंधेति सुत्येहनि सोमाभिषववदिने रोदस्योः
द्यावापृथिव्योः २७ असौ सूर्यः ३१ मया आत्मनेत्यन्वयः आपनेत्यर्थः स्वं दिशश्च तनोः तव्याप्तेः स्वं स्वर्गं सर्वस्व

अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितं बबंध वारुणैः पाशैर्बलिं सौत्येहनि क्रतौ २७ हा
हाकारो महानासीद्रोदस्योः सर्वतो दिशं निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना २८ तं
बद्धं वारुणैः पाशैर्भगवानाह वामनः नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप २९ पदानि त्रीणि
दत्तानि भूमेर्मह्यं त्वयासुर द्वाभ्यां क्रान्ता मही सर्वा तृतीयमुपकल्पय ३० यावत्तपत्यसौ गोभि
र्यावदिंदुः सहोडुभिः यावद्वर्षति पर्जन्यस्तावती भूरियं तव ३१ पदैकेन मयाक्रान्तो भूर्लो
कः खं दिशस्तनोः स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ३२ प्रतिश्रुतमदातुस्ते निरये वा
स इष्यते विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ३३ वृथा मनोरथस्तस्य दूरे स्वर्गः पत
त्यधः प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलभते ३४ विप्रलब्धो ददामीति त्वयाहं चाढ्यमा
निना तद्व्यलीकफलं भुंक्ष्व निरयं कतिचित्समाः ३५ इति श्रीभा० बलिनिग्रहे एकविंशोध्या

गुरुणा शुक्रेणानुमोदितः सन् एवमुक्तेपि निरयपरिहारार्थं स्वर्गादिप्रापरिहारार्थं च मनोरथं कुर्वंतं प्रत्या
ह वृथेति यः प्रतिश्रुतस्यादानेन याचकं विप्रलभते तस्य मनोरथो वृथैव स्वर्गश्च तस्य दूर एव स चाधः पत
त्येव ३३ त्वया चाहं विप्रलब्धः तस्मात् व्यलीकफले अनृतस्य फलं निरयं भुंक्ष्वेत्यर्थः ॥ ३५ इत्यष्टमे एकविं

द्वाविंशे तु प्रसन्नः सत्यरक्षायां सुतलं बलिं दत्वा यज्ञान्ते हरिर्निर्गत्य तद्द्वारपोऽभवत् १ समर्पिततनुश्चित्तनिर्म
लाचलभक्तितः छलितेनाबलिना चित्रं स्वमेवार्थपदं च्युतः २ विप्रकृतेः अपकृतः भिद्यमानः सत्वाच्चाल्यमा
नः हे उत्तमश्लोकेति कटाक्षः मम वचः ईरितं प्रतिश्रुतं तत्तावद्व्यलीकं त्वया कपटेन वामनतया भिक्षित्वा रूप।
स्या विप्रकृतत्वात् एवमपि यदि भवान्व्यलीकं मन्यते तथापि तदृतमेवाहं करोमि मदुक्तं प्रलम्भनं न भवतु मे।
शीर्ष्णि निजं तृतीयं पदं कुरु न च द्वाभ्यां विश्वं क्रान्तवतो मे तव शिरः पदपर्याप्तं न भवतीति मन्तव्यं याः चित्तेन च

श्रीशुक उवाच एवं विप्रकृतो राजन्बलिर्भगवतासुरः भिद्यमानोप्यभिन्नात्मा प्रत्याहा
विक्लवं वचः १ बलिरुवाच यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते
करोम्यृतं तन्न भवेत्प्रलम्भनं पदं तृतीयं कुरु शीर्ष्णि मे निजं २ बिभेमि नाहं निरयात्पद
च्युतो न पाशबंधाद्व्यसनाद्दुरत्ययात् नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवा
दाद्भृशमुद्विजे यथा ३ पुंसां श्लाघ्यतमं मन्ये दंडमर्हत्तमार्पितं यं न माता पिता भ्राता सु
हृदश्चादिशंति हि ४ ॥ ॥

स्वहयं जातं नहीं दधिकमेव स्यात् वित्तादपि वित्ततोधिकत्वादिति भावः ननु च आपदर्थे धनं रक्षेद्दारान्रक्षे
द्धनैरपि आत्मानं सततं रक्षेद्दारैरपि धनैरपि इत्यादिवचनादात्मभयपरिहाराय सर्वं स्वत्यज्यते त्वं तु कु।
तो भीतः सन्नात्मानमर्पयसि अत आह बिभेमीति असाधुवादात् अयकीर्तेर्यथाहं भृशमुद्विजे तथा
निरयादिभ्यो न बिभेमि ननु मया निग्रहात्तवापकीर्तिर्जातैव नैवेत्याह पुंसामिति अर्हत्तमेनार्पितं यं दंडं माता
दयोपि न हि आदिशंति नैवार्पयंति हितैषणात्वया निगृहीतोहं श्लाघ्य एवास्मीति भावः ४ ॥ ॥

नन्वहं देवानां      हिनिषीनामसुराणां तत्राह त्वं न नमितिपारोस्यः शत्रुच्छलेन वर्त्तमानः ५ शत्रुत्वं पुनर्भक्ता।
निवास्माननुग्रहीतुमेवेत्याह यस्मिन्निति उ अहो ह प्रसिद्धं अतो नात्र मम लज्जा नाविद्ः खेमित्याह तेन गुरुणा भ।
वता ६ किं च योयं दुरूपो मम मानुग्रहस्त्वया कृतः स तु त्वदुक्तयोत्वेन न त्वहं मनुग्रहस्य पात्रमित्याशयेनाह
पितामहस्तिभवदीयानां सम्मतः यत आविष्कृतः साधुवादो यस्य त्वमेव परमः आश्रयो यस्य सः अतो भव

त्वं न नमसुराणां नः पारोस्यः परमो गुरुः । यो नो नैकमदीयानां विभ्रंशं चतुरादिशत् ५
यस्मिन्वैरानुबंधेन रूढेन विबुधेत्तराः । बहवो लेभिरे सिद्धिं यामु है कांतयोगिनः ६
तेनाहं निग्रहीतोस्मि भवता भूरिकर्मणा । बद्धश्च वारुणैः पाशैर्नातिव्रीडेन च व्यथे ७ पिता
महो मे भवदीयसम्मतः प्रह्राद आविष्कृतसाधुवादः । भवद्विपक्षेण विचित्रवैशसं संप्रा
पितस्त्वत्परमः स्वपित्रा ८ किमात्मनानेन जहाति योन्ततः किं रिक्थहारैः स्वजनाख्यद
स्युभिः । किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ९ इत्थं स निश्चि
त्य पितामहो महानगाधबोधो भवतः पादपद्मं । ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्ष
क्षपणस्य सत्तमः १० ॥

तो विपक्षेण विद्विषा हिरण्यकशिपुना विचित्रं वैशसं हिंसां संप्रापितोपि ७ देहादीनामसारतां निश्चित्य कु
तोभयं ध्रुवं च भवतः पादपद्ममेव प्रपेदे अथ तस्मादहमपि दैवेन तस्यैव भाग्येन त्वदन्तिकं नीत इति च तु।
र्णामन्वयः अन्ततः आयुषोन्ते रिक्थहारैः पुत्रैः इह गेहैः केवलमायुषो व्यय एव न तु सुखं किंचित् सः प्र
सिद्धो महान् स्वपक्षक्षपणस्य कुलं क्षपयतीति तथा १० ॥ ॥ ॥

तस्यापि प्रसभं बलात्प्राजिताग्नी येऽस्य प्रयासस्वस्त्रियापालध्वमतिः सन्नुमानिदं जीवितं अध्रुवं न मन्य
ते कथंभूतं तत्कृतांतस्यांतिकवर्तिन स्वाः सन्निहितं ११ राकापतिः पूर्णेंदुः १२ अंजनत्विषं श्यामं
१३ स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः १४ शिरस्यानमन्ते

अथाहमद्यात्मरियो हत्वांतिकं दैवेन नीतः प्रसभं त्याजितश्रीः इदं कृतांतांतिकवर्ति जीवितं ययाध्रुवं स्तब्धमतिर्न बुध्यते ११ श्रीशुक उवाच तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः १२ तमिंद्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणं प्रांशुं पिशंगांबरमंजनत्विषं प्रलंबबाहुं सुभगं समैक्षत १३ तस्मै बलिर्वारुणपाशयंत्रितः समर्हणं नोपजहार पूर्ववत् ननाम मूर्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह १४ स तत्र हासीनमुदीक्ष्य सत्पतिं सुनंदनंदाद्यनुगैरुपासितं उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविह्वलः १५ श्रीप्रह्लाद उवाच त्वयैव दत्तं पदमैंद्रमूर्जितं हृतं तदेवाद्य तथैव शोभनं मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् १६ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे १७ ॥

बउपेत्य मूर्ध्ना ननाम बले
स्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विक्लवो विह्वलः १५ त्वयैवेति न हि ऐंद्रं पदमेतदीयं त्वयापहृतं किं। तु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतं तत्र हेतुः मन्य इति यद्यस्मात् श्रियो वैभवात् आत्ममोहनात् तस्माद्विभ्रंशि त १६ मोहनत्वमेवाह यया श्रिया विद्वानपि यतः संयतोऽपि मुह्यते तत्तस्याः स्वस्य कोऽन्यः पुमानात्मनो गतिं तत्त्व

तस्य प्रह्लादस्यानुशृण्वतः तदैव विंध्यावलिरपि वक्तुं प्रवृत्ता तां च सम्मानयन् हिरण्यगर्भः द्राग् ... स्थितः अनस्तेस्या एवं वाक्यं प्रथममवतारयति बद्धं वीक्ष्येति त्रिजगतः कर्तुः प्रभोः पालकस्य अस्यतः संहर्तुश्च ईश्वरस्य तव आवहंति किं आवहंतीति किं समर्पयंतीत्यर्थः त्वयाऽवरोपितः कर्तृवादः कर्तारः स्वतंत्रा वयमिति वादो येषां ते अयं भावः लोकत्रयं मयार्पितं तृतीयपदार्थे देहं समर्पयितुं प्रतिज्ञातं ममेतत्करोमीति देहादि स्व

श्रीशुक उवाच बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला। प्रांजलिः प्रणतोपेंद्रं बभाषेऽवाङ्मुखी नृप १८ विंध्यावलिरुवाच क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र। कुधियोऽपर ईश कुर्युः कर्तुः प्रभोस्तव किमस्यत आवहंति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः १९ तस्यानुशृण्वतो राजन्प्रह्लादस्य कृतांजलेः हिरण्यगर्भो भगवानुवाच मधुसूदनं २० श्रीब्रह्मोवाच भूतभावन भूतेश देवदेव जगन्मय मुंचैनं हृतसर्वस्वं नायमर्हति निग्रहं २१ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये निवेदितं च सर्वस्वमात्माविक्लवया धिया २२ यत्पादयोरशठधीः सलिलं प्रदाय दूर्वांकुरैरपि विधाय सतीं सपर्यां अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् २३ ॥

स्वस्याविष्कारेण वंचनार्थं कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वामी अतो मंदबुद्धिमेनं केवलं कृपया विमुच्य पालयेति तदेवं प्रह्लादस्य विंध्यावलेश्च परमार्थोक्त्या प्रसन्नो हरिः १९ प्रह्लादानुलोकदृष्ट्यैव विज्ञापयति भूतभावनेति त्रिभिः २१ निग्रहानर्हत्वे हेतुः कृत्स्नेति सर्वस्वमेवाह आत्मेति तदेवं कैमुत्येनाह यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन उत्तमां गतिं प्राप्नोति तस्मै तुभ्यमसौ बलिः त्रिलो

तस्य विशः श्रियो नन्वर्थापहारे कोपमनुग्रहं तत्राह यन्मद इति येन मदो यस्य सः अत एव स्तब्धः अनम्रः सन् मदस्तंभहेतूनामपहार एवानुग्रह इत्यर्थः २४ दुर्लभं पुरुषजन्म कथंचिल्लब्ध्वा ततोपि जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरस्तस्य च नाशो मदनुग्रहादेवेत्याह यदेति द्वाभ्यां अनीशः परतंत्रः सन् निजैः कर्मभिर्नानायोनिषु कृमिकीटादिषु संसरन् तत्र पौरुषमागतो जन्मादिभिस्तस्य यदि स्तंभो न भवेत् तर्ह्ययं मदनुग्रह एव २६ कथं तर्हि ध्रुवादिभ्यः संपदो दत्तासीति चेत् तत्राह मान एव स्तंभः अनम्रता तस्य निमित्तभूतानां समंततः सर्वश्रे-

श्रीभगवानुवाच ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहं यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते २४ यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः नानायोनिष्वनीशोयं पौरुषीं गतिमाव्रजेत् २५ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः यद्यस्य न भवेत्स्तंभस्तत्रायं मदनुग्रहः २६ मानस्तंभनिमित्तानां जन्मादीनां समंततः सर्वश्रेयःप्रतीपानां हंत मुह्येन्न मत्परः २७ एष दानवदैत्यानामग्रणीः कीर्त्तिवर्धनः अजैषीदजयां मायां सीदन्नपि न मुह्यति २८ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः २९ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ३० एष मे प्रापितः स्थानं दुष्प्रापममरैरपि सावर्णेरंतरस्यायं भवितेंद्रो मदाश्रयः ३१ ॥ ॥

यःप्रतिकूलानां जन्मादीनां सत्स्वपि जन्मादिभिरिति वा हंत हे ब्रह्मन् मत्परो न मुह्येत् अतो भक्तस्य श्रिया संपदोपि ददामि अभक्तस्तु मुह्येदिति तदपहाररूपमेव तस्यानुग्रहं करोमीति भावः अस्य चेदानीं मत्परत्वाद् दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह एष इति त्रिभिः नन्वेतस्मिन् कुले क[illegible]न्तिः सत्त्वः कथं गुणाः प्रमाणिन्या विना छलैरेव मया धर्म उक्तः तथापि तं धर्मं सर्वं न त्यजति अतः सत्यवाक् मम या अहमेवाश्र

स्थाने प्रापित इति यदुक्तं तदेव स्थानमाह तावत्सावर्णिमन्वंतरपर्यंतं सुतलमध्यास्तां अधिवसत्विति त्वर्थः ३१ यत्र
हिंस्मिन्निवसतां आध्यादयो ममेक्षया न संभवंति एवं ब्रह्माणं प्रत्युक्त्वा करुणापरवशः साक्षाद्बलिं प्रत्याह इंद्रसेने
ति चतुर्भिः ३३ त्वच्छासनमतिगच्छंति अतिवर्तंते इति तथा तान् ३४ तथापि भगवद्धिंसाजातदुरितं छं तत्प्रसा

तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितं यत्राधयो व्याधयश्च क्लमस्तंद्रापराभवः ३२
नोपसर्गा निवसतां संभवंति ममेक्षया ३३ इंद्रसेन महाराज याहि भो भद्रमस्तु ते सुतलं
स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ३४ न त्वामभिभविष्यंति लोकेशाः किमुतापरे त्व
च्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति ३५ रक्षिष्ये सर्वतोहं त्वां सानुगं सपरिच्छदं सदा
सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ३६ तत्र दानवदैत्यानां संगात्ते भाव आसुरः दृष्ट्वा मद
नुभावं वै सद्यः कुंठो विनंक्ष्यति ३७ इति श्रीभागवते महापुराणेष्टमस्कंधे बलिरक्षणं द्वावि
शोध्यायः २२ श्रीशुक उवाच इत्युक्तवंतं पुरुषं पुरातनं महानुभावोखिलसाधुसम्मतः ब
द्धांजलिर्बाष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराब्रवीत् १॥ ॥

हसदेति ३५ संगाद्य आसुरो भावः स विनंक्ष्यति ३६ इत्यष्टमस्कंधे भावार्थदीपिकायां द्वाविंशोध्यायः २२
त्रयोविंशे बलेर्यानं सुतलं स पितामहे उपेंद्रेणादितेर्गत्वा पूर्ववच्चोदितो हरिः १ बाष्पस्य कलाभिर्बिंदुभि
राकुले ईक्षणे यस्य भक्त्या उत्कलः उत्कंठः १॥ ॥ ॥१॥

अहो त्वत्प्रणामस्य महिमा यदर्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योर्थः तस्य विधौ अनन्तेपि तत्प्रसादने स
माहितः सं अप्रमत्तः स्थितः कृतः यत्तयेनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरपि अलब्धपूर्वस्त्वदनुग्रहः अ
पसदे नीचे राजसे सुरेपि अर्पितः अयं भावः परमेश्वराय तुभ्यमहं वराकस्त्रिलोकीं दत्तवानस्मि तदा त्वां प्रणाम

श्रीबलिरुवाच अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः यल्लो
कपालैस्त्वदनुग्रहोमरैरलब्धपूर्वोपसदे सुरेर्पितः २ श्रीशुक उवाच इत्युक्त्वा हरिमा
नम्य ब्रह्माणं सभवं ततः विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ३ एवमिंद्राय भगवान्प्र
त्यानीय त्रिविष्टपं पूरयित्वादितेः काममशासत्सकलं जगत् ४ लब्धप्रसादं निर्मु
क्तं पौत्रं वंशधरं बलिं निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ५ श्रीप्रह्लाद उवाच
नेमं विरिंचो लभते प्रसादं न श्रीर्न शर्वः किमुतापरेन्ये यन्नोऽसुराणामसि दुर्गपालो विश्वा
भिवंद्यैरभिवंदितांघ्रिः ६ यत्पादपद्ममकरंदनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभू
तीः कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ७

नसम्यक्कृतः किंतु तदर्थमुद्यममात्रं कृतं तेन च कर्मतपोदानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः संपा
दितः अहो त्वत्प्रणामप्रभावाश्चर्यमिति २ अशासत् उपेंद्रः सन्पालयामास ४ दुर्गपालोसि रक्षितोसि
यतोहमिति कृत्स्नात् हे शरणद आश्रयप्रदे ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयस्ते वयं तस्य भ
वतो दाक्षिण्यदृष्टेः पदवीं कस्माद्धेतोः प्रणीताः वर्द्धमानेन चित्तानुवर्तित्वं दाक्षिण्यं तेन दृष्टिस्तस्या हि सवतां प्रा

भक्तप्रियत्वादिति चेत् नहि एवं तवेहितं अहो चित्रं किं तत् सर्वात्मनः समदृशश्च स्वभावो विषम इति यत् सर्वात्मत्वे चित्रत्वे चरित्रत्वे हेतुः अमितायाश्चिन्त्याया योगमायया या लीला तया विसृष्टानि निरचितानि भुवनानि येन तस्य अहो रहस्यत्रमस्यापि तत्र समदृक्त्वे हेतुः विशारदस्य सर्वज्ञस्य अथवा भक्तप्रियत्वेपि तवैवैष

चित्रं तवेहितमहोमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य सर्वात्मनः समदृशोऽविषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ८ श्रीभगवानुवाच वत्स प्रह्राद भद्रं ते प्रयाहि सुतलालयं मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ९ नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितं मद्दर्शनमहाह्लादध्वस्तकर्मनिबंधनः १० श्रीशुक उवाच आज्ञां भगवतो राजन्प्रह्रादो बलिना सह बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृतांजलिः ११ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः प्रणतस्तदनुज्ञातः प्रविवेश महाबिलं १२ अथाहोशनसं राजन्हरिर्नारायणोंतिके आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनां १३ ब्रह्मन्संतनु शिष्यस्य कर्मच्छिद्रं वितन्वतः यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् १४ ॥ त२

म्येनास्त्येव यतः कल्पतरुस्वभावः सन् भक्तप्रियोसि न हि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः ८ मद्दर्शनेन यो महाह्लादस्तेन ध्वस्तं कर्मबंधनमज्ञानं यस्य १० कर्म वितन्वतः शिष्यस्य यच्छिद्रं मंतरंध्रं न्यूनं जातं तत्संतनु तत्सारयसंधत्स्व यजमानं विना कथं संधातव्यमिति तेन वाच्यमित्याह यत्तदिति ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् किंपुनरनुष्ठितमित्यर्थः १४॥ ॥ ॥

भवान्यस्य सर्वभावेन वस्तुमात्रेण पूजितः तस्य कर्मसु कुतो वैषम्यं कथंभूतः कर्मणामीश्वरः प्रवर्त्त=
कः यज्ञेशः यज्ञफलदः यज्ञमयश्च पुरुषः १५ आस्तां तावत्पूजा यस्मान्मंत्रतः स्वरादिभ्रंशेन तंत्रतः
क्रमादिना देशतः कालतश्च अर्हतः पात्रतः वस्तुतश्च दक्षिणादिना यत् छिद्रं न्यूनं तत्सर्वं तवानुकी=

श्रीशुक्र उवाच कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् यज्ञेशो यज्ञपुरुषः सर्वभावे
न पूजितः १५ मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः सर्वं करोति निश्छिद्रमनुसंकीर्त
नं तव १६ तथापि वदतो भूमन्करिष्याम्यनुशासनं एतच्छ्रेयः परं पुंसां यत्तवाज्ञानुपालनं १७
अभिनंद्य हरेराज्ञामुशना भगवानिति यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह १८ एवं ब
लेर्महीं राजन्भिक्षित्वा वामनो हरिः ददौ भ्रात्रे महेंद्राय त्रिदिवं यत्परैर्हृतं १९ प्रजाप
तिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः दक्षभृग्वंगिरोमुख्यैः कुमारेण भवेन च २० का
श्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च लोकानां लोकपालानामकरोद्वामनं पतिं २१
वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः मंगलानां व्रतानां च कल्पं स्वर्गापवर्गयोः २२ उ
पेंद्रं कल्पयांचक्रे पतिं सर्वविभूतये तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप २३ ततस्त्विं
द्रः पुरस्कृत्य देवयानेन वामनं लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः २४ प्राप्य त्रि
भुवनं चेंद्र उपेंद्रभुजपालितः श्रिया परमया जुष्टो मुमुदे गतसाध्वसः २५ ब्रह्मा शर्वः कु
मारश्च भृग्वाद्या मुनयो नृप पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये २६ ॥ ॥

र्तनमात्रमेव निश्छिद्रं करोति १६ इति हरेराज्ञां प्रतिनंद्य बलेर्यज्ञच्छिद्रं समाधत्त संदधे पाठांतरे समाधा=
य वामाज्ञां संपादितवानिति शेषः १८ दक्षाद्यश्च ऋषयश्च भूमिपाश्च मनवस्तैः सहितः २० ननु लोका
नां पतिरिंद्रो भवतु सर्वस्य तथापि वेदादीनां कल्पं पालने रक्षितारं वामनमुपेंद्रं कल्पयांचक्रे २२ देवयाने

त३

स५

एतच्चरितं सर्वमाख्यातमिति विशेषोक्ताभ्यामपि संतोषितं तानि तु हिं निःशेषाणि वर्णनीयानीत्यपेक्षायामाह।
पारमिति उरुबहुधा विक्रमतो विष्णोर्महिम्नः पारं गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् यः
पार्थिवपरमाणुगणनसमर्थः। तथा विष्णोर्गुणगणनसमर्थो नास्तीत्यर्थः तथा च मंत्रः विष्णोर्नुकं वीर्याणि प्र
एतदेव मंत्रान्तरेणाह किं च जायमान इत्याह मंत्रदृक् ऋषिः पारं मंत्रदृक् ऋषिर्वसिष्ठः इत्येवमाह कथं कि

सुमहत्कर्म यद्विष्णोर्गीयमानः परमाद्भुतं धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे २७ सर्वमेत
न्मयाख्यातं भवतः कुलनंदन उरुक्रमस्य चरितं श्रोतॄणामघमोचनं २८ पारं महिम्न उ
रुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः किं जायमान उत जात उपैति मर्त्य इ
त्याह मंत्रदृगृषिः पुरुषस्य यस्य २९ य इदं देवदेवस्य हरेरद्भुतकर्मणः अवतारानुचरितं
शृण्वन्याति परां गतिं ३० क्रियमाणे कर्मणीदं दैवे पित्र्येथ मानुषे यत्र यत्रानुकीर्त्यते
तत्तेषां सुकृतं विदुः ३१ इति श्रीभागवते महापुराणे अष्टमस्कंधे वामनावतारानुचरि
ते त्रयोविंशोध्यायः २३ श्रीराजोवाच भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः अव
तारकथामाद्यां मायामत्स्यविडंबनं १ ॥

जायमानो जातो वा उपैति न कोपीति वदन्ननंतत्वेनैवाहेत्यर्थः तथा च मंत्रः न ते विष्णो जायमानो न
जातो देव महिम्नः परमंतमापेति २९ य इदं शृण्वन् भवति स परां गतिं याति ३० सुकृतं पुण्यावहं तत्।
विदुः ३१ इत्यष्टमे त्रयोविंशः २३ चतुर्विंशे प्रसंगेन मत्स्यरूपस्य शार्ङ्गिणः लीलोच्यते यतः सत्य
व्रतरक्षा महार्णवे २ ननु तनुनिदर्शयोरेव निजैश्वर्यनिदर्शनात् मत्स्यं पृच्छति पृथ्वीशो लीलया काम
नोपमं २ मायया मत्स्यविडंबनं मत्स्यरूपानुकरणं यस्याविहृप्यते तं १ ॥ ॥ ॥

ननु कस्मादकस्मादेवमस्यावतारश्रवणोत्कण्ठा श्रीवामनस्येव हृदयादित्याह यदर्थमिति द्वाभ्यां दुर्मर्षं दुःसहं केवलेरनुग्रहाय जुगुप्सितमपि यथा चकार यथा तथानित्युक्तमुक्तं यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयत् एतन्नो यथावद्वक्तुमर्हसीत्यन्वयः ३ सामान्येनावतारप्रयोजनमाह गोविप्रेति जुगुप्सितत्वपरिहरति धियो गुणैर्यानुच्चावचानि रूपाणि तेषु निर्लिप्तत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात् कुं।

यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितं तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः २ एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि उत्तमश्लोकचरितं सर्वलोकसुखावहं ३ सूत उवाच इत्युक्तो विष्णुरातेन भगवान्बादरायणिः उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतं ४ श्रीशुक उवाच गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ५ उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ६ आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ७ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ८ ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितं दधार शफरीरूपं भगवान्हरिरीश्वरः ९ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् नारायणपरोऽतप्यत्तपः स सलिलाशनः १० योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः श्राद्धदेव इति ख्यातो मनुत्वे

तः पुनः शुद्धसत्त्वमयैर्मत्स्याद्याकारैरुच्चावचत्वं नेति भावः ६ विशेषतो मत्स्यावतारप्रयोजनमाह आसीदिति त्रिभिः ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन जातो नैमित्तिकः समुद्रे उपप्लुता निमग्नाः ७ अन्तिके निःसृतान् शफरी रूपं मत्स्यरूपं ९ प्रयोजनान्तरं च लीलाप्रकारं चाह तत्र राजऋषिरित्यादिना यावत्समाप्ति

रामः

कृतमालायां नद्यां १२ यस्याहं सुखं निवसामि तदोकः स्थानं कल्पय औदंचनोदके मणिकस्य जले १९।

एकदा कृतमालायां कुर्वतो जलतर्पणं तस्यांजल्युदके काचिच्छफर्येकाभ्यपद्यत १२ सत्य-
व्रतोंजलिगतां सह तोयेन भारत उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः १३ तमाह सातिकरुणं
महाकारुणिकं नृपं यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल १४ कथं विसृज-
से राजन्भीतामस्मिन्सरिज्जले तमात्मनोनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरं अजानन्रक्षणार्था-
य शफर्याः स मनो दधे तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः १६ कलशाप्सु निधायैनां दयालु-
र्निन्य आश्रमं सा तु तत्रैकरात्रेण वर्धमाना कमंडलौ १७ अलब्ध्वात्मावकाशं वा इदमाह मही-
पतिं नाहं कमंडलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे १८ कल्पयौकः सुविपुलं यत्राहं निवसे सुखं
स एनां तत आदाय न्यधादौदंचनोदके १९ तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत नमएतदलं
राजन्सुखं वस्तुमुदंचनं २० पृथु देहि पदं मह्यं यत्त्वाहं शरणं गता ततआदाय सा राज्ञा क्षिप्ता
राजन्सरोवरे २१ तदावृत्यात्मना सोयं महामीनोन्ववर्धत नैतन्मे स्वस्तये राजन्नुदकं सलिलौ-
कसः २२ निधेहि रक्षायोगेन ह्रदे मामविदासिनि इत्युक्तः सोनयन्मत्स्यं तत्र तत्राविदासि-
नि २३ जलाशयेऽसंमितं तं समुद्रे प्राक्षिपज्झषं क्षिप्यमाणस्तमाहेदमिह मां मकरादयः
२५ अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि एवं विमोहितस्तेन वदता वल्गुभारतीं २६ त-
माह को भवानस्मान्मत्स्यरूपेण मोहयन् नैवं वीर्यो जलचरो दृष्टोस्माभिः श्रुतोपि वा २७ यो भवा-
न्योजनशतमह्नाभिव्यानशे सरः नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः अनुग्रहाय भूतानां
धत्से रूपं जलौकसां २७ ।।

रक्षायोगेनोपायेन यथा महाह्रदप्राप्तिर्भवति जिलं विनानश्यद्यंतेनोपाये

मुख्यःसख्यःश्रात्मा चगतिर्ज्ञाश्रयः २८ हे अरविंदाक्ष पृथगात्मनांदेहाद्यभिमानिनांसतामितरेषां पादोपसर्पणंयथामृषाभवेत् तथासर्वसुहृत्प्रियात्मनस्तवपादोपसर्पणंमृषाभवेत् यद्यस्मान्नोमह्यं

नमस्तेपुरुषश्रेष्ठस्थित्युत्पत्त्यप्ययेश्वरः भक्तानांनःप्रपन्नानांमुख्योह्यात्मगतिर्वि भो २८ नतेरविंदाक्षपदोपसर्पणंमृषाभवेत्सर्वसुहृत्प्रियात्मनः यथेतरेषांपृ थगात्मनांसतामदीदृशोयद्वपुरद्भुतंहिनः ३० सर्वेलीलावतारास्तेभूतानांभू तिहेतवः ज्ञातुमिच्छाम्यदोरूपंयदस्मासुकृतंत्वया २९ इतिब्रुवाणंनृपतिंज गत्पतिःसत्यव्रतंमत्स्यवपुर्युगक्षये विहर्तुकामःप्रलयार्णवेऽब्रवीच्चिकीर्षुरे कांतजनप्रियःप्रभुः ३१ श्रीभगवानुवाच सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिंद म विनंक्ष्यत्यप्ययांभोधौत्रैलोक्यंभूर्भुवादिकं ३२ त्रिलोक्यांलीयमानायां संवर्तांभसिवैतदा उपस्थास्यतिनौःकाचिद्विशालात्वांमयेरिता ३३ ॥

राम:

नामद्भुतंवपुरदीदृशःदर्शितवानसि यथेतरेषांपृथगात्मनांभेददर्शिनांपुंसांअसतांपरिच्छिन्नानां पादोपसर्पणंयथामृषात्पथः ३० एकांतजनाभक्ताःप्रियायस्य ३१ अप्ययांभोधौप्रलयार्णे

ौषधीः आदायेति शेषः ३४ ऋषीणामेवालोकेन विचरिष्यसि ३५ महाहिना वासुकिना ३६ मे मयाऽनुगृही।

त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च सप्तर्षिभिः परिवृतः सर्वसत्वोपबृंहितः ३४
आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः एकार्णवे निरालोके ऋषीणामेव वर्चसा ३५
दोधूयमानां तां नावं समीरेण बलीयसा उपस्थितस्य मे शृंगे निबध्नीहि महाहिना ३६
अहं त्वामृषिभिः साकं सह नावमुदन्वति विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ३७
मदीयं महिमानं च परं ब्रह्मेति शब्दितं वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ३८ इत्थे
मादिश्य राजानं हरिरंतरधीयत सोन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ३९ आ।
स्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः निषसाद हरेः पादौ चिंतयन्मत्स्यरूपिणः
४० ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीं वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ४१ ध्या
यन्भगवदादेशं ददृशे नावमागतां तामारुरोह विप्रेंद्रैरादायौषधिवीरुधः ४२ तमू
चुर्मुनयः प्रीता राजन्ध्यायस्व केशवं स वै नः संकटादस्मादविता शं विधास्यति ४३
सोनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे एकशृंगधरो मत्स्यो हैमो नियुतयोजनः ४४
निबध्य नावं तच्छृंगे यथोक्तो हरिपुरा वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनं ४५॥

णा २

तं स्वादीक्षतं हृदि अपरोक्षं वेत्स्यसि त्वया कृतैः संप्रश्नैर्मया विवृतं प्रकाशितं सत् ३८।४४ वरत्रे
ण २

वर ॥ ॥ भागवतस्कंध ८

भा०ग०
श्री०टी०
५६

सागरं तारयिष्यंतं ननरिष्यन्निव सागरं सत्यव्रतो गुरुः स्वेन तुष्टाव हरिमष्टभिः अत्रेदं चिंत्यं किमयं महाप्रलयो दैनं
दिनो वेति न तावद्ब्राह्मो लयः तस्मिन्नेव सावर्णिमहाकल्प इति वाक्ये महाप्रलय इति प्रयुक्तेन कूर्मः महाप्रलये पृथ्व्यादीनाम्॥
मवशेषासंभवात् यावद्ब्रह्मनिशायामपि विरोधात् अतो दैनंदिन इति युक्तं न चैतदपि संगच्छते सौवर्णे केरलादिभ्यो दिमि॥
र्विनारकस्मादेव सप्तमे हानित्रैलोक्यं वर्विनश्यतीति मन्स्योक्तेरनुपपत्तेः प्रत्तीके प्रथमस्कंधे रूपं स जगृहे मात्स्यं चाक्षुषा॥
तरसंप्लवे नावारोप्य महीमय्यामपादैवस्वतं मनुमिति तदपि न तदा दुर्घटं न हि प्रलयपयोधिमध्ये महीमय्या नाव्यारोहः संभवे
ति नचाक्षुषमन्वंतरे प्रलयो हि तथा च सति सप्तर्षीणामनुर्वैवस्वत इत्यपि दुर्घटं स्यात् एवं नावदौषधीः सर्वा इत्यादि निर्दे
शोपि न संगच्छते न हि तदा औषध्यादीनां सत्वानां वा अवशेषः संभवति तस्मादन्यथावर्णितं नैवायं वास्तवः को

राजोवाच अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः यदृच्छयेहोपसृता
यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ४६ ॥

पि प्रलयः किंतु सत्यव्रतस्य ज्ञानोपदेशाय आविर्भूतो भगवान् वैराग्यार्थं मकस्मात्प्रलयमिव दर्शयामास
यथा अस्मिन्नेव वैवस्वतमन्वंतरे मार्कंडेयाय दर्शितवान् तदपि तस्यैव च महाकल्पे अस्मिन्निति विशेषणं संग
च्छते तथा च ततः समुद्र उद्वेलः सर्वतः समदृश्यतेति तस्यैव तथा दर्शनमुक्तमित्यथादिकं प्रस्तुतं स्तोत्रं व्याख्या
स्यामः तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते अनादीयि
अविद्यातया उपहता आवृता आत्मसंवित् येषां ते अत एवाविद्यामूलैः संसारे यदृच्छया यदनुग्रहादे
व उपसृताः आश्रिताः संतो यं प्राप्नुयुः संभवानेव साक्षान्नो गुरुः सन् ग्रंथिं भिंद्यादित्युत्तरेणान्वयः ४६ ॥ तामः

संसारपरिश्रमेरातुराः इह २ ॥ ५६

ननु वैराग्यं विना कुतो मुक्तिः तर्हि तस्य त्वत्सेवैकफलत्वात्सेवामाहात्म्यमाह अबुधोयं जनः असुखं यथा भवति
तथा कर्म समीहते तां सुखेच्छां नोऽस्माकं हृदयरूपं ग्रंथिं स भिंद्यात् अस्मत्पुनरागमान्वयः यतः स एव परमो गुरुः ४७ ननु
यज्ञदानादिभिः सत्त्वशुद्धिं विना कथं ग्रंथिभेदः स्यात् तत्राह यत्सेवये वपुमानात्मनो मनसो मलं तमो विजि-
ह्यात् प्रहीनमलः निजं वर्णं च स्वरूपं भजेत स ईशो नो गुरुर्भूयात् यतः स एव गुरोरपि परमो गुरुः मलहानेर्दृ-
ष्टांतः रुद्ररोदनं रजतं यद्रोदीत् तद्रुद्रस्य रुद्रत्वं यद्ददर्श यत्तद्रजतं हिरण्यमभवदिति श्रुतेः यद्यप्यज्ञः स

जनो बुधोयं निजकर्मबंधनः सुखेच्छया कर्म समीहते ऽसुखं यत्सेवया तां विधुनोत्यसन्म-
तिं ग्रंथिं स भिंद्याद्धृदयं स नो गुरुः ४७ यत्सेवयाग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मल-
न२ मात्मनस्तमः भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ४८ न यत्प्रसादा-
युतभागलेशमन्ये च देवा गुरवो जनाः स्वयं कर्तुं समेताः प्रभवंति पुंसस्तमीश्वरं त्वां शरणं
प्रपद्ये ४९ अचक्षुरंधस्य यथाग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः त्व-
मर्कदृक्सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सतां ५० ॥

यको मलं न हाति स्ववर्णं भजते न तु क्षालनादिभिः तथा न यज्ञादिभिर्मलत्यागः किंतु त्वत्सेवैवेतेषां तु सेवांग-
त्वमेवेति भावः परमेश्वरत्वं परमगुरुत्वं च प्रपंचयन्नाह न यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमपि अ-
न्ये देवादयः सर्वे समेता अपि स्वयं तन्निरपेक्षाः संतः कर्तुं न प्रभवति ४९ तदेव दृष्टांतेन स्पष्टयन्नाह अ-
चक्षुरिति अविदुषो जनस्य अबुधोऽविद्वान् गुरुः तथैव अर्कप्रकाशवत् स्वत एव दृक् ज्ञानं यस्य सः अर्क-
दृक् अतः सर्वदृशां सर्वेंद्रियाणां समीक्षणः प्रकाशकः अत एव स्वगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिर्गुरुर्वृतोऽसि ५०

किंच प्राकृतो गुरुस्त्वनर्थहेतुरेवेत्याह जन इति आदिशते उपदिशति असतीं मतिं अर्थकामादिमतिं तमः संसारः ५१ ननु त
हि सर्वोपि लोको मामेवा किं नोपसरति अज्ञानादित्याह त्वमिति प्रियश्चासावीश्वरश्च ५२ अहं तु त्वामेव शरणं याया

जनोऽजनस्यादिशतेऽसतीं मतिं ययाप्रपद्येत दुरत्ययं तमः त्वं त्वऽव्ययं ज्ञानममोघमंजसा
प्रपद्यते येन जनो निजं पदं ५१ त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्ट
सिद्धिः तथापि लोको न भवंतमंधधीर्जानाति संतं हृदि बद्धकामः ५२ तं त्वामहं देववरं
वरेण्यं प्रपद्य ईशं प्रतिबोधनाय छिंध्यर्थदीपैर्भगवन्वचोभिर्ग्रंथीन्हृदय्यान्विवृणु स्व
मोकः ५३ श्रीशुकउवाच इत्युक्तवंतं नृपतिं भगवानादिपुरुषः मत्स्यरूपी महांभोधौ
विहरंस्तत्त्वमब्रवीत् ५४ पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीं सत्यव्रतस्य राज
र्षेरात्मगुह्यमशेषतः ५५ अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयं नाव्यासीनो भगव
ताप्रोक्तं ब्रह्म सनातनं ५६ ॥ ॥

मीत्याह तं त्वामिति प्रतिबोधनाय उपदेशाय अर्थदीपैः परमार्थप्रकाशकैः हृदये भवान् ग्रंथीन् अहंकारादी
न् स्वमोकः स्वरूपं विवृणु प्रकाशय ५३ नृपतिं प्रति पुराणसंहितां मत्स्यपुराणं अशेषतः अब्रवीदित्यनुषंगः ५६

योयंहरेरवतारस्तंयःप्रकीर्तयेत् ५७ अतीत इति यःप्रलयःतस्यापायेऽवसाने सत्यव्रतानां सत्यव्रतस्य ऋषीणां च छित्रिशोगछंतीति तल्लिंगसमवाया दुर्वचनं जिह्ममीनं मायामत्स्य ६१ इतिश्रीभागवतेमहापु

अतीतप्रलयापायउत्थितायसवेधसे हत्वासुरंहयग्रीवंवेदान्प्रत्याहरद्धरिः ५७ सतुसत्यव्रतोराजाज्ञानविज्ञानसंयुतः विष्णोःप्रसादात्कल्पेस्मिन्नासीद्वैवस्वतोमनुः ५८ सत्यव्रतस्यराजर्षेर्मायामत्स्यस्यशार्ङ्गिणः संवादंमहदाख्यानंश्रुत्वामुच्येतकिल्बिषात् ५९ अवतारोहरेर्योयंकीर्तयेदन्वहंनरः संकल्पास्तस्यसिध्यंतिसयातिपरमांगतिं ६० प्रलयपयसिधातुःसुप्तशक्तेर्मुखेभ्यःश्रुतिगणमपनीतंप्रत्युपादत्तहत्वा दितिजमकथयद्योब्रह्मसत्यव्रतानांतमहमखिलहेतुंजिह्ममीनंनतोस्मि ६१ यत्पादपद्ममकरंदममंदभाग्याः संतोभजंतिनभजंतिचमंदभाग्याः नारायणःसनिजपादसरोजमिष्टंमच्चित्तदर्पणतलंविमलंकरोतु ६२ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायामष्टमस्कंधेभगवन्मत्स्यावतारचरितानुवर्णनेचतुर्विंशोध्यायः२४ ॥ ॥ समाप्तोयमष्टमस्कंधः ८ ॥लिपिकृतंमूलचंदेन ॥



राणेपारमहंस्यांसंहितायांश्रीधरस्वामिविरचितायांभावार्थदीपिकायामष्टमस्कंधेचतुर्विंशोध्यायः२४॥

सप्तमस्कंधसंबंधिपदभावैर्थदीपनैः प्रीयतांपरमानं दन्हरिर्वालभाषितैः १॥

श्रीगुरवे नमः स्वभक्तपक्षपातेन तद्विपक्षविदारणं नृसिंहमद्भु
तं वंदे परमानंदविग्रहं ऊतिः पंचदशाध्यायैः सप्तमे वर्ण्यतेऽधुना ऊतिः कर्मवासना प्रोक्ता नाना
त्कर्मानुसारिणी २ असद्भावा च सद्भावा चेति द्विधा सा हि भिद्यते असद्भावा महतां कोपात्सद्भावा मह
दनुग्रहात् ३ हरेर्वैरप्रयोगार्थं दैत्येंद्रे वसतोऽपि च तु सनकषाविष्णोर्द्वेषात्पुमवासना ४
यथाहि दैत्यगर्भस्थस्य प्रह्लादस्य सतः स्थिरा नारदानुग्रहात् आसविष्णोः सद्भक्तिवासना ५ स्वभ
क्तं च सदा विष्णुर्द्विषंतमपि रक्षति इतीयं च मया व्याख्या वक्रोदात्मसात्वतः ६ अत्र मनीषि

: ॐ समः प्रियः सु

हृद्ब्रह्मन्भूतानां भगवान्स्वयं इंद्रस्यार्थे कथं दैत्यानवधीद्वि

षमो यथा १

णाः पुनः कार्यो महदनुग्रहे इत्येतदर्थं मूर्तीनामंत्र लक्षणमुच्यते ७ तत्रादौ दशभिर्दैत्यतस्तत्र
मतिभेदतः महत्कोपानुकंपोत्थवासना भेद उच्यते ८ सद्वासनाच पुण्येन कर्मभिः सदवेतनः
परैस्तु पंचभिस्तस्मात् क्रियते धर्मनिर्णयः तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते विष्णुभ
क्तेर्विधिस्तु विप्रशापजन्यते यदुक्तं पूर्वस्कंधांते ... शक्रपार्ष्णिग्राहेण विष्णुना
नाशोकदीप्तेन ज्वलंती पर्यचिंतयदिति तत्तु ... परीक्षितः पृच्छति समः प्रियः सुहृदिति त्रिभिः तन

किंच यस्यार्थैः प्रयोजनं सिद्ध्यति स तत्स्वरूपार्थी भवति ये भ्यो विभेति तान् द्वेष्टि द्वेषाग्निं हंति न तु तदत्रास्तीत्या
ह न हीति निःश्रेयसं परमानंदरूपो वा आत्मा स्वरूपं यस्य असुरेभ्य उद्वेगो भयं नास्ति अतो विद्वेषोपि नास्त्ये
व तत्र हेतुः अगुणस्येति २ नारायणस्य गुणान् अनुग्रहनिग्रहादीन् प्रति तं तं संशयं ३ भागव
तस्य प्रह्लादस्य माहात्म्यं ४ कृष्णाय व्यासाय कृष्णद्वैपायनमुनिं नत्वेत्यर्थः ५ यस्मात्प्रकृतेः परः अतो निर्गुणः

न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य
हि २ इति नः सुमहाभाग नारायणगुणान् प्रति संशयः सुमहान् जातस्तद्भवान्
छेत्तुमर्हति ३ श्रीशुक उवाच साधु पृष्टं महाराज हरेश्चरितमद्भुतं यद्भा
गवतमाहात्म्यं भगवद्भक्तिवर्द्धनं ४ गीयते परमं पुण्यमृषिभिर्नारदादिभिः नत्वा
कृष्णाय मुनये कथयिष्ये हरेः कथां ५ निर्गुणोपि ह्यजोव्यक्तो भगवान् प्रकृतेः परः
स्वमायागुणमाविश्य बाध्यबाधकतां गतः ६ सत्वं रजस्तम इति प्रकृतेर्नात्मनो
गुणाः न तेषां युगपद्राजन् ह्रास उल्लास एव वा ७ अतएवाजः अतएवाव्यक्तः रागद्वेषादि

निमित्तभूतदेहेंद्रियादिरहितः सोपि स्वमायागुणं सत्वादिकं आविश्य अधिष्ठाय बाध्यत्वमिति असुराश्च
तिबाधकः सपक्षः यद्वा देवासुरादीनां परस्परं बाध्यबाधकतां गतः प्राप्तः तत्र हेतुर्जात इत्यर्थः त
न गुणानां स्वीयत्वे सति प्राकृतवद्रसवृद्धिविषमः स्यात् ननु तर्हि तत्साहसत्वमिति ननु स्वेच्छया गुणाधि

ऽसुरान्वर्द्धयति १

यक्षरक्षांसि २

सत्वस्य जयकाले देवादीन् ऋषींश्च भजन् तत्तद्देहं प्रविश्य वर्द्धयतीत्यर्थः रजसो जयकाले तमसो जयका
लेऽत्रान्वयः तस्य कालस्यानुगुणः सन् ८ समस्यापि निमित्तभेदेन वैषम्ये दृष्टांतः ज्योतिर्यथा काष्ठादि
र्ज्वलनं यथा वा तेषु आकाशं यथा घटादिषु तथा नानारूप आभाति ननु तर्हि तद्देहाविवेकेन प्रतीयेत
तत्राह संघातात्स्थूलादिदेहान्न विविच्यते न पृथक् प्रतीयते ९ तर्हि तान् भजतीति कुतो ज्ञायते तत्राह
विदंतीति आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिंगेन विचार्य जानंति अंततः स्व

क्रस्थूलसूक्ष्म
ताभासते ३

जयकाले तु सत्वस्य देवर्षीन् रजसोऽसुरान् तमसो यक्षरक्षांसि तत्कालानुगुणोऽभ
जत् ८ ज्योतिरादिरिवाभाति संघातान्न विविच्यते विदंत्यात्मानमात्मस्थं म
थित्वा कवयोऽन्ततः ९ यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमा
यया सत्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ १० राम

भावकर्मादिवादनिषेधेन विदंतीति पांडित्याभोपि ज्ञानमेव अत्रापि ज्योतिरादिरिवेति दृष्टांतं यथा हि सर्पकां
तादिदाहदर्शनात् ज्योतिर्ज्ञायते यथा च गंधदर्शनाद्वायुः इत्यादि तदेवं मायागुणवशेन तद्वैषम्यं न स्वा
भाविकमित्युक्तं ९ तर्हि गुणपारतंत्र्यादनीश्वरत्वमाशंक्याह यदा आत्मनो जीवस्य भोगाय पुरः श
रीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा साम्येन स्थितं रजः पृथक् सृजति विचित्रासु तासु पू... पुरिषु रिरं
सुः क्रीडितुमिच्छुः सत्वं पृथक् सृजति शयिष्यमाणः संहरिष्यन् तमः पृथगीरयति प्रेरयति १०

२

यदा सिसृक्षा स्यादिति दृष्टान्तः पूर्वतो कालपारतंत्र्यं वारयन् प्रधानपुरुषपारतंत्र्यमपि वारयति हे नरदेव
प्रधानपुंभ्यां निमित्तभूताभ्यां सत्यकृत् अमोघकर्त्ता ईश्वरस्तयोः सहकारित्वेनाश्रयभूतं चरन्तं वर्त्तमा
नं कालं स्वयमेव सृजति स्वचेष्टारूपं । न कालस्य नन्ततारतम्यमित्यर्थः तथापि वस्तुतः किमायातं तत्राह
य एष कालः सत्वमेधयति वर्द्धयति अतो हेतोः ईशितापि ईश्वरोपि स ॥ सत्वप्रधानं सुरानीकं वसम्मर॥
मेधयतीवेत्यर्थः तत्प्रत्यनीकान् असुरप्रातिप्रत्यान् प्रमिणोति हिनस्तीवेत्यन्वयः उरुश्रवः कीर्त्तिर्यस्य

कालं चरंतं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् य एष राजन्नपि काल
ईशिता सत्वं सुरानीकमिवैधयत्यजः ११ तत्प्रत्यनीकानसुरान्सुरप्रियो रजस्त
मस्कान्प्रमिणोत्युरुश्रवाः ११ अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा प्री
त्या महाक्रतौ राजन्पृच्छतेजातशत्रवे १२ दृष्ट्वा महाद्भुतं राजा राजसूये महाक्र
तौ वासुदेवे भगवति सायुज्यं चेदिभूभुजः १३ तत्रासीनं सुरऋषिं राजा पाण्डुसु
नी१ तः क्रतौ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदं १४ सः कालशक्तिक्षुभितगुणगतं
वैषम्यं सन्निधिमात्रेणाधिष्ठातरि स्फुरतीति प्रकरणार्थः ११ इदानीं सुतयोर्वधो न सुरपक्षपाते
न किंतु ब्राह्मणशापेनासुरयोनिं प्राप्तयोरनुग्रहार्थ एवेति वक्तुमितिहासमुपक्षिपति अत्रैवेति द्वे
षादिरहितस्यापि दैत्यवधे १२ चेदिभूभुजः शिशुपालस्य १३ १४ ॐ नमो भगवते वासुदेवाय

३

एकांतभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि १५ तस्यानुवेनवन्नरकपात एवोचित इत्या
ह भगवन्निंदयेति तमसि नरके १६ दमघोषसुतः शिशुपालः कलभाषणात् बाल्ये कोमल
भाषणमारभ्य संप्रति अद्यापि अमर्षी क्रोधी मत्सरी वा १७ श्वित्रः कुष्ठं १८ दुरवग्राह्यं दुर्ज्ञापं धाम
स्वरूपं यस्य तस्मिन् लयं सायुज्यं ईयतुः अद्भुतस्यापि दंतवक्त्रलयस्य तस्मिन् लयं सायुज्यं तज्ज्ञातकस्य

युधिष्ठिर उवाच अहो अद्भुतमेतन्न दुर्लभैकांतिनामपि वासुदेवे परे तत्त्वे प्राप्तिश्चै
द्यस्य विद्विषः १५ एतद्वेदितुमिच्छामः सर्व एव वयं मुने भगवन्निंदया वेनो द्विजै
स्तमसि पातितः १६ दमघोषसुतः पापः आरभ्य कलभाषणात् संप्रत्यमर्षी
गोविंदे दंतवक्त्रश्च दुर्मतिः १७ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययं श्वित्रो
न जातो जिह्वायां नांधं विविशतुस्तमः १८ कथं तस्मिन् भगवति दुरवग्राह्यधा
मनि पश्यतां सर्वलोकानां लयमीयतुरंजसा १९ एतद्भ्राम्यति मे बुद्धिर्दीपार्चि य३
युना२ रिव वायुना ब्रूह्येतदद्भुततमं भगवांस्तत्र कारणं २० श्रीशुक उवाच राज्ञस्तद्वच
आकर्ण्य नारदो भगवान् ऋषिः तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः

भाषेपनान्निंद्वा वान्निर्देशः १९ एतत् अद्भुततमं हि अतएतस्मात् भ्राम्यति भगवान् सर्वज्ञस्त्वं ब्रूहि २० ३
आभाष्य संबोध्य आसीदंति निषीदंत्यस्यामिति सभा तस्याः सदः सदसः स एव सा सभा कथाः प्राहेत्यन्वयः

अहो भगवन्निंदकस्य नरकपातेन भाव्यमिति वदन्तं स्तावकाभिप्रायः भगवत्पीडाकरत्वेन वा तदभावे पि स्तु
त्यानादिवन्निंदनिंदाचरणादोतत्र तावद्देहाभिमानः कृतनिंदादिनिमित्तत्वात् पीडादीनां भगवतस्तु
तदभावान्न पीडाशंकास्तीत्याह सार्द्धैस्त्रिभिः निंदनं दोषकीर्तनं न्यक्कारस्तिरस्कारः निंदनस्तवादिज्ञा
नार्थं प्रधानपुरुषयोरविवेकेन कलेवरं कल्पितं रचितं २२ तदभिमानेन भूतानां यथा ममाहमिति वै
षम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्य तत्र राजन्वधः दंडस्ताडनं पारुष्यं निंदा तयो [illegible]

श्रीनारद उवाच निंदनस्तवसत्कारन्यक्कारार्थं कलेवरं प्रधानपरयो राजन्नवि
वेकेन कल्पितं २२ हिंसा तदभिमानेन दंडपारुष्ययोर्यथा वैषम्यमिह भूतानां म
माहमिति पार्थिव २३ यन्निबद्धाभिमानोयं तद्वधात्प्राणिनां वधः तथा न य
स्य कैवल्यादभिमानोखिलात्मनः परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते २४

त्मा?

हेतुभूतयोर्हिंसा पीडा च भवति २३ यस्मिन्निबद्धोयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा भवति तथा
तस्याभिमानो नास्ति अस्य परमेश्वरस्य हिंसा केहेतुना कल्प्यते न केनापि अभिमानाभावे हेतुः कैव
ल्यादद्वितीयत्वेनाभिमंतव्याभावात् वैषम्याभावे हेतुः अखिलात्मनः सर्वात्मन इति तर्हि किमिति
हंति तत्राह परस्येति दमकर्तुः हितार्थं दंडं करोतीत्यर्थः २४ यस्माद्भगवतो निंदादिकृतं वैषम्यं नास्ति
तस्माद्येन केनाप्युपायेन ध्यायतस्तेनैव निंदादिकृतपापस्यापि नाशात्सायुज्यं युक्तमित्याशयेनाह ॥

४

तस्मादिति सप्तभिः नास्त्येव वैरं केनापि यस्मिन् तेन भक्तियोगिनेत्यर्थः युंज्यात् मनः इति शेषः यस्मादेतैरुपायैः पृथक् नेक्षते २५ तेष्वपि वैरानुबंधः श्रेष्ठ इत्याह यथेति न तथा भक्तियोगेनापीति २६ अत्र दृष्टांतः कीटः पेशस्कृता भ्रमरेण संरंभो द्वेषः भयं च ताभ्यां योगस्तेन २७ वैरेण या अनुचिंता तयैव पूतः पाप्मा येषां ते तं प्रापुः २८

न१

तस्माद्वैरानुबंधेन निर्वैरेण भयेन वा स्नेहात्कामेन वा युंज्यात्कथंचिन्नेक्षते पृथक् २५ यथा वैरानुबंधेन मर्त्यस्तन्मयतामियात् न तथा भक्तियोगेन इति मे निश्चिता मतिः २६ कीटः पेशस्कृता रुद्धः कुड्यायां तमनुस्मरन् संरंभभययोगेन विंदते तत्स्वरूपतां २७ एवं कृष्णे भगवति मायामनुज ईश्वरे वैरेण पूतपाप्मानस्तमापुरनुचिंतया २८ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः २९ गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः संबंधाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ३० कतमोपि न वेनः स्यात्पंचानां पुरुषं प्रति तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ३१

भ२

तदघं कामादिनिमित्तं पापं हित्वा २९ ३०।

तर्हि वेनः किमिति नरके पातितः तीव्रध्यानाभावात् पापमेव तत्र कारणमित्याह कतमोपीति पुरुषं श्रीहरिं प्रति पुरुषे पुरुषस्य कामासंभवात् भयादिभिश्चितैतां पंचानां मध्ये एकतमोपीत्यर्थं ३१

४

तदेवमितिहासकथामुक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबंधे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह ॥
मातृष्वस्रेय इति वैकुंठात्प्रच्युतौ ३२ हरिदासाभिमर्शनमिति अभिभवतीति तथा अश्रद्धेयः अश्रद्ध-
णीय इव असंभवात् भवो जन्म ३३ असंभवमेवाह जन्महेतुभूतैः प्राकृतैर्देहेंद्रियासुभिर्हीनानां
कथं तत्समपदेहानामित्यर्थः प्राकृतदेहसंबंधेन संबद्धमेतदाख्यानमाख्यातुमर्हसि ३४ ॥

श्री१ मातृष्वस्रेयो वश्चैद्यो दंतवक्त्रश्च पांडव पार्षदप्रवरौ विष्णोर्विप्रशापात्पदच्यु-
तौ ३२ युधिष्ठिर उवाच कीदृशः कस्य वा शापो हरिदासाभिमर्शनः अश्रद्धेय
इवाभाति हरेरैकांतिनां भवः ३३ देहेंद्रियासुहीनानां वैकुंठपुरवासिनां देह-
संबंधसंबद्धमेतदाख्यातुमर्हसि ३४ नारद उवाच एकदा ब्रह्मणः पुत्रा विष्णु-
लोकं यदृच्छया सनंदनादयो जग्मुश्चरंतो भुवनत्रयं ३५ पंचषड्ढायनार्भाभाः
पूर्वेषामपि पूर्वजाः दिग्वाससः शिशून्मत्वा द्वाःस्थौ तान्प्रत्यषेधतां ३६ अ-
शपन्कुपिता एवं युवां वासं न चार्हथः रजस्तमोभ्यां रहिते पादमूले मधुद्वि-
षः पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३७ ॥

३५ कथंभूताः पंचवा षड्वा हायनानि येषां तेऽर्भाः बालाः तद्वदाभा येषां ते पूर्वेषां मरीच्यादीनामपि दिग्वा-
ससः दिगंबराः अतः शिशून्मत्वा ३६ वासमपि नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः हे बालिशौ अ-

५　वां युवयोस्त्रिभिर्जन्मभिः लोकाय सुखस्थानप्राप्तये कल्पतां तावता अयं शापः समाप्यतामिति पुनः
प्रोक्तौ विसर्गः ३८ ३९ धरोद्धारे निमित्ते निघातो हतः ४० हिरण्यकशिपोर्वधे कारणं सूचयति
हिरण्यकशिपुः पुत्रमिति ४१ सर्वभूतानामात्मभूतं कुतः समं ब्रह्मैव पश्यतीति तथा तं अतः प्रशांतं

एवंशप्तौस्वभवनात्पतंतौतौकृपालुभिः प्रोक्तौपुनर्जन्मभिर्वांत्रिभिर्लोकायकल्पतां ३८ ज
ज्ञातेतौदितेःपुत्रौदैत्यदानववंदितौ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोनुजस्ततः ३९
हतोहिरण्यकशिपुर्हरिणासिंहरूपिणा हिरण्याक्षोधरोद्धारेबिभ्रतासौकरंवपुः
४० हिरण्यकशिपुःपुत्रंप्रह्लादंकेशवप्रियं जिघांसुरकरोन्नानायातनामृत्युहेतवे　　२४
४१ तंसर्वभूतात्मभूतंप्रशांतंसमदर्शनं भगवत्तेजसास्पृष्टंनाशक्नोद्धंतुमुद्यमैः
४२ ततस्तौराक्षसौजातौकेशिन्यांविश्रवःसुतौ रावणःकुंभकर्णश्चसर्वलोको
पतापनौ ४३ तत्रापिराघवोभूत्वान्यहनच्छापमुक्तये रामवीर्यंश्रोष्यसित्वंमार्कंडे
यमुखात्प्रभो ४४ तावत्रक्षत्रियौजातौमातृष्वस्रात्मजौतव अधुनाशापनिर्मुक्तौ
कृष्णचक्रहतांहसौ ४५ वैरानुबंधतीव्रेणध्यानेनाच्युतसात्मतां नीतौपुनर्हरेःपा
र्श्वंजग्मतुर्विष्णुपार्षदौ ४६ द्वेषादिरहितं अत एव भगवत्तेजसा स्पृष्टं व्याप्तं उद्यमैः शस्त्रप्रहारादिभिः　५

४२ विश्रवसः सुतौ ४३ न्यहनत् हतवानित्यर्थः तर्हि तद्देवकथनीयमित्युत्सुकं प्रत्याह रामवीर्यमिति ४४ कृष्णच
क्रेण हतमंहो ययोस्तौ तयोः पापमेव हतं न तु तावित्यर्थः ४५॥४६॥

येनकारणेनप्रल्हादस्याच्युतात्मताच्युतैकचित्तत्वंतदपिब्रूहीतिशेषः ४१ इतिश्रीसप्तमस्कंधेटीकायांप्रथमोऽध्यायः १ द्वितीयेविष्णुरोषेणलोकंविद्राव्यदानवैः तद्भ्रातृपुत्रादीनितिहासैरसांत्वयत् १ भगवद्द्वेषादेवतद्द्वेषिकारणमित्याशयेनाह भ्रातरीत्यादिना १ एवंदेवपक्षपातेन कोपेनउत अतिशयेन

युधिष्ठिरउवाच विद्विषोदयितेपुत्रेकथमासीन्महात्मनि ब्रूहिमेभगवन्येनप्रल्हादस्याच्युतात्मता ४१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेनारदयुधिष्ठिरसंवादेप्रथमोऽध्यायः १ नारदउवाच भ्रातर्येवंविनिहतेहरिणाक्रोडमूर्तिना हिरण्यकशिपूराजन्पर्यतप्यद्रुषाशुचा १ आहचेदंरुषापूर्णःसंदष्टदशनच्छदः कोपोज्ज्वलद्भ्यांचक्षुर्भ्यांनिरीक्षन्धूम्रमंबरं २ करालदंष्ट्रोग्रदृष्ट्यादुष्प्रेक्ष्यभ्रुकुटीमुखः शूलमुद्यम्यसदसिदानवानिदमब्रवीत् ३ भोभोदानवदैतेयाद्विमूर्धंस्त्र्यक्षशंबर शतबाहोहयग्रीवनमुचेपाकइल्वल ४ विप्रचित्तेममवचःपुलोमन्शकुनादयः शृणुतानंतरंसर्वेक्रियतामाशुमाचिरं ५ सपत्नैर्घातितःक्षुद्रैर्भ्रातामेदयितःसुहृत् पार्ष्णिग्राहेणहरिणासमेनाप्युपधावनैः ६ ॥

श्री२

मा२

ज्वलद्भ्यां कोपाग्निधूमेनैवधूम्रमंबरंनिरीक्षमाणः २ करालदंष्ट्राभिर्युक्तयाउग्रयादृष्ट्यादुःप्रेक्ष्यंभ्रुकुटीयुक्तंमुखंयस्यसः ३ ४ ५ समेनापिउपधावनैर्भजनैः निमित्तभूतैः पार्ष्णिग्राहेणसता॥ ६ ॥राम

एवं सत्त्वस्वभावः समत्वयेनतं पूरोः अङ्केतेनासयस्यापि मायया वनौकसः बालाह्रपस्य सतः आस्थिरात्मनः
अल्पवाधितत्विनस्यकुतः योयोभजतितंतंभजमानस्यभजनानुस्मरतः ७ तस्यरुधिरेणपावनवर्षियिष्या
मिताव घूपं भुवं यातेति रुनीयेनान्वयः ८ ननुदेवैस्तद्दधः कारितः अतस्ताः किं नहन्यंते तत्राह तस्मिन्
कुटे कपटे आहिते प्रतिपदे कुटमीहितं यस्यतिवानेषु अदृष्टे सति देवाः अथ्यं स्वयमेव नाशं प्राप्स्यंति कुतः तिथे

तस्य प्रसन्नस्वभावस्य पूर्णो मायया वनौकसः भजंतं भजमानस्य बालस्येवास्थिरात्मनः ७ म
त्तस्य भिन्नग्रीवस्य भूरिणा रुधिरेणावै रुधिरप्रियं तर्पयिष्यन्न्रात्तरं मेग्नमपः ८ त
स्मिन्नकूटेहि तेनष्टे कृतमूले वनस्पतौ विटपाइव शुष्यंति विष्णुप्राणा दिवौकसः ९
तावद्घातमुवंपूयं विप्रहत्त्रसमेधितां सदयध्वं तपो यज्ञस्त्याध्यायव्रतदानिनः १० वि
ष्णोर्द्विजाक्रियामूलो यज्ञो धर्ममयः पुमान् देवर्षिपितृभूतानां धर्मस्यचपरायणं ११
यत्रयत्र द्विजागावो वेदावर्णाश्रमाः क्रियाः तंतंजनपदं यातसंदीपयत वृश्चत १२

विष्णुरेवप्राणो येषां ते ९ तपोयज्ञादियुक्तान् सदयध्वं घातयत १० ननु तैः किमपराद्धं तत्राह विष्णु
रिति द्विजानां क्रियाश्च तन्मूलं यस्य सः यतोसौ यज्ञो धर्ममयश्चपरायणं परमआश्रयः अतो यज्ञ
रूपस्य विष्णोर्मूलत्वात् मामन्यन्नत दाश्रयणाश्चैत वध्या इतिभावः ११ तस्मात्सर्वमंत्रं भणतेत्या
ह यत्रयत्रेति संदीपयत दहत वृश्चत छेदं कुरुत १२ ॥ ॥ ॐनमोभगवते वासुदेवायनमः ॥

आम्बाम्ब प्रभृतीन् खोकत्रीनालोक
राहीन् ३

पुरं हट्टादिमत् ग्रामस्तद्रहितः व्रजो गवां वासः उद्यानं कृत्रिमं वनं क्षेत्रं व्रीह्यादेः आरामो ऽकृत्रिमं वनं आ
श्रमा ऋषीणां स्थानं आकरो रत्नादीनां खेटः कृषीवलानां वासः खर्वटो गिरिद्रोण्यामल्पो ग्रामः घो
षः आभीराणां वासः पत्तनं राजधानी १३ खनित्रैः खननसाधनैः आजीव्यान् उपजीव्यान् शरणानि

इति ते भर्तृनिर्देशमादाय शिरसादृताः तथा प्रजानां कदनं विदधुः कदनप्रियाः १३
पुरं ग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् खेटखर्वटघोषांश्च ददहुः पत्तनानि च
१४ केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् आजीव्यांश्छिदुर्वृक्षान्केचि
त्परशुपाणयः प्रादहन्शरणान्येके प्रजानां ज्वलितोल्मुकैः १४ एवं विप्रकृते
लोके दैत्येन्द्रानुचरैर्मुहुः दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः १५ हिर
ण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत्
१६ शकुनिं शम्बरं धृष्टं भूतसंतापनं वृकं कालनाभं महानाभं हरिश्मश्रुमथो
त्कचं १७ तन्मातरं रुषाभानुं दितिं च जननीं गिरा श्लक्ष्णया देशकालज्ञ इद
माह जनेश्वरः १८ हिरण्यकशिपुरुवाच अंबांब हे वधूः पुत्रा वीरं मार्हथ शोचि
तुं रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः १९ महान् १७ विप्रकृते उपद्रुते य

ज्ञभागानामभावात् दिवं परित्यज्य १५ तदेवं प्रजानां कदनं दानवेषु कुर्वत्सु स्वयं स्वर्गराज्यादि साध
यितुं तत्र स्वस्थकामः प्रथमं यत्कृतवान् तदाह हिरण्यकशिपुरित्यादिना कटोदकं प्रेताय प्रदेयम्

७ भवतु नामैतस्य शोच्यो वधः तथाप्यस्माकं तावत् बंधुर्गत एवेति चेत्तत्राह भूतानामिति दैवेन प्राची-
नकर्मणा एकत्र नीतानां संगतानां पुनश्च स्वैः स्वैः कर्मभिरुन्नीतानां वियोजितानां एवं लोकदृष्टान्तेन शो-
कं निवार्य तत्वदृष्ट्या वारयति २० नित्य इति नित्यः मृत्युशून्यः अव्ययः अपक्षयशून्यः शुद्धः निर्मलः स-
र्वगः सर्वगतः सर्ववित् सर्वज्ञः अतः सर्वत्र हेतुः परो देहादिव्यतिरिक्तः अतो मृत इति कष्टः इति मालि-
न इति वियुक्त इति अशक्त इति शोको न कार्य इत्यर्थः कथं तर्हि तस्य संसारः तत्राह धत्त इति आत्मनो
मायया स्वाविद्यया लिंगं धत्ते गुणान् उच्चावचान् देहान् सुखदुःखादीन् वा विशेषेण सृजन् स्वीकुर्व-

भूतानामिह संवासः प्रपायामिव सुव्रते दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः २० नि- ता१
त्य आत्माव्ययः शुद्धः सर्वगः सर्ववित्परः धत्तेसावात्मनो लिंगं मायया विसृजन्गु-
णान् २१ यथांभसा प्रचलता तरवोपि चला इव चक्षुषा भ्राम्यमाणेन दृश्यते च-
लतीव भूः २२ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् याति तत्साम्यतां भद्रे ह्य-
लिंगो लिंगवानिव २३ एष आत्मविपर्यासो ह्यलिंगे लिंगभावना एष प्रियाप्रियैर्योगो लिंग२
वियोगः कर्मसंसृतिः २४

न् लिंगं शरीरोपाधिः संसार इत्यर्थः एतत्सदृष्टान्तं प्रपंचयति २१ य-
थेति चतुर्भिः तरवः प्रतिबिंबिताः उपाधिधर्मा उपहितेन भवंतीति दृष्टान्तमुक्त्वा ग्राहकधर्मा ग्राह्ये
भवंतीति दृष्टान्तरमाह चक्षुषेति २२ अविकलः परिपूर्ण एव तत्साम्यतां मनः सममतामित्यर्थः ७
२३ लिंगभावना देहाभिमानः एष आत्मनो विपर्यासो अन्यथाभावः तमेवाह प्रियैर्वियोगः अ-
प्रियैर्योगश्च कर्म च संसृतिश्च नानागर्भेषु प्रवेशः २४ ॐ नमो भगवते वासुदेवाय नमः रामायन

तस्याः संभवतु स्मृति विवेकस्य स्मृतिः अननुसंधानं २५ अत्रापि शोकहेतुं विना दृष्टे वा पंशोक-
स्यास्मिन्नर्थे प्रेतस्य येषां धवास्तेषां च २६ उपासनं तत्समीपे आवस्थितताः २७ विशीर्णोरस्त्र-
मयं कवचं यस्य विभूषणानि आभरणानि स्रजश्च यस्य शरेणानिर्भिन्नं हृदयं यस्य असृग्जारकेन

संभवस्याविनाशाच्च शोकस्याविविधः स्मृतः । अविवेकस्य चिंता चाविवेकास्मृतिरेव च
२५ अत्राप्युदाहरंतीममितिहासं पुरातनं । यमस्य प्रेतबंधूनां संवादं तन्निबोधत २
६ उशीनरेश्वमन्तु जासयन्नासीत्ताविश्रुतः । सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत
२७ विशीर्णोरस्त्रकवचं विभ्रष्टाभरणास्रजं । शरनिर्भिन्नहृदयं शयानमसृगा-
विलं २८ प्रकीर्णकेशं ध्वस्ताहाररभसादष्टदच्छदं । रजःकुंठमुखांभोजं छिन्नायुध-

पत्निंथ

भुजंमधे २९ उशीनरेंद्र विधिनात्तथाकृतं निशम्य स्त्रियः प्रसमीक्ष्य दुःखिताः । हतास्मनाथे-
ति करैः करोरःस्थलं घ्नंतो मुहुस्तत्पदयोरुपापतन् ३० रुदंत्य उच्चैर्दयितांघ्रिपंकजं सिंचत्य-

कुच२

अस्रैः कुंकुमारुणैः । विस्रस्तकेशाभरणाः शुचं नृणां सृजंत्य आक्रंदनया विलेपि-
रे ३१ अहो विधात्राकरुणेन नः प्रभो भवान् प्रणीतो दृगगोचरां दशां । आविलं लिप्तं २८

प्रकीर्णाः केशा यस्य ध्वस्ताः अहता एव यस्य रभसा संरंभेण दष्टौ दंतैः दच्छदौ ओष्ठौ येन रजसा कुंठं आवृतं मुखांभो-
जं यस्य छिन्नमायुधं भुजश्च यस्य २९ तस्य पादयोरुपसमीपे आसमंतात् अपतन् ३० ३१ विला-
पमेवाह अहो इति द्वाभ्यां अकरुणत्वमेवाह दृशामगोचरां दशां येन भवान् प्रणीतो गमितः ।।

तेन विधात्रा त्वमधुनाऽस्माकं शुचां विवर्द्धनः कृतोऽसि असन्नपः ३२ त्वया सुहृत्तमेन विना वयं कथं स्याम भवेम जीवेम अतः हे वीर यत्र त्वं यास्यसि तत्र ते अनुयानं अनुगमनं तव पादयोः शुश्रूषतीनामस्माकं दिश देहि ३३ निर्हारं दाहार्थं नयनं अस्तं अस्ताचलं प्राप्तः ३४ परिदेवितं रोदनं स्वयमेवाश्रुत्य तत्स्वयमेवागतो यमस्तानाह अहो इत्यादिना वयसा अस्मत्तोऽधिकानामपि लोकस्य विधिं

उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्द्धनः ३२ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते तत्रानुयानं तव वीर पादयोः शुश्रूषतीनां दिश यत्र यास्यसि ३३ एवं विलपतीनां वै परिगृह्य मृतं पतिं अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्त्तत ३४ तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितं आह तान् बालको भूत्वा यमः स्वयमुपागतः ३५ यम उवाच अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः यत्रागतस्तत्र गतं मनुष्यं सधर्मा अपि शोचंस पार्थं ३६

स्वयं१

जन्ममरणादिप्रकारं विपश्यतामपि विमोह एवाह यत्र यस्मात् अव्यक्तादागतः तत्रैव गतमपार्थं शोचंति तदुक्तं गीतासु अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत अव्यक्तनिधनान्येव तत्र का परिदेवनेति किंच स्वयमपि सधर्माः तेन सह समाना मृत्युग्रहणधर्मा येषां तथाभूता अपि ३६ रामाय नमः

८

अबलाद्दुर्बलादपि एकादिभिरभक्ष्यमाणा वयं तत्र हेतुः योंतर्गर्भे रक्षति स एव हि विश्वं रक्षितारक्षतीति ३७ ननु तस्य रक्षणे किं प्रयोजनेन न किंचिदपि किं तु क्रीडैव केवलमित्याह य इच्छ विश्वसृजतीदं हंति संहरति च भो अबलाः तस्येशितुश्चराचरं क्रीडासाधनमाहुः अतः स एवानिग्रहे संहारे पालने च प्रभुः ३८ प्रभुत्वमेवान्वयव्यतिरेकाभ्यां बा३ दर्शयति पथीति दिष्टेन दैवेन ईश्वरेणारक्षितं तेनेश्वरेणाभिहितं अस्यहतः तेनोपेक्षितः ३९ तदेवमात्मनोज न्ममरणादि कर्मांगीकृत्येश्वराधीनत्वान्न शोकः कार्य इत्युक्तं इदानीं तु देहानामेव जन्मादि नैवात्मन इत्याह त्रिभिः त्वाय

अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिंतयामः अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ३७ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुंपते च यः तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ३८ पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ३९ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवंति काले न भवंति सर्वशः न तत्र हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ४०

भूतानीति हे ताः निजयोनिः स्वकारणमकृतं लिंगशरीरं तन्निमित्तैः कर्मभिर्भवंति जायंते न भवंति नश्यंति च सर्वशः देवादिदेहा अपि तत्र हि तदा प्रकृतौ देहे स्थितोप्यात्मा तस्या गुणैः देहधर्मैर्जन्मादिभिर्न बध्यते न नियुज्यते यतः अन्यतमो देहादन्यतमः विलक्षणः ४० ॥

९

ननु देहं कथं स्थूलदृष्ट्या देहेन वैलक्षण्यं प्रतीयते तत्राह इदं मोहजं अविवेकात्मत्वेन जातं वस्तुतस्तु पृथगेव यतः ईयते दृश्यते भौतिकं च यथा गृहमित्यन्वयः अत्रैवं प्रयोगः द्रष्टृ भौतिकाच्च पुरुषान् शरीरं भिन्नं दृश्यत्वात् भौतिकत्वाच्च यथा ऽऽत्मना विवेकिना आत्मत्वेनाभिमतमपि गृहं ततः पृथक् तद्वदिति भौतिकत्वानुमानं विशदयन् आत्मनो जन्माद्यभावमुपसंहरति यथा उदकैः परमाणुभिर्जातो बुद्बुदादिः यथा च पार्थिवैर्जातो घटादिर्यथा च तैजसैर्जातः कुण्डलादिर्विनश्यति तथा तैरेव त्रिविधैः परमाणुभिः जातो जनो देह

इदं शरीरं पुरुषस्य मोहजं यथा पृथक् भौतिकमीयते गृहं यथोदकैः पार्थिवतैजसैर्जनः
कालेन जातो विकृतो विनश्यति ॥४१॥ यथानलो दारुषु भिन्न ईयते यथानिलो दे
हगतः पृथक् स्थितः यथा नभः सर्वगतं न सज्जते तथा पुमान्सर्वगुणाश्रयः परः
॥४२॥

एवं विकृतः परिणतः सन् विनश्यति न त्वात्मेत्यर्थः ॥४१॥ पृथगवस्थानाभावेऽपि भिन्नत्वेन दृष्टान्तद्वयमाह यथाऽनलो दारुष्वेवास्थितोऽपि दाहकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते यथा च देहगतोऽप्यनिलो नासिकादिषु पृथक् स्थित एव प्रतीयते देहस्थत्वेऽप्यात्मनस्तद्धर्मयोगाभावे दृष्टान्तमाह यथा नभो न सज्जते काऽपि संगं न प्राप्नोति तथा पुमानपि सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयः तेष्वाश्रितो वा परः पृथगेवेत्यर्थः ॥४२॥

९

किंच हे मूढाः यमनुशोचथ सोयं सुयज्ञः शेते किमिति शोचथ न ह्येतावंतं कालमसौ शृणोति श्रु
न्वंतरं श्रुतिवक्ति च इदानीं तस्यादर्शनान्मृत इति शोचाम इति चेत् सत्यं अनुशोचनीयो न भवति प्रागपि त
स्यादर्शनादित्याह यः श्रोतेति ४३ ननु मुखनासिकासंचारी प्राणः श्रोता वक्ता च दृश्य एव नासौ श्रो
ता वक्ता च अचेतनत्वादित्याह न श्रोतेति महान्सर्वेंद्रियचेष्टाहेतुः अत एव मुख्यः प्राणो वै मुख्य इ
ति श्रुतेः कस्तर्हि वक्ता श्रोता च तत्राह यस्त्विह देहेंद्रियैस्तत्तद्दर्शनद्रष्टा आत्मा स तु प्राणदेहाभ्यामचे
तनाभ्यामन्य एव सचेतनश्च ४४ ननु चेतनत्वेन अन्यत्वे च तस्याहं कृशः स्थूलः काणो बधिर इत्या

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ यः श्रोता योनुवक्तेह स न दृश्येत कर्हिचि
त् ४३ न श्रोता नानुवक्तायं मुख्योप्यत्र महानसुः यस्त्विहेंद्रियवानात्मा स चान्यः
प्राणदेहयोः ४४ भूतेंद्रियमनोलिंगान्देहानुच्चावचान्विभुः भजत्युत्सृजति
ह्यन्यस्तच्चापि स्वेन तेजसा ४५ यावल्लिंगान्वितो ह्यात्मा तावत्कर्मनिबंधनं॥
ततो विपर्ययः क्लेशो मायायोगोनुवर्तते ४६ देहेहधर्मोपलब्धिः कुतस्तत्राह भूतेंद्रि

२ यमनोभिर्लिंग्यंते लक्ष्यंते इति तथा तान्देहानुच्चेभ्योन्य एव भजति अहमिति मन्यते तर्हि कथं मोहस्तत्राह
तच्च भजनं स्वेन तेजसा विवेकबलेन उत्सृजत्यपि हि इत्यनुभवं प्रमाणयति ४५ ननु विवेकानंतरमपि दे
हादिकर्मसंप्रवृत्तेर्बंधः स्यादेवमत आह यावल्लिंगशरीरेणान्वितः तदभिमानवानात्मा भवति ता
वदेव तस्य तत्कर्मनिबंधनं बंधहेतुर्भवति ततो विपर्ययः देहधर्मभाक्त्वं ततः क्लेशश्चानुवर्तते न तु लिंगा
भिमाने निवृत्तेपि यतोयं मायायोगो विपर्ययादि मायया युज्यत इति तथा न परमार्थ इत्यर्थः ४६।

ननु सत्त्वदुःखादीनां तत्साधनानां च सत्यत्वप्रतीतेः कुतो मायामयत्वं तथा च बहवो वादिनः सत्यत्व
मेव वदंतीति तत्राह वितथेति मिथ्याभूतोऽयमभिनिवेशः कोसौ गुणेषु तत्कार्येषु सत्त्वादिषु अर्थः पर
मार्थ इति दृक् वचश्चेति यत् कुत इत्यत आह यथेति ४७ उपसंहरति अथेति तस्मान्नित्यमात्मा
नं अनित्यं देहं वा तद्विदः नित्यमनित्यं च जानंतः नन्वेवमुपदेशे शोकोऽपि शोचंतो दृश्यंते तत्राह नान्य

वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः यथा मनोरथः स्वप्नः सर्वमैंद्रियकं मृषा ४
७ अथ नित्यमनित्यं वा नेह शोचंति तद्विदः नान्यथा शक्यते कर्तुं स्वभावः शोचतामि
ति ४८ लुब्धको विपिने कश्चित्पक्षिणां निर्मितोंतकः वितत्य जालं विदधे तत्र
तत्र प्रलोभयन् ४९ कुलिंगमिथुनं तत्र व्यचरत्समदृश्यत तयोः कुलिंगी सह
सा लुब्धकेन प्रलोभिता ५० सासज्जत शिचस्तंत्यां महिषी कालयंत्रिता कुलिं
गस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ५१ [illegible]र्थः ४८ स्वपस्वधर्मा अपीति पदुत्तं
ष्यति शोचना भावात् स्वभावो न निवर्तते इति
तत्रेति तां समाह लुब्धक इत्यादिना पक्षिणामंतकः ईश्वरेण निर्मितः सन् यत्र यत्र तत्र तान् प्रलोभ
यन् जालं विस्तार्य विशेषेण धृतवान् पाठांतरे ते षामामिषादिभिः प्रलोभनं कृतवानित्यर्थः ४९
कुलिंगः कंद[illegible]पक्षिविशेषः कुलिंगयोर्मिथुनं तन्मध्ये कुलिंगी पक्षिणी लोभवशात् जालेप
तिता ५० शिचस्तंत्यां जालस्य सूत्रे सज्जत बंधं प्राप आपन्नां आपदं प्राप्तां ५१ तामापन्नम:

भा॰स॰टी॰ सस्नुषा स्नुषया सहिता ६० इति श्रीसप्तमस्कंधे टीकायां द्वितीयोध्यायः २ तृतीये तु तपसा तप्तं वीक्ष्य

११ जगद्दुःखिः ब्रह्मागत्य विस्मितस्तेन संस्तुतः स वरानदात् १ तदेवं साधूनां कदने दानवानां दिप्रवं [illegible]।

शोकं तत्वनिरूपणेनापनीय पश्चात् कृतवान् तदाह हिरण्यकशिपुरित्यादिना अप्रतिद्वंद्वं प्रतीपरहितं एकरा निर

नारद उवाच इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा पुत्रशोकं क्षणात्त्यक्त्वा तत्वे चित्त

मधारयत् ६० इति श्रीभागवते सप्तमस्कंधे नामद्वितीयोध्यायः २ नारद उवाच

हिरण्यकशिपू राजन्नजेयमजरामरं आत्मानमप्रतिद्वंद्वमेकराजं व्यधित्सत १

द्र॰४ स तेपे मंदरद्रोण्यां तपः परमदारुणं ऊर्द्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः २

जटादीधितिभी रेजे संवर्त्तार्क इवांशुभिः तस्मिंस्तपस्तप्यमाने देवाः स्थानानि

भेजिरे ३ तस्य मूर्द्ध्नः समुद्भूतः सधूमोग्निस्तपोमयः तिर्यगूर्द्ध्वमधोलोकानत

पद्विष्वगीरितः ४ चुक्षुभुर्नद्युदन्वंतः सद्वीपाद्रिश्चचाल भूः निपेतुः सग्रहास्तारा

जज्वलुश्च दिशो दश ५ ॥

जं एकमेव राजानं व्यधित्सत कर्त्तुमैच्छत् १ ऊर्ध्वौ बाहू यस्य

नभसि दृष्टिर्यस्य पादांगुष्ठेनाश्रिता अवनिर्येन २ जटानां दीधितिभिः कांतिभिः अंशुभिः रश्मिभिः ११

प्रलयकर्त्ता अर्क इव रेजे पूर्वं ये [illegible] लालिताः संतो विचेरुस्ते देवाः पुनः स्वानि स्थानानि भेजिरे ३

विष्वगीरितः सर्वतः प्रसृतः सन् ४ द्वीपैरद्रिभिश्च सहिता भूश्चालिता ५ ॥ ३ ३ ३ ॥

तव८

६ बलिहाराः करः प्रदाः फलाकारिण इति वा अभितो भवतीत्यभिभूरिे अभिभो सर्वाधिपते पाठांतरे भो इति सं
बोधनं अभितो पावकनं त्यंतीति संबंधः ७ ब्रह्मणस्तस्मिन्देवमुत्पादयितुं तत्संकल्पमाह तस्येति च
तुर्भिः अपाप्यस्माभिर्निवेदितं लपाङ्गुपता ८ तपोयोगयोः समाधिना निष्पाद्य सर्वाधिदेभ्यः क्षेत्रेषु नि
ज्ञासनं सत्यलोकं यथा अध्यासे अधितिष्ठति ९ तत्पैवात्मनः साधयिष्यामि ननु ब्रह्मणा अतिदी

स्१ तेन तप्ताद्दिवैस्काब्रह्मलोकं ययुः सुराः आर्त्तेविज्ञापयामासुर्देवदेवं जगत्पते ६ दैत्येंद्र
तपसा तप्ताद्दिविस्थातुं न शक्नुमः तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ७ लोका
न पालवन्ति ह्यातिबलिहारास्तवाभिभो तस्यापि किल संकल्पस्तरतो दुस्तरं तपः श्रूय
तां किं न विदितस्तावत्पापि निवेदितं ८ सृष्ट्वा चराचरमिदं तपोयोगसमाधिना
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनं ९ तदहं वर्द्धमानेन तपोयोगसमाधि
ना कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः १० अन्यथेदं विधास्येऽहम्
यथा पूर्वमोजसा किमन्यैः कालनिर्द्धूतैः कल्पान्ते वैष्णवादिभिः ११ यौ पुष्णात तपस्तप्ता

तत्साधितं अन्यैः कृतस्त साधयेन तत्राह कालात्मनोरिति यद्यप्यपुण्योत्पत्तेन देहो वारंवारं म्रियेत
तथापि कालस्यात्मनश्च नित्यत्वात् बहुभिर्जन्मभिस्तपस्त्वात्मानं तत्साधयिष्याम्येवेति १० वर्द्धमानेनेति
पदत्रं तस्य फलमाह अन्यथेति [illegible] यादिव्यत्ययेन ध्रुव यथापूर्वं पुण्यपापादिव्यत्ययेन इदं जगद्विधा

इति तस्य दानवहरणोत्तमस्य निर्बन्धं कृत्वा अत एवासौ तपः परमास्थितः यदत्र प्रोक्तं तत् अनन्तरमेव वि
धास्ये १२ अन्यथात्वं स्थानभ्रंशो मत्तिसाधुनामानि ह स्युरिति शोचंत आहुः तव पारमेष्ठ्यमिद
मासनं द्विजानां गवां च भवाय उद्भवाय क्षेमाय सुखाय भूत्यै ऐश्वर्याय होमाय लक्ष्यपालनाय वि
जयाय उत्कर्षाय १३ १४ वल्मीकादिभिः प्रतिच्छन्नमपश्यमानं ददर्श यस्मात्कर्पं चिह्नैर्लक्ष्यं तं प्राहे

इति श्रुत्वा निर्बन्धं तपः परममास्थितः विधत्स्वानंतरं युक्तं स्वयं त्रिभुवनेश्वर १२
तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च १३
इति विज्ञापितो देवैर्भगवानात्मभूर्नृप परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् १४ न दद
र्श प्रतिच्छन्नं वल्मीकतृणकीचकैः पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितं १
५ तपंतं तपसा लोकान् यथाभ्रापिहितं रविं विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाह
नः १६ ब्रह्मोवाच उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप वरदोऽहमनुप्राप्तो व्रि
यतामीप्सितो वरः १७ अद्राक्षमहमेतं ते हृत्सारं महदद्भुतं दंशभक्षितदेहस्य
प्राणा ह्यस्थिषु शेरते १८ नैतत्पूर्वर्षयश्चक्रुर्न करिष्यंति चापरे निरंबुर्धारये
त्प्राणान् को वै दिव्याः समाः शतं १९ तिद्द्वयोरन्वयः प्राचीर्णं समंतादुपहितं मेदश्च त्वक् च

मांसं च शोणितं च यस्य १५ अभ्रैरपिहितं छन्नं रविमिव विलक्ष्य १६ १७ हृत्सारं धैर्यं दंशैर्मशकादिभिर्भक्षितो देहो यस्य १८ निरंबुः नैषिद्धमेव पिबन् सन् कोऽदकं इत्यर्थः १९ ॐ नमः रामाय नमः

नेऽनेन व्यवसायेनैव तावज्जितो ऽहं तपोनिष्ठेन भवतानु सततं जितः २० अमर्त्यस्य मम दर्शनमफलं न भवति
२१ आदौ भवतीत्यादिभवः औक्षत् प्रोक्षितवान् २२ वज्रवत्संहननं अंगदार्ढ्यं यस्य तप्तस्य हेम्न इव आभा यस्य २३

व्यवसायेन तेनेन दुष्करेण मनस्विना तपोनिष्ठेन भवता जितोहं दितिनंदन २० ततस्त
आशिषः सर्वा ददाम्यसुरपुंगव मर्त्यस्य ते अमर्त्यस्य दर्शनं नाफलं मम २१ श्रीनारद उ
वाच ऽइत्युक्त्वादिभवो देवो भक्षितांगं पिपीलिकैः कमंडलजलेनौक्षद्दिव्येनामोघरा
धसा २२ स तत्कीचकवल्मीकात्सहओजोबलान्वितः सर्वावयवसंपन्नो वज्रसंहन
नो युवा उत्थितस्तप्तहेमाभो विभावसुरिवैधसः २३ स निरीक्ष्यांबरे देवं हंसवा
हमवस्थितं ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः २४ उत्थाय प्रांजलिः
प्रह्व ईक्षमाणो दृशा विभुं हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयागृणात् २५ हिर
ण्यकशिपुरुवाच कल्पांते कालसृष्टेन योंधेन तमसावृतं अभिव्यनक् जग
दिदं स्वयंज्योतिः स्वरोचिषा २६

(margin: उत्थितः) (margin: व७) (margin: २३)

तस्य दर्शनमेव महानुत्सवो यस्य २४ हर्षेणाश्रुणी पुलकोद्भेदश्च यस्य २५ अंधेनाविवेकेन तत्र
हेतुः कालसृष्टेन प्रकृतिगुणरूपेणाध्वांतेन तमसावृतमिदं जगत् यः अभिव्यनक् अभिव्यक्तमकरो
त् २६

यस्त्रिगुणेनात्मना इदं सृजति अवति लुंपति च तस्मै रजःसत्त्वतमसां धाम्ने आश्रयाय महते पराय परमेश्वराय नम इति द्वयोरन्वयः २७ अत्र च स्वप्रकाशकत्वं जगत्प्रकाशकत्वं तत्कारणत्वं सृष्ट्यादिकर्तृत्वं महत्त्वं परमेश्वरत्वं चेति षड्विधत्वमुक्तं तदेव प्रपंचयन्नमस्करोति नम इति चतु-



र्भिः बीजाय कारणाय तत्र हेतुः आद्याय ज्ञानं ज्ञप्तिः विज्ञानं विषयाकारं ज्ञानं मूर्तिर्यस्य तस्मै अनेन स्वप्रकाशकत्वं जगत्प्रकाशकत्वं च दर्शितं बीजायेति निमित्तत्वमुक्तं उपादानत्वमाह प्राणेंद्रियेति विकारास्तद्रूपैर्व्यक्तिं कार्याकारं ईयुषे प्राप्नुवते २८ एवमात्मना त्रिवृता चेत्यने-

आत्मना त्रिवृता चेदं सृजत्यवति लुंपति रजःसत्त्वतमोधाम्ने पराय महते नमः २७
नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये प्राणेंद्रियमनोबुद्धिविकारैर्व्यक्तिमी-
युषे २८ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानां चित्त-
स्य चित्तैर्मन इंद्रियाणां पतिर्महान् भूतगुणाशयेशः २९

नोक्तं कारणत्वं द्विधा दर्शितं महत्त्वमीश्वरत्वं चाह त्वमेव जंगमस्य तस्थुषः स्थावरस्य च ईशिषे नियंता भवसि केन मुख्येन प्राणेन सूत्रात्मरूपेण अतस्त्वं प्रजानां पतिः तासां चित्तस्य चित्तैश्च तत्परिणामभूताया-श्चेतनायाः मनसश्च तन्नियम्यानामिंद्रियाणां च पतिः अतस्त्वमेव महान् भूतानामाकाशादीनां तद्गुणानां शब्दादिविषयाणां आशयानां तद्वासनानामीशश्च एतेनैव स्वसृष्टत्वं दर्शितं २९

इदानीं यज्ञप्रवर्तकत्वेनांतर्यामित्वेन च जगदात्मकत्वमाह त्वमेव सप्ततंतून् अग्निष्टोमादियज्ञान् विस्तार
यसि कथं त्रय्या तन्वा वेदत्रयरूपेण कथंभूतया चत्वारो होतारो यत्र तच्चातुर्होत्रिकं कर्म तद्विषय
या विद्यया आत्मवतां प्राणिनामात्मभूतस्त्वमेवांतरात्मा च अंतर्यामी कुतः यतः कविः सर्वज्ञः त
त्कृतः एकः अखंडः तत्र हेतुः अनादिः अनंतपारश्चेति नास्त्यंतः कालतः पारं च देशतो यस्य सः ३०
कालरूपेण संहर्तृत्वमाह त्वमेवेति लवाद्यैरवयवैः क्षिणोषि त्वपयासीत देवं स्रष्टादिकर्तृत्वेपि

त्वं सप्ततंतून् वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च त्वमेक आत्मात्मवता
मनादिरनंतपारः कविरंतरात्मा ३० त्वमेव कालो निमिषो जनानामायुर्लवाद्या
वयवैः क्षिणोषि कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा
३१ त्वत्तः परं नापरमप्यनेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ ॥

निर्विकारत्वमेवाह कूटस्थ
इति तत्र हेतवः आत्मा ज्ञानरूपः परमेष्ठी परमेश्वरः अजः जन्मशून्यः महान् अपरिच्छिन्नः किंच
जीवलोक एव कर्मवशाज्जन्मादिभिः विक्रियते त्वं तु तस्य जीवः जीवनस्य हेतुः यतस्तस्यात्मा नियं
ता ३१ तत्कुतस्तत्राह त्वत्त इति त्वत्तो व्यतिरिक्तं यदि किंचिद्भवेत् तर्हि तस्मात्तव जन्मादिविका
रो नियम्यत्वादिकं वा भवेत् त्वत्तः परं कारणं अपरं कार्यं तत्र चैजत् जंगमं अनेजत् स्थावरं च व्यति

नमत्तः विद्यावेदोपवेदादिविद्यास्थानानि कलाश्चांगदंगानि तवैव तनवः नत्वद्व्यतिरिक्ताः ततकृतः यतः
त्वं बृहत् तव ब्रह्मैवासि तदपि कुतस्तत्राह हिरण्यरूपं ब्रह्मांडं गर्भे यस्य सः त्रिपृष्ठः त्रिगुणात्मकस्य प्रधानस्य
पृष्ठे परतः स्थितः अक्षरात्परतः पर इत्यादिश्रुतेः ३२ ननु ब्रह्मांडशरीरस्य मम कुतो ब्रह्मत्वं कुतो वा ब्रह्मां जीवस्वरू
डगर्भत्वादि तत्राह व्यक्तं कार्यमिदं तव शरीरं व्यक्तं सत्यमिति वा येन शरीरेण त्वमिंद्रियप्राणमनसां
गुणान् विषयान् भुंक्षे किंतु पारमेष्ठ्ये परमैश्वर्ये धामनि स्वरूपे स्थित एव भुंक्षे नतु स्वरूपतिरोधा

विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ३२ व्यक्तं विभो स्थूलमिदं
शरीरं येनेंद्रियप्राणमनोगुणांस्त्वं भुंक्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा
पुरुषः पुराणः ३३ अनंताव्यक्तरूपेण येनेदमखिलं ततं चिदचिच्छक्तियुक्ताय
तस्मै भगवते नमः ३४ यदि दास्यस्यभिमतान्वरान्मे वरदोत्तम भूतेभ्यस्त्वद्विसृ
ष्टेभ्यो मृत्युर्मा भून्मम प्रभो ३५ नांतर्बहिर्दिवा नक्तमन्यस्मादपि चायुधैः न भू
मौ नांबरे मृत्युर्न नरैर्न मृगैरपि व्यसुभिर्वासुमद्भिर्वा सुरासुरमहोरगैः ३६

नेन अतस्त्वमव्यक्त आत्मा निरुपाधिर्ब्रह्मैव पुराणपुरुषश्चेत्यर्थः ३३ ननु ब्रह्मत्वं पुराणपुरुषत्वं
च कथमेकस्य [illegible] तत्राह हे अनंत येन त्वया अव्यक्तेन मनोवचनागोचरेण रूपेण इदं विश्वं ततं व्या
प्तं तस्मै तुभ्यं भगवते अचिंत्यैश्वर्याय नमः भगवत्त्वे हेतुः चिच्छक्तिर्विद्या अचिच्छक्तिर्माया ताभ्यां यु
क्तायेति ३४ ३५ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि भगवत आयुधैर्मा भूत् ३६ नामापनमः

अन्नभिः अप्राणैः असमद्भिः सप्राणैर्यथा आत्मनस्तवास्तेन यथा अप्रतिद्वंद्वताद्धिकं देहीतिशेषः तपसा योगेन
च प्रभावो येषां तेषां यत् अणिमादीश्वर्यं येन रिष्यति न नश्यति तच्च देही सर्वथा ३७ इति श्रीसप्तमस्कंधे टीकायां
तृतीयोऽध्यायः ३ चतुर्थे तु वरान् लब्ध्वा विजित्याखिललोकपान् विद्वेष्टवैष्णवान् सर्वान् दैत्येंद्रः सम
अप्रतिद्वंद्वतां युद्धे ऐकपत्यं च देहिनां सर्वेषां लोकपालानां महिमानं यथात्मनः तपोयो
गप्रभावानां यन्न रिष्यति कर्हिचित् ३७ इति श्रीभागवते महापुराणे सप्तमस्कंधे तृतीयो
ध्यायः ३ नारद उवाच एवं वृतः शतधृतिर्हिरण्यकशिपोरथ प्रादात्तत्तपसा प्रीतो
वरांस्तस्य सुदुर्लभान् १ ब्रह्मोवाच तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम तथापि
वितराम्यंग वरान् यद्यपि दुर्लभान् २ ततो जगाम भगवानमोघानुग्रहो विभुः पूजितो
ऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ३ एवं लब्धवरो दैत्यो विभ्रद्धेममयं वपुः भगवत्य
करोद्द्वेषं भ्रातुर्वधमनुस्मरन् ४ स विजित्य दिशः सर्वा लोकांश्च त्रीन्महासुरः देवा
सुरमनुष्येंद्रान् गंधर्वगरुडोरगान् ५ सिद्धचारणविद्याध्रानृषीन् पितृपतीन्मनू
न् यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनथ ६ सर्वसत्वपतीन् जित्वा वशमानीय वि
श्वजित् जहार लोकपालानां स्थानानि सह तेजसा ७ वीरयत् १ शतधृतिर्ब्रह्मा १ मम
मत्तः यद्यपि यद्यपीमे दुर्लभाः २ अमोघोऽनुग्रहो यस्य ३ यद्दर्थं तपसा प्रतं तदाँ एवमित्यादिना ४ ५ ६
ह१

त्रिविष्टपं स्वर्गं अध्यास्ते स्म अधिष्ठितवान् तत्र महेंद्रभवनमध्यवासं अधिवसति स्म अखिलसमृद्धियु
क्तत्वमेवाह यत्रेति त्रिभिः ९ मुक्तादामानि पारिच्छदाः परिकरा यासां सुदती सुदत्यः १०।११ ऊर्जितमधि

देवोद्यानश्रियाजुष्टमध्यास्ते स्म त्रिविष्टपं महेंद्रभवनं साक्षान्निर्मितं विश्वकर्मणा ८
त्रैलोक्यलक्ष्म्यायतनमध्यवासाखिलर्द्धिमत् ८ यत्र विद्रुमसोपाना महामारकता
भुवः यत्र स्फटिककुड्यानि वैडूर्यस्तंभपंक्तयः ९ यत्र चित्रवितानानि पद्मरागा
सनानि च पयःफेननिभाशय्या मुक्तादामपरिच्छदाः १० कूजद्भिर्नूपुरैर्देव्यः शु
श्रूषंत्यत्र रत्नस्थली भुवप्रपंतीः सुदती सुंदरं सुखं ११ तस्मिन्महेंद्रभवने म
हाबलो महामनाः निर्जितलोक एकराट् रेमे भिवंद्यो विबुधगः सुरादिभिः प्रताप
तैरूर्जितं चंद्रयशोनः १२ तमंगमत्तमधुनोरुगंधिं विवत्तनाम्नात्मपशो बाधिक्मपाः
उपासते पायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदं १३ जगुर्महेंद्रासन
मोजसा स्थितं विश्वावसुस्तुंबरुरस्मदादयः गंधर्वसिद्धा ऋषयोस्तुवन्मुहुर्विद्याध
राश्चाप्सरसश्च पांडव १४

कंचेरंतीव्रं शासनं यस्य १२ अंग हे राजन् उरुगंधिना उरुगंधेन मधु
वासरया मत्तं अतोवा विवत्ते विघूर्णिते नाम्रे आह्निणी यस्य तं अशेषाधिक्मपाः सर्वलोकपाला उपा

श्री

१५ १६ तत्पत्न्यो नद्यः ऊढुः वहंति स्म रत्नाकरानेवाह क्षारेति १७ आक्रीडं क्रीडास्थानं गुणान् पुष्पफलादीन् स च लोकपालानां पृथग्विधान् गुणान् वर्षणदहनशोषणादीनेक एव दधार १८ निर्जिताः ककुभो

स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः इज्यमानो हविर्भागानग्रहीत्स्वेन तेजसा १५ अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही तथा कामदुघा द्यौस्तु नानाश्चर्यपदं नभः १६ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः क्षारशीधुघृतक्षौद्रदधिक्षीरामृतोदकाः १७ शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः दधार लोकपालानामेक एव पृथग्गुणान् १८ स इत्थं निर्जितककुबेकराट् विषयान्प्रियान् यथोपजोषं भुंजानो नातृप्यदजितेंद्रियः १९ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः २० तस्योग्रदंडसंविग्नाः सर्वे लोकाः सपालकाः अन्यत्रालब्धशरणाः शरणं ययुरच्युतं २१ तस्मै नमोस्तु काष्ठायै यत्रात्मा हरिरीश्वरः यद्गत्वा न निवर्तंते शांताः संन्यासिनोमलाः २२ इति ते संयतात्मानः समाहितधियोमलाः उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः २३ तेषामाविरभूद्वाणी अरूपा मेघनिस्वना संनादयंती ककुभः साधूनामभयंकरी २४ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये २५

येन यथोपजोषं यथाप्रीति १९ २०

२६.२७ ननु देवादिविद्वेषेप्यस्य विनाशो नास्ति ब्रह्मवरेणोर्जितत्वात् तत्राह निर्वैरायेति सर्वमहं सहे न म
द्भक्तद्रोहमिति भावः २८ असुरं च हतं मेनिरे न तदानीं तत्र द्वेषस्य प्रवृत्तत्वादिति भावः २९ तमेव द्वेषं वक्तु
मादौ तस्य महत्त्वमाह तस्येत्यादिना गुणैर्महानभूत् गुणानेवाह महदुपासक इत्यादिना ३० संधा

ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य वः तस्य शांतिं करिष्यामि कालं तावत्प्रतीक्षत २६ य
दा देवेषु वेदेषु गोषु विप्रेषु साधुषु धर्मे मय्यपि च विद्वेषः स वा आशु विनश्यति २७ निर्वै
राय प्रशांताय स्वसुताय महात्मने प्रह्रादाय यदा द्रुह्येत् हनिष्येपि वरोर्जितं २८ नारद
उवाच इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः न्यवर्त्तत गतोद्वेगा मेनिरे चासुरं
हतं २९ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः प्रह्रादोभून्महांस्तेषां गुणैर्महदुपा
सकः ३० ब्रह्मण्यः शीलसंपन्नः सत्यसंधो जितेंद्रियः आत्मवत्सर्वभूतानामेकः
प्रियसुहृत्तमः ३१ दासवत्सन्नतार्यांघ्रिः पितृवद्दीनवत्सलः भ्रातृवत्सदृशे स्निग्धो
गुरुष्वीश्वरभावनः विद्यार्थरूपजन्माढ्यो मानस्तंभविवर्जितः ३२ नोद्विग्नचि
त्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् दांतेंद्रियप्राणशरीरधीः सदा प्र
शांतकामो रहितासुरोऽसुरः ३३

धा प्रतिज्ञा यस्य एक एव प्रियश्च सुहृत्तमश्च ३१ सम्यक्
नता आर्याणामंघ्रयो येन ईश्वर इति भावना यस्य ३२ व्यसनेषु नोद्विग्नचित्तः गुणेषु विषयेषु निःस्पृ

अधुनापिवैष्णवानपिधीयंतेनतिरोहितानभवंति ३४ साधुगाथासदसिसाधुकथाप्रसंगवत्यांसभा-
यांप्रतिमानंदृष्टांतं ३५ सूच्यतेमयाकेवलंचोत्पातेसूचकमात्रमिति ३६ नैसर्गीकरतेर्लिंगा-
न्याह न्यस्तक्रीडनकइतिबाह्लः तन्मनस्तयातदैकचित्तत्वेन ३७ एतानिआसनादीनिगोविंदेनपरि-
रंभितः आलिंगनीकृतः ३८ रुदतीति वैकुंठस्यचिंतयाशबलाव्याप्ताभिन्नाचेतनायस्य

यस्मिन्महद्गुणाराजन्गृह्यंतेकविभिर्मुहुः नतेधुनापिधीयंतेयथाभगवतीश्वरे
३४ यंसाधुगाथासदसिरिपवोपिसुरानृप प्रतिमानंप्रकुर्वंतिकिमुतान्येभवा-
दृशाः ३५ गुणैरलमसंख्येयैर्माहात्म्यंतस्यसूच्यते वासुदेवेभगवतियस्यनैसर्गि-
कीरतिः ३६ न्यस्तक्रीडनकोबालोजडवत्तन्मनस्तया कृष्णग्रहगृहीतात्मान
वेदजगदीदृशं ३७ आसीनःपर्यटन्नश्नन्शयानःप्रपिबन्ब्रुवन् नानुसंधत्तए-
तानिगोविंदपरिरंभितः ३८ क्वचिद्रुदतिवैकुंठचिंताशबलचेतनः क्वचिद्धस-
तितच्चिंताह्लादउद्गायतिक्वचित् ३९ नदतिक्वचिदुत्कंठोविलज्जोनृत्यति
क्वचित् क्वचित्तद्भावनायुक्तस्तन्मयोनुचकारह ४०

तस्यचिंतयाल्हादोयस्य ३९ उत्कंठोमुक्तकंठःसन्ननुचकारतच्चेष्टादिकंस्वयंकृतवान् ४०

संस्पर्शस्तद्भावापत्तिः तेन निर्वृतः अस्पंदः स्थिरो यः प्रणयस्तेन यः आनंदः तेन यत्सलिलं तेन
युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य ४१ आत्मनः परां निर्वृतिं तन्वन् दुःसंगेन दीन
स्यान्यस्यापि मनः शामं शांतं व्यधात् ४२ अघं द्रोहमकरोत् ४३ प्रथमाध्याये पृष्टमेवा

क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः अस्पंदप्रणयानंदसलिलामी
लितेक्षणः ४१ स उत्तमश्लोकपदारविंदयोर्निषेवयाकिंचनसंगलब्ध
या तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसंगदीनस्य मनः शमं व्यधात् ४२
तस्मिन्महाभागवते महाभागे महात्मनि हिरण्यकशिपू राजन्नकरो
दघमात्मजे ४३ युधिष्ठिर उवाच देवर्ष एतदिच्छामो वेदितुं तव सुव्र
त यदात्मजाय शुद्धाय पितादात्साधवे ह्यघं ४४ पुत्रान्विप्रतिकूला
न्स्वान् पितरः पुत्रवत्सलाः उपालभंते शिक्षार्थं नैवाघमपरो यथा ४५

र्थमति विस्मयेन पुनः पृच्छति देवर्ष इति तव त्वत्तः तव वाक्यादिति वा साधवे अघमदात् साधो
द्रोहं कृतवानिति यत् एतत् वेदितुं ४४ उपालभंते आक्षिपंति अघं तु तेनैव कुर्वंति अपरः शत्रुरि
व ॥ ४५ ॥

अनुवशान् अनुकूलान् साधून् अपगतदोषान् गुरुः पितैव दैवतं येषां तानीदृशाघंनकुर्वीत किमुवक्त
व्यमित्यर्थः पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्राकृतोद्वेषः पुत्रस्य मरणार्थं प्रयोजितः प्रवर्त्तित इति यत् एत
त्कौतूहलं विधम अपाकुरु यद्वा यद्यस्मात्पुत्राय यो द्वेषः स पितुर्मरणाय प्रयोजितः अतएव कौतू
विधमेत्यर्थः ४६ इति श्रीभागवते महापुराणे सप्तमस्कंधे टीकायां चतुर्थोऽध्यायः ४ पंचमे गुरु

किमुतानुवशान् साधून् स्वादृशान् गुरुदेवतान् एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्र
भो पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ४६ इति श्रीभागवते महापुराणे सप्त
मस्कंधे नाम चतुर्थोऽध्यायः ४ नारद उवाच पौरोहित्याय भगवान् वृतः काव्यः कि
लासुरैः शंडामर्कौ सुतौ तस्य दैत्यराजगृहांतिके १ तौ राज्ञा प्रापितं बालं प्रह्ला
दं नयकोविदं पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् २ यत्तत्र गुरुणा प्रो
क्तं शुश्रुवेऽनुपपाठ च न साधु मनसा मेने स्वपरासद्ग्रहाश्रयं ३

तोऽधीतं तत्त्वज्ञाविष्कृतं सुतोरितं घातयन् हिंसयीद्यैः स तं दैत्यो न चाशकत् १ भगवद्भक्तिविद्वेषकारण
मिति वक्तुमाह पौरोहित्यायेत्यादिना काव्यः शुक्रः अतस्तस्य सुतौ तत्रान्वसतामिति शेषः १ पाठ्या
न् इत्यादीन् पाठ्यान् असुरबालकानिति वान्वयः २ अनुश्रवणानंतरं तथैव पपाठ च किंतु तत्साo
धु न मेने तत्र हेतुः स्वः पर इत्यसद्ग्रहो मिथ्याभिनिवेशस्तदाश्रयो यस्य तत् ३ ॥

४ हे असुरवर्य असद्ग्रहात् अहंममेति मिथ्याभिनिवेशाद्धेतोः समुद्विग्नधीर्येषां वनं गतः सन् हरिमाश्रयेतेति यत्तदेवाहं साधु मन्ये कथंभूतं गृहं हित्वा आत्मनः पातं अधःपातनिमित्तं कूपं अंधकूपवन्मोहावहं ५ परपक्षेण विपक्षेण समाहिताः परिनिष्ठिताः हासमेवाह बुद्धिरिति ६ विष्णु

एकदासुरराट्पुत्रमंकमारोप्य पाण्डव पप्रछ कथ्यतां वत्स मन्यते साधु यद्भवान् ४ प्रल्हाद उवाच तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् हित्वात्मपातं गृहमंधकूपं वनं गतो यद्धरिमाश्रयेत ५ नारद उवाच श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ६ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः विष्णुपक्षैः प्रतिछन्नैर्न भिद्येतास्य धीर्यथा ७ गृहमानीतमाहूय प्रल्हादं दैत्ययाजकाः प्रशस्य श्लक्ष्णया वाचा समपृछंत सामभिः ८ वत्स प्रल्हाद भद्रं ते सत्यं कथय मा मृषा बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ९ ॥

भा० ७

पक्षैर्भगवत्तत्परैः नतु स्पष्टं ज्ञातस्तेषां प्रवेशः संतत्याचित्प्रतिच्छन्नैर्वेषांतरेणाच्छन्नैः ७ दैत्यैर्गृहमानीतं ८ बालानन्यान् अतिक्रम्य तुभ्यं तव ९

१० अहो मायया मोहिता भवंतो मामासिषं गोप्याशयेन तावदाह परः स्वश्चेति मिथ्याभिनिवेशो यदीय
यामाययैव कृतः नतु वास्तवः अतएव तया विमोहितबुद्धीनां भवतामेव दृष्टः नतु मम तस्मै अचिंत्यमायेश्व ता२
राय नमः ११ अहो किमेतन्न सत्यमसि न बुद्धिभेदो यतो जातस्तत्रोपपेत्याद्वैतं सन् तत्र सा द्वादेवत्व
स्माह स इति त्रिभिः स भगवान् यदा अनुव्रतः अनुकूलो भवति तदा पशूनामिव बुद्धिर्भेदगता अ

बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् भण्यतां श्रोतुकामानां गुरूणां कुल
नंदन १० प्रह्लाद उवाच परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः
विमोहितधियां दृष्टस्तस्मै भगवते नमः ११ स यदानुव्रतः पुंसां पशुबुद्धि
र्विभिद्यते अन्य एष तथान्योऽहमिति भेदगतासती १२ स एष आत्मा स्व
परेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते मुह्यंति यद्वर्त्मनि वेदवादिनो
ब्रह्मादयो ह्येष भिनत्ति मे मतिं १३

सती मिथ्याविषया विभिद्यते अभिन्नात्मनिष्ठा
भवति १२ भेदस्यासत्वं दर्शयन्नाह स एष परमात्मैव स्वः पर इति च अविवेकिभिर्निरूप्यते युक्तं चैतत्
यतः यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोपि मुह्यंति तत्र हेतुः दुरत्ययं दुर्घटं अनुक्रमणं अनुचरितं मननं
वर्णनं वा यस्य सः १३ अच्युताय नमः गोविंदाय नमः कृष्णाय नमः ॥

ननुनिर्विकारस्यकथंमतिभेदकत्वंतत्राह यथाअयोलोहं आकर्षस्यायस्कान्तस्यसमीपेस्वयमेवभ्रमति चेतस
श्चक्रपाणेःसन्निधिरेवकुतोजातस्तत्राह यदृच्छयेति कस्यचित्पादाभिवादनादेःफलमेतदितिनज्ञायतइत्यर्थः १४ राजसे
वकउवाचेतिशेषः १५ वेत्रंकशाउपायानांमध्येचतुर्थः दमोदंडः अस्यदुर्बुद्धेःउदितउक्तःशास्त्रेषु दुर्बुद्धित्वे
हेतुः कुलस्यांगारवन्नाशहेतोः १६ तत्कुतस्तत्राह दैतेयाएवचंदनद्रुमाः तेषांवने अयंकंटकद्रुमतस्या

यथाभ्राम्यत्ययोब्रह्मन्स्वयमाकर्षसन्निधौ तथामेभिद्यतेचेतश्चक्रपाणेर्यदृच्छया१
४ एतावद्ब्राह्मणायोक्त्वाविरराममहामतिः तंनिर्भर्त्स्यकुपितःसदीनोराजसेवकः
१५ आनीयतामरेवेत्रमस्माकमयशस्करः कुलांगारस्यदुर्बुद्धेश्चतुर्थोस्योदितोदमः
१६ दैतेयचंदनवनेजातोयंकंटकद्रुमः यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोर्भकः
१७ इतितंविविधोपायैर्भीषयंस्तर्जनादिभिः प्रल्हादंग्राहयामासत्रिवर्गस्योपपाद
नं १८ ततएनंगुरुर्ज्ञात्वाज्ञातज्ञेयचतुष्टयं दैत्येंद्रंदर्शयामासमातृमृष्टमलंकृतं १९

नारदउवाच

जातः तदेवाह यस्यदैत्यवनस्यमूलोन्मूलनेपरशुस्थानीयस्यविष्णोरयमर्भकःदंडत्वमालायितः नालमिवाच
रत्यथापरशोः छेदकत्वेकुठारादिद्रुमोपनिर्मितोदंडःसहकारीभवतितंविनाछेदनासंभवात् तथायंविष्णो
र्दैत्यमूलच्छेदेहेतुर्जातइत्यर्थः १७ इतितंप्रल्हादंभीषयन्धर्मार्थकामवर्गस्यप्रतिपादनकंशास्त्रमध्याप
यामास १८ ज्ञातंज्ञेयमध्याप्यचतुष्टयंयेनतंज्ञात्वादैत्येंद्रंप्रतिमात्रामृष्टंउद्वर्त्यस्नापितं १९ ॥ ॥

२० २१ २२ पादसेवनंपरिचर्या अर्च्चनंपूजा दास्यंकर्मार्पणं सख्यंतद्विश्वासादि आत्मनिवेदनंदेहसमर्पणंयथा
वक्रीतस्यगवाश्वादेर्भरणपालनादिचिंतानक्रियतेतथादेहंतस्मैसमर्प्यतच्चिंतावर्जनमित्यर्थः २३ इतिनवलक्ष
णानियस्याःसाअधीतेनचेद्भगवतिविष्णौभक्तिःक्रियतेसाचअर्पितैवसतीयदिक्रियेतनतुकृतासतीपश्चादर्प्यते

पादयोःपतितंबालंप्रतिनंद्याशिषाऽसुरः परिष्वज्यचिरंदोर्भ्यांपरमामापनिर्वृतिं २० आ
रोप्यांकमवघ्रायमूर्द्धन्यश्रुकलांबुभिः आसिंचन्विकसद्वक्त्रमिदमाहयुधिष्ठिर २१

रू हिरण्यकशिपुरुवाच प्रल्हादऽनूच्यतांतातस्वधीतंकिंचिदुत्तमं कालेनैतावतायुष्मन्य
दशिक्षत्गुरोर्भवान् २२ प्रल्हादउवाच श्रवणंकीर्त्तनंविष्णोःस्मरणंपादसेवनं अ
र्चनंवंदनंदास्यंसख्यमात्मनिवेदनं २३ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा
क्रियेतभगवत्यद्धातन्मन्येधीतमुत्तमं २४ निशम्यैतत्सुतवचोहिरण्यकशिपुस्तदा गु
रुपुत्रमुवाचेदंरुषाप्रस्फुरिताधरः २५ ब्रह्मबंधोकिमेतत्तेविपक्षंश्रयतासता असा
रंग्राहितोबालोमामनादृत्यदुर्मते २६

तदुत्तममधीतंमन्ये नतुतस्माद्गुरोरधीतंशिक्षितंवातथाविधंकिंचदस्तीतिभावः २४ २५ २६ यामायनमः

मित्रत्वेन वर्त्तमानस्यापि तव विरोधाचरणं नासंभावितमित्याह संतिहीति दुष्टं मैत्रं मित्रत्वं येषां ते रोग इति कुत्स्नहानाय रो
गी स्यात्तथा तापः स्यात्सदं तनकः स्वर्णहारी कुनखी दुश्चर्मा गुरुतल्पग इत्यादिस्मृतेः पातकिनां रोगोपयो देति तथा ते
षामघं विद्वेषादिकमुदेतीत्यर्थः २७ मत्प्रणीतं मया पाठितं नोस्मभ्यं कृतं कृतं सितं दोषं मास्म अदाः श्रुतागमश्च
धिः मयि दोषारोपं मा कृथा इत्यर्थः इंद्रशत्रो इति न हि ब्राह्मणो युक्तवक्ता प्रत्युचित इति भावः २८ गुरुमुखी गुरुवा
क्यजनिता हे अभद्र २९ आत्मानि परवार्त्ता मया हेशानां विषयासक्तानाम् ज्ञानोत्पत्तिकारणादित्याशयेनाह मति

संति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः तेषामुदेत्यघं काले रोगः पातकिनामिव २
७ गुरुपुत्र उवाच न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेंद्रशत्रो नैसर्गिकीयं मति
रस्य राजन्नियच्छ मन्युं कददाः स्म मा नः २८ नारद उवाच गुरुणैवं प्रतिप्रोक्तो भूय आहा
सुरः सुतं न चेद्गुरुमुखीयं ते कुतोऽभद्रासती मतिः २९ प्रह्राद उवाच मतिर्न कृष्णे
परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानां अदांतगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितच

रिति परतः गुरोः स्वतो वा मिथो वा अन्योन्यतः नाभिपद्येत केषां गृह एव व्रतं संकल्प इति कृतं चिंता येषां अत एव अ
नुपरतैर्गोभिरिंद्रियैर्हेतुभूतैः तमिस्रं संसारं विशतां तत्र च चर्वितस्यैव चर्वणं येषां ३० ननु श्रीकृष्णस्यापप
रमानंदरूपत्वात्तेपि तन्निष्ठा एव किं न स्युः ई तत्राह नते विदुरिति ये दुराशयाः विषयवासितांतःकरणास्ते
हि विष्णुं न विदुः तत्र हेतुः स्वात्मन्येवार्थः पुरुषार्थो येषां तेषां गतिं गम्यं ननु तेपि गुरूपदेशाद्विष्णुं ज्ञास्यंति

तत्राह बहिर्विषयेषां ते बहिरर्थमानिनस्तानेव गुरुत्वेन मन्यमानास्तेषां ते अंधैरूपनीयमाना अंधा यथा पथा पंथा
नं न विदुः किंतु गर्त्ते पतंति तथा तेपि ईशस्य तंत्र्यां दीर्घरज्ज्वां वेदलक्षणायां उरूणि दामानि ब्राह्मणादिनामानि
यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव भवंतीत्यर्थः तदुक्तं विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः वारुणीदिग्गतं व
स्तु व्रजन्नैंद्रीं किमाप्नुयात् इति ३१ ननु च एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मेत्यादिश्रुतिप्रति

न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः अंधाँ यथांधैरुपनीयमा
नावागीशतंत्र्यामुरुदाम्नि बद्धाः ३१ नैषां मतिस्तावदुरुक्रमांघ्रिं स्पृशत्यनर्थापगमो
यदर्थः महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत् ३२ इत्युक्त्वोप
रतं पुत्रं हिरण्यकशिपू रुषा अंधीकृतात्मा स्वोत्संगान्निरस्यत महीतले ३३ ॥

वतु २४

पादितं विष्णुं कथं न विदुः कुतो वा तेषां तमिश्रप्रवेशस्तत्राह नैषामिति निष्किंचनानां निरस्तविषयाभिमानिनां
महत्मानां पादरजसा अभिषेकं यावन्न वृणीत तावत् श्रुतिवाक्यतो ज्ञातापि एषां मतिरुरुक्रमस्यांघ्रिं न स्पृ
शति न प्राप्नोति असंभावनादिभिर्विहन्यत इत्यर्थः अनर्थस्य संसारस्यापगमो यदर्थः यस्या अंघ्रिस्प
र्शिन्याः मतेरर्थः प्रयोजनं महदनुग्रहाभावान्न तत्त्वनिश्चयो नापीह मोक्षस्तेषामित्यर्थः ३२ निरस्य
तानिरास्यत चिक्षेप ३३ ॥

अमर्षोसहनंतेनसहितयारुषाआविष्टोव्याप्तः कषायीभूते आताम्रे लोचने यस्य हे नैरृताः राक्षसाः ३४ वध्यत्वे हेतुः यतोयंमेभ्रातृहा कुतोयोविष्णोपादावर्चतितल्लक्षणतोयमर्थः अतः स एवायमित्यन्वयः ३५ अहो विष्णुरप्यस्य स्नेहं किमितिस्वीकृतवानित्याह विष्णोर्वेति अहात् जहौ ३६ ननु तावायमपत्यं च कथं वध्य इत्यत्राह परोप्यौ षधमिवहितकृच्चेत्तदपत्यमेवस्वीयं स्यात् स्वदेहजोपिआहितश्चेत् आमयइव आस्तां ममतास्यदस्य पथा॰

आहामर्षरुषाविष्टः कषायीकृतलोचनः ॥ वध्यतामाश्वयंवध्यो निःसारयत नैरृताः ३४ अयंमेभ्रातृहासोयंहित्वास्वान्सुहृदोऽधमः पितृव्यहंतुर्यःपादौ विष्णोर्दासव दर्चति ३५ विष्णोर्वासाध्वसौकिंनुकरिष्यत्यसमंजसः सौहृदंदुस्त्यजंपित्रोरहाद्यः पंचहायनः ३६ परोप्यपत्यंहितकृद्यथौषधं स्वदेहजोप्यामयवत्सुतोऽहितः छिंद्या त्तदंगंयदुतात्मनोहितं शेषंसुखंजीवतियद्विवर्जनात् ३७ सर्वैरुपायैर्हंतव्यः संभोजशयनास नैः सुहृल्लिंगधरःशत्रुर्मुनेर्दुष्टमिवेंद्रियं ३८ नैरृतास्तेसमादिष्टा भर्त्रावैशूलपा णयः तिग्मदंष्ट्राकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ३९ नदंतोभैरवंनादंछिं धिभिंधीतिवादिनः आसीनंचाहनन्शूलैः प्रल्हादंसर्वमर्मसु ४० अंगमपियत्तकर

चरणादि तद्यदात्मनोऽहितंछिंद्यादेवेत्यर्थः ३७ अतः सर्वैरुपायैर्हंतव्यः संभोजो भोजनं भोजनादिषु विषा दियोगेरित्यर्थः यथादुष्टमिंद्रियंमुनेः शत्रुः ३८ तिग्मानितीक्ष्णादंष्ट्रायेषां करालान्यास्यानियेषां तेच तेच ताम्राणिश्मश्रूणिशिरोरुहाश्च येषां ३९ ४० ॥ गोविंदायनमः कृष्णायनमः रामायन

परे इत्यस्य युक्तः समाहित आत्मा मनो यस्य तस्मिन् ते सर्वे प्रहारा यान्निष्फला जाताः तत्र हेतुः ब्रह्मणीति विकारे अनिर्देश्ये अविषये भगवति निरतिशयैश्वर्ये अखिलात्मनि शत्रूणामपि नियंतरि एवंभूते परे अपुण्यस्य निर्दैवस्य सत्क्रिया महोद्यमा इव ४१ ४२ अभिचाराः कृत्यादयः अवपातनानि गिरिशृंगादेर्धः पातनानि तैः

परेब्रह्मण्यनिर्देश्येभगवत्यखिलात्मनि युक्तात्मन्यफलाआसन्नपुण्यस्येवसत्क्रियाः ४१ प्रयासेऽपहतेतस्मिन्दैत्येंद्रःपरिशंकितः चकारतद्वधोपायान्निर्वंधेनयुधिष्ठिर ४२ दिग्गजैर्दंदशूकेंद्रैरभिचारावपातनैः मायाभिःसंनिरोधैश्चगरदानैरभोजनैः ४३ हिमवाय्वग्निसलिलैःपर्वताक्रमणैरपि नशशाकयदाहंतुमपापमसुरःसुतं ४४ चिंतांदीर्घतमांप्राप्तस्तत्कर्तुंनाभ्यपद्यत एषमेबह्वसाधूक्तोवधोपायाश्चनिर्मिताः ४५

आवपादिषु संनिरोधैश्च ४३ पर्वताक्रमणैः पर्वतानां तदुपरि क्षेपैः बहुवचनैरभिचाराद्यावृत्तिं दर्शयति तत्र हंतुं कर्तुं नाभ्यपद्यत न प्राप नाशकोदित्यर्थः ४४ चिंतामेवाह एष इति त्रिभिः मे मया असाधु परुषं यथा भवति तथोक्तः असद्धर्मैरपकारैः अभिचारैर्वा ४५ रामायनमः कृष्णायनमः गोविंदायनमः श्रीराम

अविदूरे वर्त्तमानोऽपि वालोप्ययं अजडधीः निर्भयचित्तः मे अनार्यमत्यायं शत्रुत्वेवा न विस्मरति अजीगर्त्त
स्य मध्यमपुत्रः शुनःशेफो नाम पित्रा यो हरिश्चंद्राय विक्रीतः स यथा तयोरपकारमविस्मरं स्तादिषकं विश्वा
मित्रमाश्रित्य गोत्रांतरमापन्नस्तद्वत् यद्वा स्वभावापरित्यागे दृष्टांतः शुनःशेफः पुच्छमिवेति ४५ अत्रमेयः

तैस्तैर्द्वंद्वैरसद्भिर्मुक्तः स्वेनैव तेजसा वर्त्तमानो विदूरे वै वालोप्यजडधीरयं नवि
स्मरति मेऽनार्यं शुनःशेफ इव प्रभुः ४६ अप्रमेयानुभावोयमकृतात्मविदुयोऽमरः
नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ४७ स्तुतिं न चिंतया किंचिन्न्यानाश्रिय
मधोमुखं शांडामर्कावौशनसौ विविक्तः स्थितिर्हि चेत् ४८ जितं पुरैकेन जगत्त्रयं
भ्रुवो विजृंभणात्रस्तसमस्तधिष्ण्यपं न तस्य चिंत्यं तव नाथ चक्ष्महे न वै शिशूनां गु
णदोषयोः पदं ४९

अप्रमेयानुभावो यस्य न कृतात्मविदुयं यस्य न मर्त्ता अन्यथा मत्युर्नैव भविष्यतीत्यर्थः ४७ औशनसौ
उशनसः पुत्रौ नीतिज्ञौ विविक्ते एकांते ४८ भ्रुवो विजृंभणेनैव त्रस्ता धिष्ण्यपा येन तस्य चिंत्यं न च
क्ष्महे न पश्यामः यद्मा लंवनं नैवास्ति यस्माच्छिशूनां गुणदोषयोः पदं विषयो न भवतीत्यर्थः ४९

तथापितंवंचनमस्योचितमित्याहतुः इमंत्विति यावद्गुरुरागमिष्यतितावद्बध्वानिधेहिततःकिं मतऊचतुः बुद्धिश्चः समीचीनावयसाभवतीति। ५० अनुज्ञायतथेत्यंगीकृत्य ५१ ततश्च

इमंतुपाशैर्वरुणस्यबध्वानिधेहिभीतोनपलायतेयथा बुद्धि श्चपुंसोवयसार्यसेवयायावद्गुरुर्भार्गवआगमिष्यति ५० तथे तिगुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् धर्मोह्यस्योपदेष्टव्योराज्ञां येगृहमेधिनां ५१ धर्ममर्थंचकामंचनितरांचानुपूर्वशः प्र ह्लादायोचतूराजन्प्रश्रयावनतायच ५२ यथात्रिवर्गंगुरु भिरात्मनेउपशिक्षितं नसाधुमेनेतच्छिक्षांद्वन्द्वारामोपवर्णितां ५३

तौप्रह्लादायधर्मादिकमूचतुःप्रश्रितत्वादवनतत्वात्तस्मै ५२ यथावत्त्रिवर्गमनुशासितमपि नसाधुमेनेतांशिक्षांचकुतः द्वन्द्वैरागद्वेषादिभिर्विषयेष्वारमणंयेषांतैरुपवर्णितं ५३ रामायनमः॥

पराहतः अन्यत्रगतः उपहूतः संधिप्रायादपरस्याणांक्रीडार्थंकृतक्षणैः कृतोत्सवैः लब्धावसरैरितिवा ५४ नेमानि गुणांजन्ममरणादिलक्षणांविद्वान् ५५ इंद्रियारामाणामीरितैरीहितैरन्नदूषितात्मधीर्येषांयतोवालाः ५६ तास्मिन्ने वस्मस्तंरुदयमीक्षणांचयेः ५७ इतिसप्तमेपंचमोऽध्यायः ५ षष्ठेगुरोगृहव्यग्रेप्रल्हादोदैत्यवालकान्

यदाचार्यःपरावृत्तोगृहमेधीयकर्मसु वयस्यैर्बालकैस्तत्रसोपहूतःकृतक्षणैः ५४ अथतान्श्लक्ष्णयावाचाप्रत्याहूयमहाबुधः उवाचविद्वांस्तन्निष्ठांकृपयाप्रहसन्निव ५५ तेतुतद्गौरवात्सर्वेत्यक्तक्रीडापरिच्छदाः बालानदूषितधियोद्वंद्वारामेरितेहितैः ५६ पर्युपासतराजेंद्रतन्न्यस्तहृदयेक्षणाः तानाहकरुणोमैत्रोमहाभागवतोऽसुरः ५७ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेपंचमोऽध्यायः ५ प्रल्हादउवाच कौमारआचरेत्प्राज्ञोधर्मान्भागवतानिह दुर्लभंमानुषंजन्मतदप्यध्रुवमर्थदं १

अनर्थकंप्रपंचंतत्वंनारदोक्तमुपादिशत् १ निरर्थकक्रियालापैरायुर्व्ययमजानतां प्रल्हादःसदयंप्राह धर्मंभागवतं कृती २ कौमारइत्यादिना इहैवमानुषजन्मनिधर्मानाचरेत् यतोऽर्थदमेतत् तत्रकौमारएव यतः तदप्यध्रुवं नचैवंभूतंजन्मांतरे यतः दुर्लभंतत्रधर्मानेवाचरेत् नसुखार्थंप्रयासान् तत्रभागवतानेवनकाम्यान् १

इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति यथा हीति चतुर्भिः इह पुरुषस्य विष्णोः पादोपसर्पणमेव यथा अनुरूपं योग्यमित्यर्थः यद्यस्मात् एष प्रियः सुहृच्च देहिनां २ भोगोद्यमः कथं त्याज्य इति चेत्तत्राह सुखमिति सर्वत्र यथा अयत्नादपि दैवाद् दुःखमेवं सुखमित्यर्थः ३ अतस्तदर्थं प्रयासो न कर्तव्यः यतः प्रयासात् परं केवलं आयुषो व्यय एव यतस्तथा तेन प्रकारेण क्षेमं न प्राप्नोति ४ भयमाश्रितः संसारं प्राप्तः पौरुषं शरीरं यावत्पुष्कलमासीन्न विपद्येत अर्वाङ्मरणं न भवेत् न परेषादि

यथा हि पुरुषस्येह विष्णोः पादोपसर्पणं यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् २
सुखमैंद्रियकं दैत्या देहयोगेन देहिनां सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः ३
तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परं न तथा विंदते क्षेमं मुकुंदचरणांबुजं ४ ततो
यतेत कुशलः क्षेमाय भयमाश्रितः शरीरं पौरुषं यावन्न विपद्येत पुष्कलं ५ पुंसो वर्षश
तं ह्यायुस्तदर्द्धं चाजितात्मनः निःफलं यदसौ रात्र्यां शेतेंधं प्रापितस्तमः ६ मुग्धस्य
बाल्ये कौमारे क्रीडतो याति विंशतिः जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ७ दुरा
पूरेण कामेन मोहेन च बलीयसा शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ८

तिष्ठति तावदेव क्षेमाय यतेत ५ आयुर्व्ययक्रममाह पुंस इति त्रिभिः यद्यस्मात् शेते तमः ६ विंशतिर्वर्षाणि आयुर्याति ७ दुरापूरेण दुःखैः समंतादापूर्यमाणेन ८ ननु यौवने गृहासक्तोपि विषयेभ्यो विरक्तः

श्रः ६

स्०भा०टी० सनद्येसंयाप्नतीत्याधांकातदर्शाभवंदर्पयत्कौमारएवाचरेदित्येतदुपपादयंति कोगृहेष्विति सप्तभिः ९ यमर्थंप्र

सुभिः क्रीणातिप्राणहानिमंगीकृत्यापितस्करादिरर्थंसाधयतितास्मिन्नर्थेतृष्णांकोनुविसृजेत्कोपीत्यर्थः १०
किंच कथमित्यादित्रिभिः प्रियायाः संगादिकंस्मरन्कथंत्यजेदितित्रतीयेनान्वयः मंत्रान्हितशिक्षालापान् सुहृत्सु
चसंगंतेषांस्नेहेनसितोबद्धः कलानिमधुराण्यक्षराणियेषांतेषांचसंगंतेष्वनुरक्तंचित्तंयस्य ११ ताः स्वसृ
रगृहेस्थिताः हृदय्याः हृदयंगमाः मनोज्ञाउरवः परिच्छदायेषुतान् वृत्तीर्जीविकाः कुल्याः कुलपरंपरागताः

कोगृहेषुपुमान्सक्तमात्मानमजितेंद्रियः स्नेहपाशैर्दृढैर्बद्धमुत्सहेतविमोचितुं ९ को
न्वर्थतृष्णांविसृजेत्प्राणेभ्योपियईप्सितः यंक्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको
वणिक् १० कथंप्रियायाअनुकंपितायाः संगंरहस्यंरुचिरांश्चमंत्रान् सुहृत्सुच
स्नेहसितः शिशूनांकलाक्षराणामनुरक्तचित्तः ११ पुत्रान्स्मरंस्तादुहितॄर्हृदय्या
भ्रातॄन्स्वसॄर्वापितरौचदीनौ गृहान्मनोज्ञोरुपरिच्छदांश्चवृत्तीश्चकुल्याः पशु
भृत्यवर्गान् १२ त्यजेतकोशस्कृदिवेहमानः कर्माणिलोभादवितृप्तकामः ॥
औपस्थ्यजैह्वंबहुमन्यमानः कथंविरज्येतदुरंतमोहः ॥ १३ ॥ कृष्णायनमः

१२ कोशस्कृत्कोशकारीकीटः सयथा गृहंकुर्वन्नात्मनोनिर्गमद्वारमपिनावशेषयतितथाकर्माणीहमा
नः नन्व वितृप्तकामोपिदोषदर्शनेनविरक्तः सन्त्यजेत् औपस्थ्यंचपौंस्यंचजैह्व्यंचसुखंतदेवाधिकंमन्यमा
नः अतोदुरंतोमोहोयस्यसः कथंविरज्येतविरक्तः स्यात् १३ ॥ श्रीरामचंद्रायनमः गोविंदायनमः

दुरंतमोहत्वं दर्शयन्नाह कुटुंबपोषणाय वियत् क्षीयमाणं निजमायुः पुरुषार्थं च विहतं न बुध्यते अतएव तापत्रयेण दुःखितात्मापि नो चि१
पि न निर्विद्यते दुःखबुद्धिं न करोति यतः स्वकुटुंबे रामो रतिर्यस्य १४ प्रमत्ततां चाह किं करोतीत्याह वित्तेष्विति नित्यमभि
निविष्टं चेतो यस्य सः परवित्तहर्तुः प्रेत्य नरकलक्षणं इह च दंडादिरूपं दोषं यद्यपि विद्वान् अथाप्यशांताभिलाषत्वात्
परवित्तं हरत्येव १५ तदेवं कौमार एव मुमुक्षुत्वादि सप्तभिः श्लोकैः प्रपादितं गृहादिषु प्रसक्तस्य वैराग्याद्यसंभव

कुटुंबपोषाय वियन्निजायुर्न बुध्यतेर्थं विहतं प्रमत्तः सर्वत्र तापत्रयदुःखितात्मा निर्वि
द्यते न स्वकुटुंबरामः १४ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः प्रे
त्येह वाथाप्यजितेंद्रियस्तदशांतकामो हरते कुटुंबी १५ विद्वानपीत्थं दनुजाः
कुटुंबं पुष्णन् स्वलोकाय न कल्पते वै यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्ये
त यथा विमूढः १६ यतो न कश्चित् क्व च कुत्रचिद्दीनः स्वमात्मानमलं समर्थः

मुपसंहरति विद्वानपीति स्वलोकाय आत्मपरार्थमर्थाय न कल्पते किं तु मूढो यथा तथा विद्वानपि तमः अभि
निवेशमेव प्रपद्यते न तत्र हेतुः यः इति स्वीयमिदं पारक्यमिदमिति भिन्नो भावो भावना यस्य सः १६ तस्मात् कौमा
र एव भागवतान् धर्मान् आचरेदिति सहेतुकमुपसंहरति यतः कश्चिदपि स्वमात्मानं मोचयितुं न समर्थः
ततः नारायणमुपेत शरणं याते स्फुटेतरेणान्वयः असामर्थ्ये हेतुः अलं दीनो लंपटः अतः कामो हृच्छयात्

स्त्रीणां तासां विहारे गृहक्रीडायां निमित्ते क्रीडामृगः विहारमिति पाठे तासां विहारसाधनमात्मानं यतस्तासां क्रीडामृगः स्वऽयमन्वयः किंच यत्पाशनिगडः यं खल्वनुस्यूतो विसर्गः पुत्रादिरूपो भवति १७ विदूरात् दूरतः संगं परिहृत्य यद्वा अविदूराच्छीघ्रं नारायणमुपेतेत्यन्वयः यस्मात्स एवापवर्गः इषित इष्टः १८ बालानामस्माकं तद्भजनम

विमोचितुं कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः १७ ततो विदूरात्परिहृत्य दैत्या दैत्येषु संगं विषयात्मकेषु उपेत नारायणमादिदेवं स मुक्तसंगैरिषितोऽपवर्गः १८ न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः १९ परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु भौतिकेषु विकारेषु भूतेष्वथ महत्सु च २० गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः २१

शक्यमिति चेत्तत्राह नहीति बह्वायासः अतिप्रयासः १९ आत्मत्वात्सर्वत्र प्रसिद्धत्वादिति च हेतुद्वयमुपपादयति परावरेष्विति चतुर्भिः ब्रह्मान्ते येषां स्थावर आदिर्येषां तेषु जीवेषु भौतिकेषु अजीवेषु घटादिषु महत्स्वेच भूतेष्वाकाशादिषु गुणसाम्ये प्रधाने गुणव्यतिकरे महत्तत्वादौ च परः ब्रह्मस्वरूपः २१ श्रीरामचंद्राय नमः ॥

कथं तर्हि द्रष्टृदृश्यभोक्तृभोग्यादिभेदः माययेत्याह प्रत्यगात्मेति द्रष्टा भोक्ता च तत्स्वरूपेण व्यापकतया निर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्यो मायया ईयत इत्युत्तरेणान्वयः वस्तुतस्तु स्वयं अविकल्पितो ऽनिर्देश्यो ऽपि सन् यद्वा अनिर्देश्यो ऽपि निर्देश्यः सन् विकल्पित ईयत इत्युत्तरेणान्वयः २२ यतः केवलानुभवात्मक आनन्द एव स्वरूपं यस्य स एव चेत् सर्वत्र तर्हि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत न त्वाह गुणात्मकः सर्गो यस्याः सा गुणसर्गा तया मायया अन्तर्हितमै

प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयं व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योविकल्पितः २२
केवलानुभवानन्दस्वरूपः परमेश्वरः मायया अन्तर्हितैश्वर्य ईयते गुणसर्गया २३ तस्मात्
सर्वेषु भूतेषु दयां कुरुत सौहृदं आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः २४ तुष्टे च तत्र
किमलभ्यमनन्त आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः धर्मादयः किमगुणेन च
काङ्क्षितेन सारं जुषां चरणयोरुपगायतां नः २५ ॥

त२

श्वर्यं येन सः २३ यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचितं दयां सौहृदं च कुरुत यया दयया उन्मुच्य असंसृज्य २४ ततः किमत आह ॥ तुष्टे च तत्र तस्मिन् किमलभ्यं तथापि गुणपरिणामादैवादेव स्वसिद्धा अयत्नतः सिद्धा ये धर्मादयः तैः किं अगुणेन च मोक्षेण काङ्क्षितेन अर्कि तमुपगायतां नोऽस्माकमकाङ्क्षितस्यापि तस्य सिद्धेः यद्वा मा भून्मोक्षः तस्य चरणयोः सारं जुषां तत्
सेवमानानां तेनापि किमित्यर्थः २५ २

ननु च धर्मादेरपुरुषार्थत्वे किमिति शास्त्रार्था प्रागवेदोक्तत्वेन समप्रत्वाभिहितः तत्राह धर्मार्थः कामश्चेति यास्त्रिवर्गस्तदर्थं च
या ईक्षा आत्मविद्या त्रयी कर्मविद्या नयदमौ तर्कदण्डनीती विविधा च वार्त्ताजीविका तदेतत्सर्वं नि
गमस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणः परमपुंसः स्वात्मार्पणसाधनं चेत्तर्हि सत्यं मन्ये समर्पकत्वात् अन्यथा तदस
त्यमेव यद्वा तदेव तदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मा
र्पणमेवेत्यर्थः तदुक्तं भगवता त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति २६ तेषां विश्वासार्थं गुरुसंप्रदायमाह स्मा

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्त्ता मन्ये तदेतदखि
लं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः २६ ज्ञानं तदेतदमलं दुरवापमाह
नारायणो नरसखः किल नारदाय एकान्तिनां भगवतस्तदकिंचनानां पादारविं
दरजसाप्लुतदेहिनां स्यात् २७ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतं धर्मं भागवतं शु
द्धं नारदाद्देवदर्शनात् २७ ॥

नर

नरसख इति यत्र नारदः श्रोत्रतत्र कृतो मादृशां नामाधिकार इति माशंक्याह भगवत एकान्तभक्तानां पादरजः तेन
आप्लुतानां स्नातानां देहिनां सर्वेषामपि तत्ज्ञानं स्यात् न तु तत्तमानामेवेति नियमः २७ एतदेवमया पिनारदाच्छ्रुतं
विज्ञानसंयुतं अनुभवपर्यन्तं धर्मं च श्रुतं २८ श्रीरामचन्द्रायनमः ॥ श्रीपार्वतीपतयेनमः ॥ ब्रह्मणेनमः रामः

२६

तत्रापि विस्मिताः पृच्छन्ति प्रह्लादे इति एताभ्यां मत्तेः अंगुरुं न विद्मः एतदागमनानुपूर्व्यमेवाह नारदपार्श्वगत इति चेत् तत्रा
हुः बालानामपि अत्र तिष्ठतामस्माकमेतौ विष्वगौ नियंतारौ अतस्तत्वान्यत्र गमनं न संभवति २९ सत्यं तत्रागतत्वं
पि न संभवतीत्याहुः बालक इति दुरन्वयः दुर्वहः विभ्रमकारणं विश्वासहेतुः ३० इति श्रीमत्सप्तमे टीकायां षष्ठोऽध्यायः
६ सप्तमे स्मारगर्भस्थो भ्रात्स्मिन्नारदभाषितं प्रह्लादो वर्णयामास शिष्येभ्यः प्रत्ययायेदमे १ अग्रजाविनारदादेतन्म

दैत्यपुत्रा ऊचुः प्रह्लाद त्वं वयं चापि नर्तेन्यं विद्महे गुरुं एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ २
९ बालस्यांतःपुरस्थस्य महत्संगो दुरन्वयः छिंधि नः संशयं सौम्य स्याच्चेद्विस्रंभकारणं ३० इति
श्रीभागवते महापुराणे सप्तमस्कंधे प्रह्लादानुचरिते षष्ठोऽध्यायः ६ नारद उवाच एवं दै
त्यसुतैः पृष्टो महाभागवतोऽसुरः उवाच स्मयमानस्तान्स्मरन्मदनुभाषितं १ प्रह्लाद उ
वाच पितरि प्रस्थितेस्माकं तपसे मंदराचलं युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति २
पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः पापेन पापोभक्षीति वादिनो वासवादयः ३ तेषा
मतिबलोद्योगं निशम्यासुरयूथपाः वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशं ४ कलत्र
पुत्रमित्राप्तान्गृहान्पशुपरिच्छदान् नावेक्ष्यमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ५

यागर्भस्थ इतीरितं ततः प्रस्तावकथामाह पंचभिः षोडशभिः सुधीः २ अस्माकं पितरि हिरण्यकशिपौ २ स्वकृ
तेनैव पापेन पापो हतोऽभक्षि भक्षितः इति सर्वेणावदंतो युद्धोद्यमं चक्रुः ३ ४ ५ श्रीरामचंद्राय नमः

राज्ञः शिबिरं आवासं व्यलुंपन् सर्वस्वापहारेणानाशितवंत ६ ७ अनागसं निरपराधां मे नैनां नेतुं मार्हसीति प्राह ८ अवि
षह्यं दुःसहं अतः आ न प्रसवपर्यंतमत्रास्यतां ततश्च अर्थपदवीं मार्गं गतः प्राप्तः सन् जातं पुत्रं हत्वा मोक्ष्यामीत्यर्थः ९

व्यलुंपन्राजशिबिरममराजयकांक्षिणः इंद्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ६ नीय
मानां भयोद्विग्नां रुदतीं कुररीमिव यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि ७ प्राह मैनां सु
रपते नेतुमर्हस्यनागसं मुंच मुंच महाभाग सतीं परपरिग्रहं ८ इंद्र उवाच (अयं निष्कि)
आस्तेस्या जठरे वीर्यमविषह्यं सुरद्विषः आस्यतां यावत्प्रसवं मोक्ष्येर्थपदवीं गतः ९ नार
द उवाच अयं निष्किल्बिषः साक्षान्महाभागवतो महान् त्वया न प्राप्स्यते संस्थामनंता
नुचरो बली १० इत्युक्तस्तां विहायेंद्रो देवर्षेर्मानयन्वचः अनंतप्रियभक्त्यैनां परिक्रम्य दिवं
ययौ ११ ततो नो मातरमृषिः समानीय निजाश्रमं आश्वास्येहोष्यतां वत्से यावत्ते भर्तु
रागमः १२ तथेत्यवात्सीद्देवर्षेरंति साप्यकुतोभया यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्तत
१३

साक्षात्स्वगुणैरेव महान् ननु पित्रादिसंबंधात्त्वयाहंतुं शक्यः तेन संस्थां मृत्युं न प्राप्स्यति तत्र हेतवो निष्किल्बिष इत्या
दयः १० अनंतस्य प्रियो यो हंसस्तस्य प्रियो यस्य तस्य ममानंतप्राणिनां प्रदक्षिणीकृत्य ११ इहोष्यतामित्याहेति शेषः १२
अंति समीपे १३

परैः सोऽपि विवेकसमर्थो देहादाविदं विद्वान् असद्भावं मिथ्याबुद्धिं त्यजेत् २० नन्वेवं विविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवेन ब्रह्मताप्राप्तिः कथं स्यात् यतोऽहंकारादिकं तु जह्यादित्यपेक्षायां तत्प्राप्तिप्रकारं सदृष्टान्तमाह स्वर्णमिति क्षेत्रेषु स्फुरत्स्वर्णकणेषु ग्रावसु योगैर्मनागुपायैः स्वरूपापादितो हेमकारो यथा स्वर्णमाप्नुयात् आत्मयोगैः आत्मप्राप्त्युपायैः ब्रह्मगतिं ब्रह्मतां अध्यात्मवित् आत्माधिकृतकार्यकारणसंघातज्ञाता २१ अध्यात्मविवेकमात्मप्राप्त्युपायमाह अष्टाविति त्रिभिः मूलप्रकृतिर्महदहंकारौ पंचतन्मात्राणि चेत्यष्टौ त्रयः सत्त्वादयः ते च प्रकृतिगुणा एव न तु भिन्नाः एकादशेन्द्रियाणि पंचमहाभूतानि चेति षोडश विकाराः पुमानात्मा एकः प्रोक्तः कपिलादिभिराचार्यैः एकत्वे हेतुः एषु साक्षित्वेनान्व

एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः। अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् २०
स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात्। क्षेत्रेषु देहेषु तथात्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत २१
अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः। विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् २२
देहस्तु सर्वसंघातो जगत्तस्थुरिति द्विधा। अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् २३
अन्वयव्यतिरेकेण विवेकेनोशतात्मना। सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥

यात् तदुक्तं मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष इति २२ जगत् जंगमं तस्थुः स्थावरं अत्रैव सर्वसंघातात्मके देहे एव मृग्यः अन्वेष्टव्यः सुशाकं चेतदित्याह नेति नेतीति अस्मापोहादिक्रियमाणः स्वयमेव अतत्त्यजन् अनात्मवर्गमपत्यागमुपलभ्यमान इत्यर्थः २३ मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनान्वयः अनात्मवर्गेभ्यः स च स्वैकैकव्यतिरेक इति योऽहं तेन यो विवेकः पूर्वोक्तो वा तेन उशता कद्वेनात्मना मनसा सर्गस्थानसमाम्नायैः सृष्टिस्थितिसंहारैः यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुत्युक्तसर्गाद्यनुसंधानेनेत्यर्थः विमृशद्भिः विचारयद्भिः असत्वरैः अव्यग्रैर्मृग्यत इति पूर्वेणान्वयः २४ ॥ वं २ः

विमर्शप्रकारमाह बुद्धेरिति द्वाभ्यां अध्यक्षः साक्षी॥ २५ अतः एभिर्बुद्धिभेदैः परिणामैः पर्यस्तैः परितः क्षिप्तैः आत्मधर्मत्वेन
निरस्तैः बुद्धिधर्मत्वेनेत्यर्थः त्रिवर्णैः त्रिगुणात्मकैः क्रियोद्भवैः कर्मजन्यैर्बुद्धेरेव त्रिगुणात्मकत्वात् कर्मकर्तृत्वाच्च तस्या
एवैता अवस्थाः आत्मानुवृत्त्यन्वयात् तदवस्थावानिव भातीति न तत्त्वत इत्यात्मनः स्वरूपं बुध्येत जानीयादित्यर्थः अत्र दृ
ष्टान्त कुसुमधर्मैर्गन्धैस्तदाश्रयं वायुमिव २६ ननु तर्हि यथा कुसुमोपाधिकोऽपि वायोर्गन्धो विवेकज्ञानेन न वर्तते एव
मात्मनः संसारो न निवर्तेत तत्राशंक्याह एतद्द्वार इति बुद्धिद्वारकस्तदवस्थाद्वारको वा न स्वतः हि यस्मात् बुद्धेर्गुणाः

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः २५ एभिस्त्रिव
र्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः स्वरूपमात्मनो बुध्येद्गन्धैर्वायुमिवान्वयात् २६ एतद्द्वारो
हि संसारो गुणकर्मनिबन्धनः अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते २७ तस्माद्भव
द्भिः कर्तव्यं कर्मणां त्रिगुणात्मनां बीजनिर्हरणं योगः प्रवाहोपरमो धियः २८

कर्माणि च तैर्निबध्यत इति तथा स चाज्ञानमूलः अतोऽपार्थो मिथ्याभूतोऽपि स्वप्न इवेष्यते वायोस्तु गन्धवत् दृश्यसंबन्धस्य
वास्तवत्वाद्विषमो दृष्टान्तः २७ यस्मादेवं निवृत्तिर्घटते तस्मात् बीजमज्ञानं तस्य निर्हरणं दहनं किं तत् योगः कथंभूतः
धियः प्रवाहं जाग्रदादिरूपमुपरमयतीति तथा २८ श्रीरामचंद्राय नमः श्रीकृष्णाय नमः श्रीमाधवाय नमः ५:

तदेवं ज्ञानप्रकारमुक्त्वा तत्साधनं धर्ममप्युक्तवान् तदेवतत्सेवा तत्रैवेति पंचभिः येईश्वरैश्वर्यथाऽनुष्ठितैर्बीरतिरितियत् अपमपा योभगवतोक्तः तथा हि गीतासु यत्करोषियदश्नासियज्जुहोषि ददासियत् यत्तपस्यसि कौंतेयतत्कुरुष्वमदर्पणमिति भक्त्यामामभिजानातियावान्यश्चास्मितत्वतइत्यादि २८ तत्रैवांतरंगान्धर्मानाह गुरोः शुश्रूषया भक्त्या त्रेमणासर्व

तत्रोपायसहस्राणामयंभगवतोदितः यदीश्वरेभगवतियथायैरंजसारतिः २९ गुरुशुश्रू-षयाभक्त्यासर्वलब्धार्पणेनच संगेनसाधुभक्तानामीश्वराराधनेनच ३० श्रद्धयातत्क-थायांचकीर्तनैर्गुणकर्मणां तत्पादांबुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः ३१ हरिःसर्वेषुभू-तेषुभगवानास्तईश्वरः इतिभूतानिमनसाकामैस्तैःसाधुमानयेत् ३२ एवंनिर्जितष-



ड्वर्गैःक्रियतेभक्तिरीश्वरे वासुदेवेभगवतियथासंलभतेरतिं ३३ निशम्यकर्माणिगुणा-नतुल्यान्वीर्याणिलीलातनुभिःकृतानि यदातिहर्षोत्पुलकाश्रुगद्गदंप्रोत्कंठउद्गायति रौतिनृत्यति ३४ यदाग्रहग्रस्तइवक्वचिद्धसत्याक्रंदतेध्यायतिवंदतेजनं मुहुःश्वस न्वक्तिहरेजगत्पतेनारायणेत्यात्ममतिर्गतत्रपः ३५ तदापुमान्मुक्तसमस्तबंधनस्तद्भा-वभावानुकृताशयाकृतिः निर्दग्धबीजानुशयोमहीयसाभक्तिप्रयोगेणसमेत्यधोक्षजं

सर्वलब्धानामर्पणेनच ३० तस्यलिंगानांभक्तानामीक्षणमर्हणंचादिशब्दाद्वंदनादीनांतैश्च ३१॥ ३२ निर्जितःषण्णांकाममक्रोधलोभमोहमदमत्सराणां इंद्रियाणांवावर्गोयैः भगवद्भक्तेर्लिंगान्याह निशम्येतित्रिभिःगुणानभक्तवात्सल्यादीन् अतिहर्षेणउद्गताःपुलकाः अश्रूणिचयेनगद्गदंयथाभवत्येवंप्रोत्कंठउद्गायति ३४ ३५ तस्यभावश्चेष्टादिः तस्यभावोभावनातेनानुकृतेआशयाकृतीमनःशरीरेयस्यनिर्दग्धंबीजमज्ञानंअनुशयोवासनाचयस्यसःसम्य

ततः किं मतमत आह अथोत्तमस्यालंभं मनसा स्पर्शेण ... अयमर्थः रागादियुक्त आत्मा मनो यस्य संसृति चक्रशातनं तन्निवर्तकं बुधा विदुः तदेव ब्रह्मनिर्वाणसुखमानन्दः तदात्मकं सुखं विदुः हृदीश्वरं भजत यामिमां ३७ भक्तिरशक्येति च न मन्तव्यमित्याह क इति छिद्रवत् आकाशवत् विषयाणामुपपादनैरर्जनैः किं तत्र हेतुः सर्वदेहिनां सामान्यतः विषयनिष्पत्तेस्तु करादिसाधारणापत्तेरित्यर्थः नचैवमासुरो योनरुक्तो दोषः नारदोक्तानुवादरूपत्वात् प्रकरणस्य ३८ अनर्थकं च विषयार्जनमित्याह रायः अर्थाः क्षणभंगुरमायुर्यस्य तद्युक्तमिति हासपुरुषधनेद्रियपुर पुरुषो लोके पुरुषं धनमेव वा अवश्यमेकं त्यजति तस्मात्किं धनतृष्णयेति ३९ यद्दुःखेन संभिन्नं न च ...

अथोत्तमालंभमिहात्मभाजः शरीरिणः संसृतिचक्रशातनं तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरं ३७ कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ३८ रायः कलत्रं पशवः सुतादयो गृहा मही कुंजरकोशभूतयः सर्वेऽर्थकामाः क्षणभंगुरायुषः कुर्वंति मर्त्यस्य कियत्प्रियं चलाः ३९ एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ४० यदर्थ इह कर्माणि विद्वन्मान्यसकृन्नरः करोत्यतो विपर्यासममोघं विंदते फलं ४१ सुखाय दुःखमोक्षाय संकल्प इह कर्मिणः सदाप्नोतीहया दुःखमनीहायाः सुखावृतः ४२

ननु तर्हि अभिलाषो व पवर्गः च सुखं स्वर्गं परं स्यादिति एवंभूताः स्वर्गादिभोगा अपि न सेव्याः ... एवं हीति तथापि ... क्रतुभिः कृता इति तथा ... कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते इति श्रुतेः अत एव उपतारतम्येन सातिशयाः न च निर्मलाः स्पर्धादिमत्त्वात् न विद्यते ... दूषणं यस्मिन् ४० किंच यदर्थं यत्संकल्पात् अतः संकल्पितत्वात् विपर्यासं विपरीतं फलं अमोघं अवश्यं प्राप्नोति ४१ तदेव

भा०स्० किंच कामानभोगान्काम्यैर्विषयैः कर्मभिर्वा पारक्यः श्वादिभोग्यः भत्वान्त्यीयः भंगुरश्च ४३ किमु देहात्तदर्थवाहिताः अ
७०३० वस्थादयो ममतास्पदाः पारक्याः नश्वरा इति किं वक्तव्यं ४४ किंच स्वयं पुरुषार्थरूपस्य किमेतैरित्याह किमेतैरिति ४५ भोग
वस्तुभावाद्वैतौ कर्मप्रयोगश्चासारनिरूप्यतामिति प्राचीनैः कर्मभिः क्लिश्यमानस्य कर्मभिः कियान्स्वार्थ इति अन्वयः ४६

कामान्कामयते काम्यैर्यदर्थमिह पूरुषः स वै देहस्तु पारक्यो भंगुरो यात्युपैति च ४३ किमुता
पत्यदारागारधनादयः राज्यकोशगजामात्यभृत्याप्ता ममतास्पदाः ४४ किमेतैरात्म
नस्तुच्छैः सह देहेन नश्वरैः अनर्थैरर्थसंकाशैर्नित्यानंदमहोदधेः ४५ निरूप्यतामिह
स्वार्थः कियान्देहभृतोऽसुराः निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ४६ कर्मा
ण्यारभते देही देहेनात्मानुवर्तिना कर्मभिस्तनुते देहमुभयं त्वविवेकतः ४७ तस्मादर्था
श्च कामाश्च धर्माश्च यदपाश्रयाः भजतानीहयात्मानमनीहं हरिमीश्वरं ४८ सर्वेषा
मपि भूतानां हरिरात्मेश्वरः प्रियः भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ४९ देवो
ऽसुरो मनुष्यो वा यक्षो गंधर्व एव च भजन्मुकुंदचरणं स्वस्तिमान्स्याद्यथा वयं ५० नालं
द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः प्रीणनाय मुकुंदस्य न वृत्तं न बहुज्ञता ५१ न दानं न तपो
नेज्या न शौचं न व्रतानि च प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंबनं ५२

नतु कर्मभिर्नैव तनुते ४७ यदपाश्रया यदधीनाः ४८ भूतानां प्राणिनां जीवसंज्ञितः अंतर्यामी ४९ असुराणामस्मा
कं अत्र नाधिकार इत्यपि न वाच्यमित्याह देव इति पंचभिः ५० ५१ अमलया निष्कामया विडंबनं टमात्रं ५२ राम

५२ अच्युततां अगमन्ततत्वे ५४ अध्यायद्योक्षमुपसंहरति एतानिति तदीतुंगं गोविंददृह्यासंमानतं ५५ इति सप्तमेटी
सप्तमोध्यायः ७ अह्रमेति रत्नाकरोतेनिद्युद्दैत्यो हन्तः स्वयं आविर्भवन् सिंहेन सच ब्रह्मादिभिस्तुतः श्रुतः कृपासुधा
कृणो वा हिक्रोधोन केसरी देवसिंहु महिमावेन मर्जतत्स्वमभावयत् २ एकांते सान्यतां प्रसन्नः तां यथा यथा वत् २

ततो हरौ भगवति भक्तिं कुरुत दानवाः आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ५३ दैतेया
यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः खगा मृगाः पापजीवाः संति ह्यच्युततां गताः ५४ ए
तावानेव लोकेस्मिन् पुंसः स्वार्थः परः स्मृतः एकांतभक्तिर्गोविंदे यत्सर्वत्र तदीक्षणं ५५ इति श्री
भागवते महापुराणे सप्तमस्कंधे सप्तमोध्यायः ७ नारद उवाच अथ दैत्यसुताः सर्वे श्रुत्वा त
दनुवर्णितं जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितं १ अथाचार्यसुतस्तेषां बुद्धिमेकांतसं
स्थितां आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा २ कस्यातदप्रियं दैत्यो दुःसहं तनयान
यं कोपावेशचलद्गात्रः पुत्रं हंतुं मनो दधे ३ क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणं आ
हेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ४ प्रश्रयावनतं दांतं बद्धांजलिमवस्थितं सर्पः पदा
हत इव श्वसन् प्रकृतिदारुणः ५ हिरण्यकशिपुरुवाच हे दुर्विनीत मंदात्मन् कुलभेदक
राधम स्तब्धं मच्छासनोद्वृत्तं नेष्ये त्वाद्य यमक्षयं ६ ॥

द्र १

सच हंतुं मनो दधे कथंभूतः कोपस्यावेशेनोद्रेकेण चलत् गात्रं वपु
र्यस्य सः ३ क्षिप्त्वा तिरस्कृत्य पापेन सरोषेण तिरश्चीनेन वक्रेण ४ ५ मंदात्मन् अल्पबुद्धे महाज्ञातिलंघिने त्वाम
द्य यमालयं नेष्यामि ६ ॥ श्रीरामचंद्राय नमः श्रीकृष्णाय नमः रामाय नमः श्रीलक्ष्म्यै नमः गोविंदाय नमः

अभीतवत्किंबलंयस्यसःकिंबलः ७ ८ वशंप्रणीताः स्ववशेहेतुः सईश्वरइति उरवःक्रमाः पादविक्षेपायस्यवउरुपराक्रमः
तिवा ओजआदिरूपःसत्वधैर्यंबुद्धिर्वा ९ ननुअसौकथंममापिसएवबलंस्यादित्यतआह जहीति आत्मनःस्वस्यस्व
भावंसमथ्यत अजितादात्मनोमनसस्तेविना अन्येविद्विषोनसंति किंच यद्धितदेवतस्यानंतस्यमनसोधारणमेवसमर्ह

क्रुद्धस्ययस्यकंपंतेत्रयोलोकाःसहेश्वराः तस्यमेभीतवन्मूढशासनंकिंबलोत्यगाः ७ प्रल्हाद
उवाच नकेवलंमेभवतश्चराजन्सवैबलंबलिनांचापरेषां परेऽवरेऽमीस्थिरजंगमाये
ब्रह्मादयोयेनवशंप्रणीताः ८ सईश्वरःकालउरुक्रमोसावोजःसहःसत्वबलेंद्रियात्मा ।
सएवविश्वंपरमःस्वशक्तिभिःसृजत्यवत्यत्तिगुणत्रयेशः ९ जह्यासुरंभावमिमंत्वमात्मनःसमं
मनोधत्स्वनसंतिविद्विषः ऋतेऽजितादात्मनउत्पथस्थितात्तद्धिह्यनंतस्यमहत्समर्हणं
१० दस्यून्पुराषण्नविजित्यलुंपतोमन्यंतएकेस्वजितादिशोदश जितात्मनोज्ञस्यसमस्य
देहिनांसाधोःस्वमोहप्रभवाःकुतःपरे ११ हिरण्यकशिपुरुवाच व्यक्तंत्वंमर्तुकामोसियो
ऽतिमात्रंविकत्थसे मुमूर्षूणांहिमंदात्मन्ननुस्युर्विक्लवागिरः
१२

णमाराधनं १० ममादिग्विजयेसर्वेजिताअतःसांप्रतंनसंतीतिसत्यमितिचेत्तत्राह दस्यूनिति एकेभवादृशामेदापु
दस्याहीलंपतःसर्वस्वंहरतः षडिंद्रियलक्षणान्दस्यूनविजित्यअजित्वादशदिशःस्वयंजितामन्यंते साधोस्तुजितात्म
नस्यदेहिनांसमस्यज्ञस्यविदुषःस्वाज्ञानकल्पिताःपरेशत्रवःकुतःस्युः ११ व्यक्तंनिश्चितंविक्लवाः अनान्विताऽस्वर्थाः
१२

॥॥ हे मंदभाग्य यस्सावस्तितनर्हि कास्ति प्रह्लाद आह सर्वत्रास्ति हिरण्यकशिपुराह तर्हि कस्मात् स्तंभे नास्ति
॥ किं न दृश्य १३ प्रह्लादस्तु तं स्तंभं निरीक्ष्य मानसो नमस्यन्नाह दृश्यत इत्यर्थः हिरण्यकशिपुस्तु तमपश्यन्नाह।
॥ सोहमिति विकत्थमानस्य विपरीतं ब्रुवाणस्य १४ प्रह्लादेन सम्यग्दृढां जल्पिना निरीक्षमाणं स्तंभं ताडितवान्
॥ १६ तस्य देतस्य ध्वनेराश्चर्यं १७ ननु यस्तदा अहं दृश्यते स्तंभोवमेव किमर्थं निजभक्तेन प्रह्लादेन यद्भाषितं दृ।
श्यत इति तत्सत्यं विधातुं कर्तुं। तथा भाविलेषु भूतेषु स्वात्मनो व्याप्तिं च सत्यां विधातुं कर्तुं स्तंभे दृश्यत तत्किम

यस्त्वया मंदभाग्योक्तो मदन्यो जगदीश्वरः क्वासौ यदि स सर्वत्र कस्मात्स्तंभे न दृश्यते १३ सोहं
विकत्थमानस्य शिरः कायाद्धरामि ते गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितं १४ एवं दुरुक्तैर्मुहुर
र्दयन् रुषा सुतं महाभागवतं महासुरः खड्गं प्रगृह्योत्पतितो वरासनात् स्तंभं तताडातिबलः स्वमु
ष्टिना. १५ तदेव तस्मिन्निनदोतिभीषणो बभूव येनांडकटाहमस्फटत् यं वै स्वधिष्ण्योपगतं त्वजाद
यः श्रुत्वा स्वधामात्ययमंगमेनिरे १६ स विक्रमन्पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भु
तं अंतःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः १७ ॥ ॥ ॥ ॥

र्वं भौतिकेषु च भावेषु भूते स्वयमहमस्मि च भगवानास्त इति तेनैव भक्तेन भाषितं तत्सत्यं कर्तुं तथाश्चर्यमद्भुतं।
दैत्यघातकमतिघोरं रूपमुद्वहन्। इत्यत। तत्किमर्थं निजभक्तैः सनकादिभिः शापानंतरमनुतप्तैः त्रिभिर्जन्म
भिः शापमोक्षो भवतितत्सत्यं कर्तुं। तथाश्चर्यमद्भुतं ब्रह्मसृष्टावदृष्टमभूतं च रूपमुद्वहन्। तच्च न मृगाका
रं न च मनुष्याकारमुद्वहन्। सभायां मध्ये अदृश्यत। तत्किमर्थं निजभक्तेन हिरण्यकशिपुना ब्रह्माणं प्र
ति यद्भाषितं। भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो इति तथा नांतर्न वहिरि तिनन्नरैर्नमृगैरिति च

ब्रह्मणा च निजभक्तेन तथास्त्विति यद्भाषितं तत्सत्यं कर्तुं। न हि तद्दत्तस्य भूतं न च नरो वा मृगो वा न च सम्भाव्यस्थानतः न च प्राणतो न बहिः। एवं ताभ्यां भाषितं सत्यं कर्तुं। तच्च हिरण्यकशिपुना भाषितं। न न मे तद्विरोधेन मृत्युर्भवितेति। तथा। अयं मत्कृतस्मिन्नुपो ऽमर इति तच्च नारदे। न निजभक्तेनैवं प्रतिभाषितं अग्रे पमहान् संस्थान प्राप्स्यतेति। अनन्तानुचरस्यानेन। स्वस्य भक्तयस्तात्पाति त्वं च यद्भाषितं तच्च सत्यं कर्तुं महदृश्यत चकारान्निजभाषितं च। यत्कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यतीति। तथा तेषामहं समुद्धर्ता मृत्युसंसारसागरादित्यादि तच्च सत्यं कर्तुं महदृश्यतेति द्रष्टव्यं। अलमतिविस्तरेण। १८ स दैत्यः एवं ध्वनिं श्रुत्वा॥

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषं १८ स सत्वमेवं परितो विपश्यन् स्तम्भस्य मध्यादनुनिर्जिहानं नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपं १९ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपं तदलं भयानकं प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेशरजृम्भिताननं २० करालदंष्ट्रं करवालचंचलक्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणं स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् २१ ॥

तदा स्तम्भे सत्वं प्राणिविशेषं सर्वतो विलोकयन् स्तम्भस्य मध्यान्निर्गच्छन्। नृमृगेन्द्ररूपं नरसिंहरूपमहो किमेतदिति मीमांसितवानिति शेषः। १९ तस्यैवमलं भयानकं तत् नृसिंहरूपं मीमांसमानस्याग्रतः स नृसिंहरूपो हरिः समुत्थितः। भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति त्रिभिः। प्रतप्तचामीकरं स्वर्णमिव पिंगानि चण्डानि लोचनानि यस्मिन्। सटाः जटाः केशराः कण्ठे लोमानि स्फुरद्भिः सटाकेशरैर्जृम्भितं साटोपमाननं यस्मिन् २० कर वालः खड्गः तद्वच्चंचला क्षुरान्तवत् तीक्ष्णा च जिह्वा यस्मिन् भ्रुकुटीयुक्तेन मुखेनोल्बणं स्तब्धौ ऊर्ध्वौ शंकुव

द्विविस्पष्टशङ्कायो यस्मिन् अलुक्समासः अदीर्घा ह्रस्वा पीवरा च स्थूला ग्रीवा यस्मिन् उरुर्विशालं वक्षःस्थ
लं यस्मिन् तच्च तच्च। अल्पं मध्यं मध्यमं यस्मिन्॥ चंद्रांशुवद्गौरैस्तनूरुहैर्लोमभिः छुरितं व्याप्तं विष्वक् सर्वतः
प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन्। नखान्येवायुधानि यस्मिन् २२ दुरासदं आभिमुख्येन शक्यो स
र्वाणि चानि जानि चक्रादीनि इतराणि वज्रादीनि तान्येवायुधप्रवेकाः श्रेष्ठास्तैर्विद्राविता दैत्या दानवा यस्मिंस्तं दू — ता ४
षमीमांसमानस्याग्रतः समुत्थितं इति पूर्वेणान्वयः तदा विमावप्रयोजनं विमृश्याह व्यमेकं तेन सह दैत्यस्य युद्धमाह
सप्तभिः प्रायेणेति महामायाविना हरिणा मे यमेवंभूतो वधः मृत्युहेतुः स्मृतः चिंतितः तथाप्यनेन समुद्यतेन किं न किं

द्विविस्तशङ्कायमदीर्घपीवरग्रीवोरुमध्यस्थलमल्पमध्यमं चंद्रांशुगौरैः छुरितं तनूरुहैर्विष्वग्भु
जानीकशतं नखायुधं २२ दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवं प्रायेण मेऽयं हरिणोरुमा
यिना वधः स्मृतोऽनेन समुद्यतेन २३ एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुंजरः अलक्षि
तोऽग्नौ पतितः पतंगमो यथा नृसिंहौजसि सोऽसुरस्तथा॥ २४ न तद्धि चित्रं खलु सत्वधामनि स्वतेज
सा यो नु पुरापिबत्तमः ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया २५ तं विक्रमंतं सगदं ग
दाधरो महोरगं तार्क्ष्यसुतो यथाग्रहीत् स तस्य हस्तोत्कलितस्तदासुरो विक्रीडतो यद्वदहिर्गरुत्मतः २६
ता१ असाध्वमन्यंत हृतौकसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः २७ ॥ ॥

चिद्भिरेवं ब्रुवन्नभ्यपतद्दैत्यन्रुपः २३ तदा सावसुरो नृसिंहौजसि दीप्ते पतितः सन्नलक्षितः अदृष्टोऽभवत् २४
सत्वधामनि सत्वप्रकाशे हरौ पतितस्य तमोमयस्यादर्शनं न हि चित्रं न भवति। तत्र हेतुः। यो हरिः पुरा सृष्ट्यादौ प्रलयका
लीनं तमः नु अहो अपिबत् २५ तस्मिन् विक्रममाणे तत ततः प्रहर्तं हस्तादुत्कलितः निःसृतः २६ तदा अमरा देवाः
सर्वधिष्ण्यपा असाध्वमन्यंत हृतान्योकांसि स्थानानि येषां ते तद्धि मायघनच्छदा मेघान्तरिताः संतः २७॥ ॥॥

यस्य हस्तात्स्वयं मुक्तः तेन हरिं स्ववीर्येण शङ्कितं मन्यमानः। खड्गचर्मणी प्रगृह्य पुनस्तमासज्जत। आससञ्जे। गतश्रमो मृध इत्यन्वयः २८ श्येनस्येव वेगो यस्य तं। शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैः अच्छिद्रं यथा भवत्येवमुपर्यधश्चरन्तं। अट्टहासमेवाह खरं तीव्रमुत्स्वनेन महाशब्देनोल्बणं भयंकरं। तद्भयेन हरेः तेजसा च निमीलिते अक्षिणी यस्य २९ ग्रहणेन दुःस्थितः आलो यथा आखुं मूषकं विदारणे दृष्टान्तः। अहिं गरुड इवेति। विष्वक् सर्वतः स्फुरन्तं ग्रहणेनातुरं विवशं। इन्द्रेण सह युद्धे तस्य पुत्रे न कुलिशेन न क्षता त्वगपि यस्य। द्वारि सभायां नान्तर्बहिः ऊरौ निपात्य न भूमौ नाम्बरे। नखैः न तु

तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे २८ तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः कृत्वाट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः २९ विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचं द्वार्यूरुमापात्य ददार लीलया नखैर्यथाहिं गरुडो महाविषं ३० संरम्भदुःप्रेक्ष्यकराललोचनो व्यात्ताननान्तं विलिहन् स्वजिह्वया असृक्लवाक्तारुणकेशराननो यथान्त्रमाली द्विपहत्यया हरिः ३१ नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् अहन्समस्तान्नखशस्त्रपाणिभिर्दोर्दण्डयूथोनुपथान्सहस्रशः ३२

सुभिः असुमद्भिर्वा एवं दिवानक्तपरिहाराय संध्यायामिति द्रष्टव्यम् ३० दैत्यवधमुक्त्वा तदुत्सवमाह द्वाभ्यां। संरम्भेण दुःप्रेक्षे करालाक्षिलोचने यस्य। असृग्लवैः लवैर्विन्दुभिः रक्ताः सिक्ताः अत एवारुणाः केशराः आननं च यस्य सकं द्विपहत्यया गजवधेन हरिः सिंहो यथा। एवंभूतः तस्यानुचरानहनीत्युत्तरेणान्वयः ३१ नखाङ्कुरैरुत्पाटितं हृत्सरोरुहं यस्य तं। दोर्दण्डानां यूथानि यस्य सः। अनुपथान् अनुयायिनः अन्यानपि तत्सहायानित्यर्थः ३२ ॥ ॥

दैत्यवधव्यग्रस्य हरेराटोपमाह द्वाभ्यां सटाभिरवधूताः प्रकंपिताः परापतन्। अप्रशीर्यन्त तस्य दृष्ट्या विमुष्टं रोचिर्ये-
षां ते तिरस्कृतस्वप्रभा अम्भोधयः श्वासहता अभवन्निति शेषः। दिगिभा दिग्गजाः ३३ तस्य सटाभिरुत्क्षिप्तानि विमानानि तैः संकुला द्यौः।
क्ष्मा भूमिश्च प्रोत्सर्पत स्वस्थानात्। प्रकर्षेणोदसर्पत ३४ स्वभक्तस्यैश्वर्यं मा भूदिति मत्वा कोऽपि तेन तस्या सने उप-

सटावधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्राद-
भीता दिगिभा विचुक्रुशुः ३३ द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदाभिपीडिता शै-
लाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ३४ ततः सभायामुपविष्टमुत्तमं नृपास- ५३
म४ ने संभृततेजसं विभुं अलक्षितद्वैरथमत्यमर्षणं प्रचंडवक्त्रं न बभाज कश्चन ३५ निशाम्य लोकत्र-
यमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे। प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सु-
रस्त्रियः ३६ तदा विमानावलिभिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनां सुरानका दुंदुभ-
योऽथ जघ्निरे गंधर्वमुख्या ननृतुर्जगुः स्त्रियः ३७ तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ऋ-
षयः पितरः सिद्धा विद्याधरमहोरगाः ३८ मनवः प्रजानां पतयो गंधर्वाप्सरचारणाः यक्षाः किं-
पुरुषास्तात वेतालाः सिद्धकिन्नराः ३९ विष्णोः पार्षदाः सर्वे सुनंदकुमुदादयः ४० ॥॥

विष्टं भयात्कोऽपि तं न बभाज नासेवत। न लक्षितो द्वैरथः प्रतियोधो येन ३५ लोकत्रयस्य मस्तकज्वरं शिरो-
व्यथेव दुःसहं प्रहर्षस्य वेगेन उत्कलितानि विकसितानि आननानि यासां ताः स्त्रियो ववृषुः ३६ नाकिनां वि-
मानावलिभिः सुराणाम् आनकाः पटहास्ते जघ्निरे वादिताः स्त्रियोऽप्सरसो ननृतुः ३७। ३८ ।गंधर्वाप्स-
रसश्च चारणाश्च स्वर्गे ३९।। ४०।।

नरशार्दूलं पुरुषोत्तमं ब्रह्मादयो नृसिंहस्याशंकयाकुलचेतसः। आराद्देवास्तुवनसन्नरशाश्लोकैः पृथक्पृथक् ॥४१॥ अनंताय अनंतत्वात्प्रसादयितुं नतोऽस्मि। अनंतत्वे हेतुः दुरंताः शक्तयो यस्य तस्मै। ततः विचित्राणि विविधानि प्रभावा यस्य तस्मै। किमर्थं पवित्राणि शोधकानि कर्माणि यस्य विचित्रवीर्यत्वमेवाह। विश्वस्य

मूर्द्धि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसं ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥४१॥
ब्रह्मोवाच नतोऽस्म्यनंताय दुरंतशक्तये विचित्रवीर्याय पवित्रकर्मणे विश्वस्य सर्गस्थिति
संयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥४२॥ रुद्र उवाच कोपकालो युगांतस्ते हतो
यमसुरोऽल्पकः तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल ॥४३॥ ॥ ॥ ॥

ल३४

तिसंदधते सम्यक्कुर्वते एवमप्यव्ययात्मने अप्रच्युतस्वरूपाय ॥४२॥ रुद्रस्तु नत्वा कोपकालाभिज्ञो न।
यं कोपावसर इति तं प्रार्थयते सहस्रयुगांतस्तव कोपस्य कालः कोपायोग्य अन्यायमित्याह अल्प
कः अतः कोपानर्हत्वात्पस्याहं पाहीति इत्याह तत्सुतमिति यद्वा अकाले व्यर्थं कोपः। स्वभक्तस्य र
क्षणार्थमिति चेत्। तर्हि इदानीं कोपं त्यक्त्वेमं पाहि ॥४३॥ ॥ ॥ ॥

राम:

इंद्रस्तु नास्माकं हविर्भागादिलाभः पुरुषार्थः किंतु तव भजनं तस्य श्रीचरणैव भवतापुनरनेन संरंभेण स्वकार्यमि
वसाधितं। तस्य च सिद्धत्वाद्दुर्पसहेरेनं क्रोधमित्याशयेननाह। हे परमनोः संसारत्रापतारत्वत्ताभवतास्वीयापाल्य
भागादित्यात्मस्याहृताः अंतर्यामिणस्तव वपुरेषु भोक्तृत्वात्। अस्मदीयं हृदयकमलं त्वद्गृहमेव तावत्स्वयं
तं भयहेतुत्वेनास्मत्स्फूर्तिपथेनिस्त्यं ह्यतेन दैत्यनाक्रान्तं व्याप्तं सन प्रत्यवाधि भयाकरणेन विकाशनीतं।

इंद्रश्च प्रस्थानीताः परमभवता त्रायतानः स्वभागादित्याक्रान्तं हृदयकमलं त्वद्गृहं प्र
त्यबोधि कालग्रस्तं किं यदि हि महोनाथ भुञ्जत्स्वतं तेन मुक्तिं सेवानहि बहुमतानां सि
हापरैः किं ११ अथ पञ्चभिः त्वं नस्तपः परममास्य यदात्मतेजो येनेदमादिपुरुषात्म
गतं ससर्ज नहि प्रलुप्तममुनाद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्था १५

२२

सी

तव त्रैलोक्यैश्वर्यसाधनार्थमयमुद्यमः इति चेत्तत्राह कालग्रस्तमिति नेत्याह हे नरसिंह नरस्य सिंहस्य
चाकाराम्यामाविर्भूत ११ अथ यस्तु तपः प्रवर्तते नास्माकं महानुग्रहः कृत इत्याहुः त्वं नो यदात्मपर
मध्यानलत्वग्णां तपः परमत्वेहेतुः आत्मनस्तव तेजः प्रभावरूपं तदेवाहुः। येन तपसा आत्मनिलीनमिदं
विश्वं ससर्ज। सृष्टवानसि। तत्त अमुना दैत्येन विप्रलुप्तं कुण्ठितं सत् हे शरण्यपाल अघरक्षार्थं। गृहीते
नानेन वपुषा पुनरपि तपः अंकुरतेस्म अनुज्ञातवानसि। तस्मै ते नमः इत्युत्तरश्लोकचतुर्थपादस्यात्
यंगः १५ ॥

पितरस्तु श्राद्धोद्धरणेन परमोपकारिणं प्रणमंति श्राद्धानि श्राद्धप्रयुक्तानि पिंडादीनि नोऽस्माकं पुत्रैर्द
त्तानि प्रसभं बलात्स्वयमधिकं स्वयं बुभुजे किं च तीर्थस्नानसमये दत्तं तिलोदकमप्यपिबत् । तानि तस्योद
राद्यश्चार्छत् आहृतवान् । कथंभूतात् नखैर्विदीर्णा वपा यस्य तस्मात् वपाविदारस्य तत्कृतपिंडोद्ध
रणमेव फलमिति भावः ४६ योगसिद्धां गतिं अणिमादिसिद्धिं । नाना अनेकाद्दर्पो यस्य तं । तस्मै तुभ्यं ।

पितर ऊचुः श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलांबु तस्यो
दरान्नखविदीर्णवपाद्य आर्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ४६ सिद्धा ऊचुः
यो नो गतिं योगसिद्धामसाधुरहार्षीद्योगतपोबलेन नानादर्पं तं नखैर्विददार तस्मै तुभ्यं
प्रणताः स्मो नृसिंह ४७ विद्याधरा ऊचुः विद्यां पृथग्धारणयानुराद्धां न्यषेधदज्ञो बल
व४ वीर्यदृप्तः स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यं ४८ नागा ऊचुः
येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः तद्वक्षःपाटनेनासां दत्तानंद नमोऽस्तु ते ४९
मनव ऊचुः मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः भवता ख
लः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ५०

४७ तं त्वामुद्दिश्य विद्यां अंतर्द्धानादिलक्षणां । अनुराद्धां संप्राप्तां । संख्ये युद्धे ४८
रत्नानि फणामणयः स्त्रीरत्नानि च उत्तमाः स्त्रियः आसां स्त्रीणां हृत आनंदो येन तत्संबोधनं पाठांतरे अ
स्माकं हृतस्यानंदो येनेति ४९ नृसिंहेनावलोकिताः संतो मर्द्धिवर्द्धजालयो मनवः प्राहुः मनवो वयं धर्मपाल

प्रजापतयोपितद्वल्लोकिताः प्रोचुः हे परेश ते त्वयाभिसृष्टाः प्रजेशाः वयं येन निषिद्धाः सन्तः प्रजा न सृजामः स ए
षभिन्नवक्षो यस्य सः नृनिर्भिन्नं नयन्तः शेते अत परं प्रजासृजाम इति हर्षिता आहुः हे सत्त्वमूर्ते तवायं भवतारो जग
तां मंगलं ५१ गंधर्वाश्च पितद्वल्लोकिताः प्रोचुः हे विभो वयं ते त्वदीया नटा नर्तका नाट्येन स्य गायकाश्च पे

प्रजापतय ऊचुः प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः स एष त्वया
भिन्नवक्षा नु शेते जगन्मंगलं सत्त्वमूर्तेवतारः ५१ गंधर्वा ऊचुः वयं विभो ते नटनाट्य
गायका येनात्मसा द्वीर्यबलौजसा कृताः स एष नीतो भवता दशामिमां किमुत्पथस्थः कु
शलाय कल्पते ५२ चारणा ऊचुः हरे तवांघ्रिपंकजं भवापवर्गमाश्रिताः यदेष साधुहृ
च्छयस्त्वयासुरः समापितः ५३ यक्षा ऊचुः वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैः त इ
ह दितिसुतेन प्रापिता वाहकत्वं स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पंचतां पंचविं

न स्वाधीना कृताः कथंभूते न वीर्यं शौर्यं बलं शक्तिः ओजः प्रभावो यस्य स तेनेमां दशां मृतिं ५२ उचि
तमेतदित्याहुः किमिति भवापवर्गं संसारनिवर्तकं आश्रयणे हेतुः यद्यस्मात्साधुहृच्छयो नोऽस्मि भयजनकत्वेन शे
ते तिष्ठतीति तथाभूत एषोऽसुरस्त्वया समापितः अन्तं नीतः ५३ मनोज्ञैः कर्मभिरनुचरेषु मुख्याः पंचतां
त्वं हे पंचविंश चतुर्विंशतत्त्वनियामक ५४ ॥ रामाय नमः रामाय नमः रामाय नमः

किंपुरुषाल्पत्वात्तेतु के वयं वराकाः इत्याहुः। वयं किंपुरुषास्तुच्छशालिनः। त्वंतु महानद्भुतप्रभावः पुरुषः
५५ नन्वयं महादैत्योहतः इति किं नवर्ण्यते इत्याशंक्याकिंपदेतदित्याहुः। अयमिति सत्रेषु यज्ञेषु तेत्वयाहतः

किंपुरुषाऊचुः वयंकिंपुरुषास्त्वंतुमहापुरुषईश्वरः अयंकुपुरुषोनष्टोधिक्कृतःसा
धुभिर्यदा ५५ वैतालिकाऊचुः सभासुसत्रेषुतवामलंयशोगीत्वासपर्यांमहतींल
भामहे यस्तामनीषीद्वशमेषदुर्जनोदिष्ट्याहतस्तेभगवन्यथामयः ५६ किंन
राऊचुः वयमीशकिंनरगणास्तवानुगादितिजेनविष्टिममुनानुकारिताः भवताह
रेसवृजिनोवसादितोनरसिंहनाथविभवायनोभव ५७ श्रीविष्णुपार्षदाऊचुः ॥
अद्यैतद्धरिनररूपमद्भुतंतेदृष्टंनःशरणदसर्वलोकशर्म सोयंतेविधिकरई
शविप्रशप्तस्तस्येदंनिधनमनुग्रहायविद्म ५८ इतिश्रीभागवतेमहापुराणेस
प्तमस्कंधेप्रह्लादानुचरितेदैत्यराजवधोष्टमोध्यायः ८ नृसिंहायनमः ॥

एतद्दिष्ट्याभद्रंकृतं ५६ अमुनादितिजेनविष्टिं निर्मूल्यकर्म अनुनिरंतरंकारिताः अतःपरंनःविभवा
यसमृद्धयेभवाभोऽस्माकंशरणद आश्रयप्रद सर्वेषांलोकानांशर्ममंगलंमेतदद्भुतंरूपमद्यैवदृष्टंन।
तुपूर्वंविधिकरःकिंकरः ५८ इतिश्रीभागवतेटीकायांअष्टमोऽध्यायः ८ ॥ ॥ ॥

नवमेत्र स्नाणाभीताश्चोदितोऽसुरबालकः कोपं प्रशमयन्नस्तोऽन्त्र सिंहमतिभीषणं १ ॥ उग्रेणाप्यनुग्रहणवाग्यं
स्वभक्तानां न केशरी केशरीव स्तोकानामन्येषामुग्रविग्रहः २ इत्याद्यागमोक्तं भक्तानुकंपतामाह एवा
मितिसप्तभिः एवं दूरत एव स्थित्वा सर्वेऽलः मन्युना संरंभस्यावेशो यस्य तं उपगंतुं नाशक्नुवन् २ महदद्भुतं रू
पं दृष्ट्वा शंकिता सती तं नोपजगाम अद्भुतत्वे हेतुः अदृष्टेति २ उपेहि उपगच्छ ३ । ४ । कोलएवाहि तस्मा दूत्र

नारद उवाच एवं सुराद्यः सर्वे ब्रह्मरुद्रपुरःसराः नोपैतुमशकन्मन्युसंरंभं सुदुरासदं १ सा
क्षात् श्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतं अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शंकिता २ प्र
ह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुं ३ तथेति
शनकैः राजन् महाभागवतोऽर्भकः उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ४ स्वपादमूले
पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः उत्थाप्य तच्छीर्ष्ण्यदधात्कराम्बुजं काला
हिवित्रस्तधियां कृताभयं ५ स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः
तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ६ अस्तौषीद्धरिमेका
ग्रमनसा सुसमाहितः प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ७

स्वाधीर्येषां तेषां कृताभयं येन तत् ५ तस्य करस्पर्शेन धुतं निरस्तमखिलं अशुभं यस्य सः सपदि तत्क्षणमेवाभिव्यक्तं ।
अपरोक्षीभूतं परमात्मदर्शनं ब्रह्मज्ञानं यस्य निर्वृतः सन् हृदि दधौ हृष्यन्ती रोमांचिता तनुर्यस्य क्लिन्नं प्रेमार्द्रं हृत्
यस्य अश्रूणि लोचनयोर्यस्य परमपुरुषार्थं तया दधौ न साधनत्वेनेत्यर्थः ६ सुसमाधिमेवाह तस्मिन्नेव न्य
स्ते हृदयमीक्षणे चयेनेति ७ ॥ ❁ ॥

सर्वस्मिन्निवृत्ते समस्तेषु तत्कथयाम तदृष्ट्ये प्रह्लादः स्तोतुं प्रवृत्त इत्याह चत्वारिंशता हरिं तत्र तावदात्मनो भगवत्
स्तुतावनधिकारमिवाशङ्क्याधिकारं संभावयन्नाह ब्रह्मादय इति द्वाभ्यां मुनयो मननशीलाः सिद्धा ज्ञानिनो
ऽपि कथंभूताः सत्त्वैकतानमतयो विच्छेदरहिता सात्त्विकमतयो वचसां प्रवाहैरपि च संततैः स्तोत्रैरपि तथा
पुरुभिर्बहुभिर्गुणैरपि आराधयितुं न पिप्रुः न पूर्णाः शक्ताः स हरिर्मे कथं तोषं प्राप्तुमर्हति तत्र हेतुः उ

प्रह्लाद उवाच ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः नाराधितुं
पुरुगुणैरधुनापि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ८ मन्ये धनाभिजनरूपतपःश्रुतौज
स्तेजःप्रभावबलपौरुषबुद्धियोगाः नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान्ग
जयूथपाय ९ विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठं ॥

ग्राजातेः उग्रा आसुरी जातिर्यस्य ८ एवं हरितोषणे स्वस्यायोग्यतामाशङ्क्य योग्यतां संभावयति मन्य इति द्वाभ्यां अ
भिजनः सत्कुले जन्म सौन्दर्यं रूपं तपः श्रुतं पाण्डित्यं ओज इन्द्रियपाटवं तेजः कान्तिः प्रभावः प्रतापः पौरुषमुद्यमः बुद्धिः
प्रज्ञा योगोऽष्टाङ्गः एते धनादयो द्वादशापि गुणाः परमस्य पुंस आराधनाय न भवन्ति हि यतः केवलया भक्त्यै
व ननु गजेन्द्राय तुष्टोऽभवत् एवं भक्त्यैव केवलया हरेस्तोषः संभवतीत्युक्तं ९ इदानीं भक्तिं विना नान्यत्किंचि
त्तोषहेतुरित्याह विप्रादिति पूर्वोक्ता धनादयो ये द्वादश गुणास्तैर्युक्तादपि विप्रादपि श्वपचं वरिष्ठं मन्ये यद्वा
सनत्सुजातोक्ता द्वादश धर्मादयो गुणाः द्रष्टव्याः तदुक्तं धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षान
सूया यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्येति यद्वा द्वादश शमो दमः तपः शौचं संतोषार्जव

विरक्तता ज्ञानविज्ञानसंतोषः सत्यास्तिक्यादि बहुगुणाः कथंभूताद्विप्रात् अरविंदनाभस्य पादारविंदविमुखात् कुं
थंभूतं श्वपचं तस्मिन्नरविंदनाभे अर्पि[illegible]न अर्थाः येन तं ईहितं कर्म वरिष्ठत्वे हेतुः स एवंभूतः श्वपचः सर्वं
कुलं पुनाति भूरिमानो गर्वो यस्य स तु [illegible] आत्मानमपि न पुनाति कुतः कुलं यतो भक्तिहीनस्यैते गुणा गर्वायैव
भवंति न तु शुद्धये अतो हीन इति भावः १० तर्हि किं धनाद्यर्पणेन यस्मान्न प्राकृतवद्भगवानपेक्षते इत्याह नैवे
ति अयं प्रभुरीश्वरः अविदुषो ल्पकाज्जनात् मानं पूजामात्मनो र्थे न वृणीते नेच्छति यतो निजलाभेनैव पूर्णः त

मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति स कुलं न तु भूरिमानः १० नैवात्मनः प्रभुरयं
निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते यद्यज्जनो भगवते विदधीत मानं तच्चात्म
ने प्रतिमुखस्य यथा मुखश्रीः ११ तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि य
थामनीषं नीचोजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन १२ ॥

र्हि किं पूजां नेच्छत्येव तत्राह करुणः कृपालुः अतो वृणीते तत्र हेतुः यद्यदिति यं यं कामं यद्यायद्यस्मात् यद्ये
न धनादिना भगवते मानं विदधीत तदेवात्मने भवति नान्यत् यथा मुखे कृतैव तिलकादिश्रीः शोभा प्रतिबिंबस्य
भवति न तु साक्षात्तस्यैव कर्तुं शक्यते तद्वत् ११ यस्मादेवं भगवान् भक्त्यैव तुष्यति तस्मादहं नीचोपि विगत
विक्लवः गतशंकः सन् ईश्वरस्य महिमानं सर्वप्रयत्नेन स्वमनीषानुसारेणानुवर्णयामि अज्ञानतोपि स्तुति
करणे हेतुमाह येनैवं महिम्ना अनुवर्णितेन अविद्यया संसारमनुप्रविष्टः पुमान् पूयेत शुद्ध्येत् तन्महि
अन्यस्य तथा शोधकस्याभावादित्यर्थः १२॥

तदेवमात्मनस्तुतावनधिकारं परिहृत्येदानीं तं स्तुवन् क्रोधोपसंहारं प्रार्थयते सर्वे इति द्वाभ्यां भो ईश अ
मी उद्विजन्तो बिभ्यतः सर्वे ब्रह्मादयः सत्त्वमूर्तेस्तव विधिकराः त्वन्नियोगकर्तारो भक्ता एव नान्येन च वयमसुरा इ
व वैरभावेनैते भक्ताः किंतु त्वद्रूपैव तव रुचिरैरवतारैर्विविधं क्रीडितं ह्यस्य विश्वस्य क्षेमादिप्रयोजनाय न
तु भयोत्पादनाय १३ तत्तस्मादिदानीं मन्युं यच्छ उपसंहर यद्वा अयं मन्युः स चासुरः साधूनां संता
पार्थमद्य हतः अतः परं क्रोधेन कार्याभावात् नियच्छ ननु अन्यवधेन साधुः किं मोदेत तत्राह वृश्चिका

सर्वे त्वमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजन्तः क्षेमाय भूतय उता
त्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः १३ तद्यच्छ मन्युमसुरश्च हतस्त्वया
द्य मोदेत साधुरपि वृश्चिकसर्पहत्या लोकाश्च निर्वृतिमिताः प्रतियन्ति सर्वे रूपं न
सिंह विभयाय जनाः स्मरंति १४

देः परोपद्रवकारिणोऽन्यत एव जाता या हत्या वधेन तस्यैव तद्दुःखं जातमिति साधुरपि मोदेतैवं तर्हि बहूनां
लोकाश्च निर्वृतिं इताः प्राप्ताः संतः प्रतियंति क्रोधोपसंहारं
सुखावहत्वात् अहं तु क्रोधं न त्यजामीति चेत्तत्राह रूपमिति भयाय भवनिवृत्त्यै एतद्रूप
प्रतीयंते तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत् तत्राह रूपमिति भयाय भवनिवृत्त्यै
स्मरणादेव भयनिवृत्तेः न मन्युधारणेन कृत्यमस्तीत्यर्थः १४ ॥

त्वं चेद्बिभेषि तर्हि त्वज्ज्ञा भीतिश्चेत्तत्राह नाहमिति भोऽजित तेऽस्मात् रूपात् अहं न बिभेमि कथंभूतात् आस्यं च जि
ह्वा च अर्कसदृशे नेत्राणि च भ्रुकुटीनां रभस आटोप उग्रा दंष्ट्रा एतानि अतिभयानकानि यस्मिन् तस्मात्।
आन्त्रमय्यः स्रजो यस्मिन् तत् आन्त्रस्रक् तस्मात् शंकुवदुन्नतौ लग्नौ कर्णौ यस्मिन् तद्रूपं तस्मात् निर्ह्रादेन भीमना
देन भीता दिग्गजा यस्मात् अरीन् भित्त्वा [illegible] दितानि नखाग्राणि यस्मिन् एवंभूतादपि ते रूपादहं न बिभेमि १५
तत्र च ग्रस्तानां हि स्त्राणां महद्दुर्भेद्यत्वं प्रदर्शयन्नाह त्रस्तोऽस्मीति दुःसहं यदुग्रं संसारचक्रकदनं दुःखं तस्मादहं त्रस्तोऽस्मि
मध्ये स्वकर्मभिर्बद्धः सन् प्रणीतः निःक्षिप्तोऽस्मि हे कृपणवत्सल हे उशत्तम मम कदा नु त्वं प्रीतः सन् अपवर्गं ते शर

नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् आन्त्रस्रजः क्षतजके
शरशंकुकर्णात् निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् १५ त्रस्तोऽस्म्यहं कृपणवत्सल दुःस
होग्रसंसारचक्रकदनाद्ग्रसतां प्रणीतः बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं प्रीतोऽपवर्गशरणं ह्व
यसे कदा नु १६ यस्मात्प्रियाप्रियवियोगसंयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः
दुःखौषधं तदपि दुःखमतद्धियाहं भूमन्भ्रमामि वद मे तव दास्ययोगं १७

णं त्वं अङ्घ्रिमूलं प्रति ह्वयसे मां आह्वास्यसि १६ दास्यं सतिमत्प्रीतिरिति चेत्तर्हि नानायोनिषु क्लिश्यमानस्य मम दास्य
ज्ञानाभावात् त्वमेव तदुपदिशेति प्रार्थयते यस्मात्प्रियैः अप्रियैश्च यथासंख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोका
ग्निना सकलयोनिषु दह्यमानोऽस्मि दुःखस्य प्रतीकारः कार्य इति चेत्तत्राह दुःखस्यौषधं प्रतीकारः तदपि दुःखमे
व एवमपि अतद्धिया देहाद्यभिमानेन अनुभ्रमामि अतो हे भूमन् विभो मे तव दास्यरूपं योगं संसारनिस्तारोपा

पंचद ११ ॥ श्रीनृसिंहाय नमः ॥ ॥ ॥

ननु हास्य योगोप्येवं तस्यापि तर्हि त्वय्यसक्तानां पूर्वोक्तानां दुःखानां कुतः परिहारस्तत्राह सोहमिति हे नृसिंह
तव लीलाकथा अनुगृणन् दुर्गाणि महादुःखान्यंजसा तितर्मि तरामि तरिष्यामीत्यर्थः तत्र हेतुः गुणै रागादिभि।
विशेषेण प्रमुक्तः सन् तत्कुतः ते पदयुगमेवालयो येषां भक्तानां त एव हंसास्तेषां संगो यस्य सोहं कथंभू
तस्य कथाः तत्राह प्रियस्येत्यादि कुतो ज्ञाताः विरिंचेन गीतास्तत्संप्रदायप्राप्ताः तथा चाप्यविशिष्टकांतिर्देवो देव
प्रजापतिं मनुब्रह्मेत्यादि। हास्य प्रकृतस्य भगवदनुग्रहेणासत्संगस्तोवीनयागतया भगवद्गुणानुवर्णनं। ततश्च
न दुःखाविर्भावः स्यादिति वाक्यार्थः १८ ननु दुःखेतप्तस्य तत्प्रतीकारो लोके प्रसिद्धः एवं किं महास्यादिना त

सोहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिंचगीताः अंजस्तितर्म्यनु
गृणन् विप्रमुक्तो दुर्गाणि ते पदयुगालयहंससंगः १८ बालस्य नेह शरणं पितरौ नृसिंह
नार्तस्य चागदमुदन्वति मज्जतो नौः तप्तस्य तत्प्रतिविधिर्य इहांजसेष्टस्तावद्विभो तनु
भृतां त्वदुपेक्षितानाम् १९

त्राह बालस्येति भो नृसिंह तप्तस्य तत्प्रतिविधिः दुःखप्रतीकारः इह लोके योंजसा इष्टः सत्वदुपेक्षितानां ताव
देव क्षणमात्रमेव न त्वात्यंतिकः तदेवाह बालस्य पितरौ शरणं रक्षकाविह न भवतः ताभ्यां पाल्यमानस्यापि तस्य
दुःखदर्शनात्। कचित्तज्जीवनादिषु ताभ्यामेव तद्दुःखदर्शनाच्च न चार्तस्य रोगिणः अगदमौषधं शरणं कृतेप्यौ
षधे मृत्युदर्शनात् न चोदन्वति समुद्रे निमज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात्। अतस्त्वमेव शरण
मित्यर्थः अथ वैवं काकाक्षिन्यायेन तप्तस्य तत्प्रतिविधिः यः इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किमंजसेष्टः अ
पितु नेष्ट एव। यद्वा यस्तावदिह प्रतिविधिरिष्टः स किमंजसा नेवांजसेत्यादि योज्यं बालस्येत्यादि पूर्ववदेव
॥१९॥

ननु क्वचित्कश्चित्केन चित्कदाचित्‍रक्षकोपि दृश्यत एवेत्याशंक्य तत्रापि तत्तद्रूपेण त्वमेव रक्षक इत्युपरीकृत्य
तस्य च सर्वात्मतामाह। यस्मिन्निति। अपरो वार्चीनः पित्रादिः परो ब्रह्मादिर्वा भावः कर्त्ता तत्कारके मुख्यः करोति
तत्सर्वं भवत एव स्वरूपं न तु पृथक् यस्मिन्नधिकरणे यतो निमित्तात् यर्हि यस्मिन्काले येन करणेन हेतुकर्त्ता संचोदित
अयस्य संबंधि यस्मादपादानात् यस्मै संप्रदानाय। यदीप्सिततमं यः कर्त्ता इत्येवं सप्तविभक्त्यर्थाः। यथा येन प्रकारेणेति
क्रियाविशेषेणम्। तानामव्ययानामर्थाः पृथक् स्वभावः सत्त्वादिप्रकृतिः करोत्युत्पादयति। किं करोति रूपांतरं नयतीति

यस्मिन्यतोयर्हियेनचयस्ययस्माद्यस्मैयथायदुतयस्त्वपरःपरोवा भावःकरोतिविकरोतिपृ
थक्स्वभावःसंचोदितस्तदखिलंभवतः २० मायामनःसृजतिकर्ममयंबलीयःका
लेनचोदितगुणानुमतेनपुंसः छंदोमयंयदजयार्पितषोडशारंसंसारचक्रम
जकोतितरेत्त्वदन्यः २१ ॥

२० अतोन्यस्य रक्षकस्याभावात् संसारित्वान्नित्यमुक्तः त्वमेव मां शरणागतं रक्षेति प्रार्थयते मायेति द्वाभ्यां त्वदंश
स्य पुंसोनुमतेनेक्षणरूपेणानुग्रहेण मनः प्रधानं लिंगं माया सृजाति कथंभूता कालेन चोदिताः क्षोभिता गुणा यस्याः
कथंभूतं मनः कर्ममयं कर्मप्रचुरं बलीयः दुर्जयं छंदोमयं वेदोक्तकर्मप्रधानं च अजया जीवस्याविद्यया तद्भावमर्
पिताः षोडशाः अराविकारा यस्मिन् यदेवंभूतं संसारचक्रात्मकं मनः तत्कोतितरेत्। भो अज त्वदन्यः त्वत्तः
पृथक्स्थितः त्वामभजन्नित्यर्थः २१ ॥ नृसिंहाय नमः ॥ ॥

ननु ममापि मायासंबंधात् कर्तृत्वाद् विशेषाच्च त्वत्तः को विशेषस्तत्राह सत्वमिति स्वधाम्ना चिच्छक्त्या नित्यं विजिता आत्मनो बुद्धेर्गुणा येन स हि त्वं [illegible] यतः कालः मायाप्रेरकः अतएव वशीकृता विसृज्यानां कार्याणां विसर्गाणां साधनानां च शक्तयो येन अतः इत्थं भूतं त्वं निष्पीड्यमानं मां उपकर्ष समीपं नय २२ ननु लोकपालानां भोगान् भुंक्ष्व पित्र्यं वा राज्यं गृहाण दास्यामि किमिति संसाराद् उद्विजसे तत्राह दृष्टा इति त्रिभिः श्रियः संपदः

सत्वं हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः चक्रे
जा२ विसृष्टमजयेश्वरषोडशारे निष्पीड्यमानमुपकर्षविभो प्रपन्नं २२ दृष्टा मया
दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति यान् जनोयं
येऽस्मत्पितुः कुपितहासविजृंभितभ्रूविस्फूर्जितेन लुलिताः सतु
ते निरस्तः २३ तस्मादमूस्तनुभृतामहमाशिषोज्ञ आ
युः श्रियं विभवमैंद्रियमाविरिंच्यात् नेच्छामि ते विलुलि
तानुरुविक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वं २४॥

विभव उद्भवः आयुरादयो दृष्टा इति काक्वा तुच्छमुक्तं तदेवाह येऽस्मत्पितुः कोपहासविजृंभितेन भ्रूभंगमात्रेण विध्वस्ताः स च त्वया निरस्तः २३ यस्मादेवं तस्मात् आशिषः भोगान् ज्ञः तत्परिपाकं विद्वान् अहं ऐंद्रियं इंद्रियभोग्यं तत्र स्त्रग्गो भोगमभिव्याप्य किमपि नेच्छामि ते कालात्मना उरुविक्रमेण विलुलितान् विध्वस्तान् अणिमादीनिति २४॥

किंच वर्त्तमानकालेपि न भोगा हीत्याह कुत्रेति क्व ति स्वर्गान्तदेवसुखं यासु ताः मृगतृष्णिकावन्मिथ्याभूता आ
शिषंच्च अशेषाणां रुजां रोगाणां विरोह उद्भवस्थानं क्व चेदं कलेवरं एवं चेत् सर्वोपि जनः किं न विरज्यते तत्राह
यद्यपि यद्यपीति एवं विद्वान् यो जनस्तथापि न निर्विद्यते विरक्तो न भवति कुतः कामरूपानलं मधुतुल्यैः सु
खलवैः दुःखसाध्यैरपि शमयन् कामाग्निशमनव्यग्रस्य निर्वेदस्यावकाशो नास्तीत्यर्थः अथ चिंत्यमिदं त्वया
याचितं नमितिभावः तर्हि त्वत्कृपयैव निर्विण्णोसि अनेहमपि मयि प्रवृत्तत्वात्कृपयैवेत्याशयेनाह क्वेति रजसो प्रभवो
जन्म यस्य सः सप्रमितं वाकुलविशेषणं तमोधिकं यस्मिन् तस्मिन्नसुराणां कुले हे ईश क्व च तवानुकंपा तामेवाह न ब्र

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः निर्विद्यते न तु जनो
यद्यपीति विद्वान् कामानलं मधुलवैः शमयन् दुरापैः २५ क्वाहं रजःप्रभव ईश तमोधिके
स्मिन् जातः सुरेतरकुले क्व तवानुकंपा न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेर्पितः शिरसि
पद्मकरः प्रसादः २६ नैषा परावरमतिर्भवतो ननु स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथापि
संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वं २७

ब्रह्मादीनां शिरसि यो नैवार्पितः स पद्महस्तः सकलसंतापहारः प्रसादः पुरुषार्थरूपो मे शिरस्यर्पितः इतियत् यतः प्रपा
नुकंप्य इति वा २६ न च त्वदीयं भक्तिवैचित्र्यमित्याह नैषेति एते ब्रह्मादय उत्तमाः अयमसुरो नीच इत्येषा परावरमतिः
जंतोः प्राकृतस्य यथा तथा भवतो नैव स्यात् अत्र हेतुः जगतः आत्मनः सुहृदः अतो हि सर्वत्र भवत्प्रसाद एकरूपश्च
किं न स्यात् तत्राह संसेवया तव प्रसादो भवति तत्र च सेवानुरूपं तत्तदिच्छानुसारेण धर्मादीनामुदयो भवति ए
वं सत्यपि वैषम्याभावे दृष्टांतः सुरतरुर्यथा सेवकस्यैव सेवकत्वानुसारेण फलं ददाति न चाविषमस्तद्वत् न परा
वरत्वं अत्र कारणमिति शेषः एतच्च त्वद्भक्तकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मानयेत्याशयेनाह २७

सृष्ट्वा तदनुप्रविष्टस्त्वं गुणैर्हेतुभूतैर्नानेवावसितः अवहितेन च अवसितः प्रतीतः तदुक्तं स्कन्धे योऽयं क्रमे निर्गुणोऽपि ह्य
ज्ञो व्यक्तो भगवान् प्रभुः ... मायायां गुणमाविश्य बाध्यबाधकतां गत इत्यादि ३० ननु पश्ये तज्जगद्दृश्यमेव ननु हि जगतो
वैषम्येन मम वैषम्यमपि किं न स्यादित्यत आह त्वं वा इति त्वमेवेदं सदसत्कार्यकारणात्मकं जगत् न तु त्वत्तः पृथक् भवांस्तु ततोऽन्यः
आद्यन्तयोः पृथगवस्थानात् यद्यस्मादिदमतो यमात्मायोऽयं पर इति या बुद्धिः सा अपार्था मायैव कारणकार्यभेदे दृष्टान्तेन
साधयति यद्यतः यस्य जन्म निधनं प्रकाशश्च यस्मिन्निधनमवस्थितिश्च तद्वै तदेव अष्टि बीजं कारणं तरुः कार्यं तयोर्मध्ये यथा व
सुकालमात्रत्वं अयमर्थः कालशब्देन नीलत्वादि साधारणगुणयोगात् पृथ्वी वसुशब्देन वसुमात्रं भूतत्वं तत्र तरोर्यथा
पृथ्वीमयबीजमात्रत्वं तस्य च यथा भूतत्वमात्रत्वं एवं सर्वमपि कार्यकारणात्मकमेवेति तथा च पारमर्षं सूत्रं तदनन्यत्व

सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ३० त्वं वा इदं सदसदीश
भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था । यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै
तदेव वसुकालवदष्टितर्वोः ३१ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषेऽत्मना निजसुखा
नुभवो निरीहः । योगेन मीलितदृगात्मनिपीतनिद्रस्तुर्ये स्थितो न तु तमो न गुणांश्च युंक्षे ३२

मारम्भणशब्दादिभ्यः इति अन्यत्र वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति तत्र तावदन्ते पृथगवस्थानं दर्शयति ३१
न्यस्येति इदं जगदात्मना आत्मनैव आत्मनि निविश्य स्वसुखमेवानुभवसि निष्क्रियः सन् प्रलयोदमध्ये शयनं करोषि तर्हि
किं जीववत्स्वैव ममाधितमोवतिरूपा निद्रास्ति नहि नहि योगादनुबहिर्व्यापाराभावसामान्यादुच्यते इत्याह योगेन निमी
लितदृशोऽपि येन आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन यतस्तुर्ये अवस्थात्रयातिरिक्ते स्वरूपे स्थितस्त्वं
न तु सुषुप्त्यात्मना तमो युक्त्येन योजयसि न पश्यसि न च जाग्रत्स्वप्नयोरिव गुणान् विषयान् स्वीकरोषीत्यर्थः ३२ राम:

इदानीं कारणत्वेनादावपि प्रथमवस्थानं दर्शयन् मध्यतत्त्वमेवेत्येतत्प्रपंचयति चतुर्भिः यत्त्वमशेषस्यैव तत इदं जगत् वपुः स्वरूपं तस्य पयतत्त्वमध्यतोपि कथंभूतस्य निजया शक्त्या संचोदिताः प्रकृतेर्धर्माः सत्वाद यो येन स्वरूपत्वे हेतुः अनंतशायिना कांहि रमतसमाधिर्यस्य तत्र नाभेः सकाशात् कार्णिकादिकं महा त्वं लोकपद्मं अभूत् कथंभूतं आत्मनि तत्त्ववगूढं स्वस्वकर्णिकातः सूक्ष्मात् वटबीजात् महावट इव ३३ तदे

तस्यैव ते वपुरिदं निजकालशक्त्या संचोदितप्रकृतिधर्मण आत्मगूढं अंभस्यनंतशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जं ३३ तत्संभवः कविरतोन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिंत्य नाविंददब्दशतमप्सु निमज्जमानो जातेंकुरे कथमहोपलभेत बीजं ३४ स त्वात्मयोनिरतिविस्मित आस्थितोब्जं कालेन तीव्रतपसा परिशुद्धभावः त्वामात्मनीश भुवि गंधमिवातिसूक्ष्मं भूतेंद्रियाशयमये विततं ददर्श ३५

वं कारणत्वेनानुगतः सन् मध्यत्वमेव वर्तनरूपं तदेव ... सत्वस्यत्र अनुभवेन स्फुटयितुं तस्य प्राक्तनीं अवस्थामाह तस्मिन्नब्जे संभवो यस्य कविर्ब्रह्मा अतः पद्मात् अन्यद् अपश्यन् बीजम् उपादानकारणभूतं त्वां स्वस्मिन् व्याप्तं सन्तमपि नाविदत् युक्तं चैतत् ३४ अहो अंकुरे जाते सति बीजं तदनुगतं कारणं ... कथं नाम पुमान् पश्येत् ३४ भवदुपासनया तु स्वस्मिन्नेव द्रष्टवानित्याह सत्विति परिशुद्धः आत्मयोनिः सन् तीव्रेण तपसा ध्यानेनानेन सन्मात्ररूपेणोपादानतया दर्शनमुक्तम् ३५

ईश्वरत्वेन च दृष्ट्वा कृतार्थोऽभवदित्याह एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनाङ्घ्रिशिरांसि समृद्धं
मायामयं मायाप्रधानं सत्ताप्रपञ्चेनोपलक्ष्यते संनिवेशः पादादिरचना यस्य ३६ तदा च भवांस्तस्यानुग्रहं कृ-
तवानित्याह तस्मिन्निति हयग्रीवमूर्तिं विभ्रत् रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणानुस-
मर्पितवान् तत्र हेतुः सत्त्वमिति ३८ एकः त्वमेवेत्यादिभिः षड्भिः श्लोकैः पद्मपालनरहस्यं तद्विपदे

एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यं मायामयं सदुपल
क्षितसंनिवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ३६ तस्मिन्भवान्हयशिरस्तनुवं च वि
भ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ हत्वानयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रि
यतमां तनुमामनन्ति ३७ इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान्विभावयसि हंसि ज
गत्प्रतीपान् धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वं ३८
नैतन्मनस्तव कथासु विकुण्ठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रं कामातुरं हर्षशोक
भयैषणार्त्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ३९ ॥

वधः स्यात् सतो पापिको न तु स्वतः इति तद्रूपसंहरति इत्थमिति विभावयसि पालयसि हंसि घातयसि कलौ तु तत्र करोषि य
तस्तदा त्वं छन्नो भवः यत्त्रिष्वपि युगेषु प्रादुर्भावात् स एवंभूतस्त्वं त्रियुग इति प्रसिद्धः तदेवं भगवतस्तत्त्वं त्वनिरूप्य
स्वस्य च तद्विचारायोग्यतां निवेदयन् प्रार्थयते नैतदिति त्रिभिः असाधु बहिर्मुखं तीव्रं दुर्द्धरं हर्षशोकभयैषणा
त्रयेण चार्त्तं दुःखितमपि त्वत्कथासु न संप्रीयते तस्मिन्नेवंभूते मनसि स्मृति कथं तव तत्त्वं विचारयामि ३९ ।

किंचजिह्वा अवितृप्तासतीभोऽच्युतमांमांएकतोमधुरादिरसलंपटं आकर्षति उदरंतुक्षुधासंतप्तंसद्यएवयत्कि
चिदाहारमात्रंप्रतिचपलादृक् क्वचरूपेः कर्मशक्तिः कर्मेन्द्रियाणिलुनंतिछेदयंति ४० नकेवलमहमेकएवैतांद
शामापन्नः किंतुमहाजनोप्येवमेवक्लिश्यति अतःसर्वंजनंपालयेतिप्रार्थयन्नाह एवमिति भवःसंसारःएवावैतर
णीमहानदीतस्यामन्योन्यतोयानिजन्मादीनितेभ्योऽतिभीतंस्वइतिपरेइतिचविग्रहेयस्मात्तथावैरंमैत्रंचयस्य
एवंभूतंजनंपश्यन्हेपारचर तस्याःपारेस्थितनित्यमुक्तहंतेति अहोकष्टमित्येवंमामनुकंप्यपीपृहि ।

जिह्वैकतोऽच्युतविकर्षतिमावितृप्ताशिश्नोऽन्यतस्त्वगुदरंश्रवणंकुतश्चित् घ्राणो
न्यतश्चपलदृक्क्वचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति ४० एवंस्वकर्म
पतितंभववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतं पश्यन्जनंस्वपरविग्रहवै
रमैत्रंहंतेतिपारचरपीपृहिमूढमद्य ४१ कोन्वत्रतेऽखिलगुरोभगवन्प्रयास
उत्तारणेऽस्यभवसंभवलोपहेतोः मूढेषुवैमहदनुग्रहआर्तबंधोकिंतेनतेप्रियजना
ननुसेवतांनः ४२॥

वैतरणीमुत्तार्यपालय ४१ ननुएकेनमयासर्वोजनःकथंतारणीयइतिचेत्तत्राह को
ऽन्विति अत्रसर्वजनोत्तारणेप्रयासःनकोपि कुतः अस्यविश्वस्यभवसंभवलोपानांउत्पत्तिस्थितिसंहाराणां
हेतोः ततोपिकिमेतत्दु[illegible]भवःउचितंचेत्तदीयाहमूढेष्विति तांश्चत्वदीयांश्चतारयिष्यामि इदंमं
दुराग्रहमाकृथाइतिचेत्तत्राह तवप्रियजनाभक्ताः ताननुसेवमानानांनोऽस्माकंतेनचतारणेनकिं को
प्रयासोऽस्यकाहेः कोन्वत्रतेऽखिलगुरोः भगवन्प्रयासःप्रह्लादस्त्वमुपदिश्यमिषोनराणांमीशोनसत्व

वत्स प्रह्रादस्त्वं तावत्तारयिष्यामि तावतैव कृतार्थः स्याः किमनेन निर्बन्धेनेत्यत आह नैवेति हे पर सर्वोत्तम त्वद्वीर्यगाय
नमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं नैव दुरत्ययवैतरण्या नैवोद्विजे किं तु विमूढान् शोचामि तानेवाह ततो म
हामृताद्विमुखं चेतो येषां प्रस्तुतमिन्द्रियार्थनिमित्तं यन्मायासुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः ॥४३॥ ननु त्वं तावन्मु
क्तिं गच्छ याताद्दृष्टं तत्त्वज्ञानं मुनयस्तु परेऽस्यन्तीति चेत्तत्राह प्रायेणेति न विमुक्तो विमुक्तिं नेच्छामि तत्र्यान्यकमपि मा।

नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः। शोचे ततो विमुख
चेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥४३॥ प्रायेण देव मुनयः स्वविमुक्ति
कामा मौनं चरन्ति विजने न परार्थनिष्ठाः। नैतान् विहाय कृपणान् विमुमुक्ष एको ना
न्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥४४॥ यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन क
रयोरिव दुःखदुःखम्। तृप्यन्ति नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत
धीरः ॥४५॥

यथमेव किमिति निर्विण्णोऽसीति चेदत आह त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥४४॥ न
न्वेते स्त्रीसंभोगादिना सुखिन एव कुतः कृपणास्तत्राह यदिति करयोः कण्डूयनेन संघर्षणेनैव दुःखमनु दुःखं य।
स्मिन् तर्हि दुःखत्वादेव ततो निर्विण्णमुच्येरन् तत्राह कृपणाः कामुका बहुदुःखभाजोऽपि गृहमेधिसुखेन
न तृप्यन्ति अलमिति न मन्यन्ते कण्डूतिवत्कामस्य दुःसहत्वात् ननु केचित्कण्डूतिमपि सहन्ते कामं च तत्राह त्वत्प्र
सादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत सहेत न तु सर्वे अत्रापि कण्डूतिवदिति दृष्टान्तः ॥४५॥

४१ ननु मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिः तत्राह मौनेति हे पुरुष अत्र यानि ये मौनादयो दश आप
वर्ग्याः अपवर्गहेतवः प्रसिद्धाः रहो विविक्तवासः ते तु प्रायशः अजितेन्द्रियाणां इन्द्रियभोगाय अर्थार्थं विक्री
णतां वार्ताः जीवनोपाया भवन्ति दाम्भिकानां वार्ता अपि भवन्ति वा न वा दम्भस्यानियतफलत्वात् ४६ त्वद्भक्तं
तु मत्किं विनासक्तो मैर्मौनादिभिर्न भवत्येवेत्याह रूपे इति त्रिभिः बीजाङ्कुराविव प्रवाहोपन्ने इमे सदसती कार्य
कारणे एव ते रूपे उपलक्षणम् ते वेदेन सृष्टे प्रकाशिते न तु नान्यत् स्वसमवेतं गोत्वादिकमिव देवतादेः दे २५

मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः प्रायः
परं पुरुष ते त्वजितेन्द्रियाणां वार्ता भवन्त्युत न वात्र तु दाम्भिकानां ४६ रूपे इमे
सदसती तव वेदसृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य युक्ताः समक्षमुभ
यत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ४७ ॥ ॥

वदतः अस्मीति यत् कुतः अरूपकस्य शक्ततरूपादिभिन्नस्य अतः युक्ताः संयताः एवं भक्तियोगेन प्रस
न्नमुभयत्र कार्यकारणे चानुगतं पश्यन्ति मथनेन दारुषु वह्निमिव नान्यतः स्यात् किं न स्यात् ज्ञानं न स्यात् ज्ञा
नमिति शेषः यद्वा ज्ञानप्रकारमेवाह एतदुभयमन्यतः प्रधानपरमाणवादेर्न स्यात् सर्वहेतुत्वादिकं ततः
अतस्त्वमेव कारणत्वात् सर्वत्रानुस्यूत इति ४७ ॥ ॥ ॥

तदेवाह त्वं वायुरिति हृदयं मनः चित् चित्तं अनुग्रहोऽहंकारः देवतावर्गो वा सगुणः स्थूलः विगुणः सूक्ष्मः मन-
सा वचसा च मनोवचोभ्यां तेन निरुक्तं प्रकाशितं किमपि त्वत्तोऽन्यन्नास्ति ४८ अभक्तास्तु स्वस्मिन्ननुगतमपि
त्वां न जानन्तीत्याह नैते गुणाभिमानिनो देवाः आद्यन्तवन्तः जडोपाधित्वात् अनाद्यन्तं निरुपाधिं त्वां न वि-
दन्ति हि यस्मात् सुधियो विद्वांसः एवं विचार्य शब्दात् अध्ययनादिव्यापारादुपरमन्ति त्वामेव समाधिनोपा-
सत इत्यर्थः तथा च श्रुतिः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे इति नानुध्यायेद्बहूञ्छब्दान्वा

वा१

त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च सर्वं त्वमेव सगु-
णो विगुणश्च भूमन्नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तं ४८ नैते गुणा न गुणिनो
महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः आद्यन्तवन्त उरुगाय विदन्ति हि त्वा-
मेवं विमृश्य सुधियो विरमन्ति शब्दात् ४९ तत्तेऽर्हत्तम नमः स्तुतिकर्मपूजाः क-
र्म स्मृतिश्चरणयोः श्रवणं कथायां संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः
परमहंसगतौ लभेत ५० ॥

वाचो विग्लापनं हि तदिति च स्मृतिश्च यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चेत्या ४९ उपसंहरति तदिति हे अर्हत्तम नमस्तुतिकर्मपूजाः प्र-
णामस्तुतिसर्वकर्मार्पणानि कर्म च परिचर्या चरणयोः स्मृतिश्च कथायां श्रवणं चेत्येवं षडङ्गया सम्यक्
सेवया विना विज्ञानपरमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत यस्मादेवं भक्तिं विना न मोक्षो न च
भक्तिः संसेवया विना अतः प्राक् प्रार्थितं दास्ययोगमेव देहीति प्रकरणार्थः ५० ॥ ॥

एतावंतवर्णिताः गुणाः यस्य यतमन्युः उपसंहृतकोपः ५१ कामान् पूरयतीति तथा पृहाण(?) रवार्थप्रवाहोस्मी
तीत्यर्थः ५२ अप्रीणतः अप्रीणयतः तप्तुं अपराधित्वेन शोचितुं ५३ प्रीणंति तोषयंति ५४ ए
कांतित्वात् निरुपाधिभक्तत्वात् ५५ इति सप्तमे नवमः ९ इत्थमेवमनुगृह्य भक्तमंतर्हिते हरौ प्र
संगाद्भिणारदकृतोनुग्रह ईर्यते १ तत्सर्वं वरदानादिजातं उत्पत्त्या स्वभावेनैवासक्तं मां तेषां का

नारद उवाच एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः प्रह्लादं प्रणतं प्रीतो यत
मन्युरभाषत ५२ श्रीनृसिंह उवाच प्रह्लाद भद्र भद्रं ते प्रीतोहं ते सुरोत्तम वरं वृणी
ष्वाभिमतं कामपूरोस्म्यहं नृणां ५३ मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे
दृष्ट्वा मां न पुनर्जंतुरात्मानं तप्तुमर्हति ५४ प्रीणंति ह्यथ मां धीराः सर्वभावेन साधवः
श्रेयस्कामाः महाभागाः सर्वासामाशिषां पतिं ५५ एवं प्रलोभ्यमानोपि वरैर्लोकप्र
लोभनैः एकांतित्वाद्भगवति नैच्छत्तानसुरोत्तमः ५५ इति श्रीभागवते महापुरा
णे सप्तमस्कंधे नवमोध्यायः ९ नारद उवाच भक्तियोगस्य तत्सर्वं अंतरायतयार्भकः
मन्यमानो हृषीकेशं स्मयमान उवाच ह १ प्रह्लाद उवाच मा मां प्रलोभयोत्पत्त्यासक्तं
का मेषु तैर्वरैः तत्संगभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः २ भृत्यलक्षणजिज्ञासुर्भक्तं का
मेष्वचोदयत् भवान्संसारबीजेषु हृदयग्रंथिषु प्रभुः नान्यथा तेखिलगुरो घटेत करु

मानां संगाद्भीतः २ ननु किमहं भक्तं प्रलोभयामि नहि किं तु वरं वृणीष्वेति वदंस्तत्राभिप्रायोस्त्येवेत्याह ३

दामः

कथमेवं भृत्यलक्षणं ज्ञानेत्यात् तत्राह यस्त्विति त्वत्तः ननु कामनयापि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसि
द्धः सत्यं सोपाधिकोसौ न तु स्वाभाविकः इत्याह स्वामिन्यात्मनः आशिषो ऽपेक्षमाणो नैव भृत्यः भृत्यहेतुकमात्म
नः स्वाम्यमिच्छन् यो भृत्याय ददाति स चैव स्वामी ४ आवयोस्तु स्वाभाविको भाव इत्याह अहं त्विति अनपाश्रयः
यो निरभिसंधिः अन्यथा कामाद्यभिसंधिना अर्थः प्रयोजनं नास्ति ५ ननु तथापि वरमोदारस्य मम संतोषा

यस्तु आशिष आशास्ते न स भृत्यः स वै वणिक् आशासानो न वै भृत्यः स्वामिन्याशि
ष आत्मनः न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ४ अहं त्वकामस्त्वद्भ
क्तस्त्वं च स्वाम्यनपाश्रयः नान्यथेहावयोरर्थो राजसेवकयोरिव ५ यदि रासीश
मे कामान् वरांस्त्वं वरदर्षभ कामानां हृद्यसंरोहं भवतस्तु वृणे वरं ६ इंद्रियाणि मनः
प्राणा आत्मा धर्मो धृतिर्मतिः ह्रीः श्रीः तेजः स्मृतिः सत्यं यस्य नश्यंति जन्मना ७ वि
मुंचति यदा कामान् मानवो मनसि स्थितान् तर्ह्येव पुंडरीकाक्ष भगवत्त्वाय कल्पते ८ ॥

थं किमपि [illegible] अत आह यदीति कामानां कुरागां असंरोहं अनुत्पत्तिं भवतः सकाशात् ६ ननु ।
कामोत्पत्तौ सत्यां को दोषस्तत्राह इंद्रियादीनि यस्य जन्मना नश्यंतीति आत्मा देहः ७ कामाभावे गुण
माह विमुंचतीति भगवत्त्वाय भगवत्समानैश्वर्याय यथाच श्रुतिः यदा सर्वे प्रमुच्यंते कामा येस्य हृदि स्थि
ताः अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ८ ॥ नृसिंहाय नमः ॥

१६ निर्दोषान्कामान्दातुमिच्छंतं प्रत्याख्याय पुनर्नमस्यति । ॐ नम इति ९ सत्यमेकांतभक्तस्त्वं तथापि मदाज्ञा करणीयेत्याह नैतीति नैकांतिनः कदाचिदपीहामुत्र मत्त आशिषो न वांछंत्येव तथाप्येतन्मन्वंतरमात्रं भोगान्भुंक्ष्व १० ननु तर्हि बंधः स्यादित्यत आह कथा इति द्वाभ्यां सर्वेषु भूतेषु संतमेकमीशं यज्ञाधिष्ठातारं मामात्मन्यावेश्य यजस्व तदर्थेनैव कर्मणा बंधः स्यात्तेनेत्याह योगेन मदर्पणेन कर्म हिन्वन् त्यजन् यजस्व ११ किं च भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा मुक्तबंधः सन् लोकानुग्रहार्थं कीर्तिं च वित्ती

ॐ नमो भगवते तुभ्यं पुरुषाय महात्मने । हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ९ नृसिंह उवाच नैकांतिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः । अथापि मन्वंतरमेतदत्र दैत्येश्वराणामनुभुंक्ष्व भोगान् १० कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि संतमेकं । सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ११ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा । कीर्तिं विशुद्धां सुरलोकगीतां वितायमामेष्यसि मुक्तबंधः १२ य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः । त्वां च मां च स्मरन् काले कर्मबंधाद्विमुच्यते १३

यं मां प्राप्स्यसि कुशलेन पुण्यात्तरणेन पापं हित्वेति विभीषामात्रं अन्यथा तस्य तत्रैव प्रवृत्तेः ननु तस्य प्राचीनं पापमस्ति तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति न्यायात् न तत्र कृतदुःकृते विधुनुत इति श्रुतेश्च न चेदं प्रारब्धं पापमिति शयं तस्य भोगेनैव क्षयात् कुशलेन हित्वेति वचनानुपपत्तेः न चासाव विद्वानिति वाच्यं भगवतैव कृतार्थत्वस्यानंतरं वक्ष्यमाणत्वात् अतार्थयोगेन कर्म हिन्वन् इतीदमपि लोकसंग्रहार्थं कर्म

न३

रामः

ईश्वरात्माकर्माधिकारः सन्स पितुर्निष्कृतिं प्रार्थयते त्रिभिः वरं वरणीयमेतद्‌परं वरणोत्वतः १४ विद्धोमर्षेणाशो
येनाशयो यस्य तेऽपांगेन संदृष्टः अतः पूत एव तथापि कृपणवत्सलो कार्यमिति येन प्रार्थयेत्यर्थः १६ यद्यपि क
श्यपो मरीचिर्ब्रह्मा चेति तन्त्रिनुसप्त पराः पूर्वजाः तथापि त्रिसप्तभिः सहेति प्राक्कल्पगतपित्राभिप्रायेणोक्तं १७ य
द्यस्मात्स्मृत्युक्तं मन्त्र आचारो येषां कीकटा यि देशास्तत्त्र्यावं पञ्चाप्यपूयंते शुद्धा भवंति १८ ननु त्वद्भक्तानाम

प्रह्लाद उवाच वरं वरय एतत्ते वरदेशान्महेश्वर यदनिंदत्पिता मे त्वामविद्वांस्तेज ऐश्वरं
१४ विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुं भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवा
न् १५ तस्मात्पिता मे पूयेत दुरंताद्दुस्तरादघात् पूतस्तेऽपांगसंदृष्टस्तदा कृपणवत्सल
१६ श्रीभगवानुवाच त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ यत्साधोस्य गृहे जातो भ
वान्वै कुलपावनः १७ यत्र यत्र च मद्भक्ताः प्रशांताः समदर्शिनः साधवः समुदाचारास्ते
पूयंतेपि कीकटाः १८ सर्वात्मना न हिंसंति भूतग्रामेषु किंचन उच्चावचेषु दैत्येंद्र मद्भावे
न गतस्पृहाः १९ भवंति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः भवान्मे खलु भक्तानां सर्वेषां
प्रतिरूपधृक् २० कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः मदंगस्पर्शनेनांग लोकान्
यास्यति सुप्रजाः २१

यद्धिंसेति तन्न चित्रं अहं तु तादृशो न भवामीति चेत्तत्राह सर्वात्मनेति द्वाभ्यां मद्भावेन मद्भक्त्या
विगतास्पृहा येषां १९ त्वामनुगताः ये केचित्पुरुषास्तेप्येवं लक्षणाः संतो मद्भक्ता भवंति अतो भवान्मे भक्तानां
सर्वेषां प्रतिरूपधृक् दृष्टांतभूत इत्यर्थः २० मदंगस्पर्शनेन सर्वशः पूतस्यापि पितुः पापशंकया वा

वेदवादिभिः ... २२ २३ २४ २५ मम सृष्टिभिर्मत्प्रजाभिः ... समस्तान्निग
मान्धर्मान्नित्यर्थः अहन् हतवान् ... २६ एवं दिष्ट्या समितः सम्यक्प्राप्तः २७ सर्वतः संत्रासात् गोप्तृ रा.

पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः २२
नारद उवाच प्रह्लादोपि तथा चक्रे पितुर्यत्सांपरायिकं यथाह भगवान्राजन्नभिषिक्तो द्विजो
त्तमैः २३ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिं स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः २४ दे
वदेवाखिलाध्यक्ष भूतभावन पूर्वज दिष्ट्या ते निहतः पापो लोकसंतापनोऽसुरः २५ योसौ लब्ध
वरो मत्तो न वध्यो मम सृष्टिभिः तपोयोगबलोन्नद्धः समस्तान्निगमानहन् २६ दिष्ट्यास्य तनयः
साधुर्महाभागवतोऽर्भकः त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना २७ एतद्वपुस्ते भगवन्ध्याय
तः प्रयतात्मनः सर्वतो गोप्तृ संत्रासान्मृत्योरपि जिघांसतः २८ श्रीनृसिंह उवाच मैवं वरोऽसुरा
णां ते प्रदेयः पद्मसंभव वरः क्रूरनिसर्गाणामहीनाममृतं यथा २९ श्रीनारद उवाच इत्युक्त्वा भग
वान्राजंस्ततश्चांतर्दधे हरिः अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ३० ततः संपूज्य शिर
सा ववंदे परमेष्ठिनं भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ३१ ततः काव्यादिभिः सार्द्धं मु
निभिः कमलासनः दैत्यानां दानवानां च प्रह्लादमकरोत्पतिं ३२ प्रतिनंद्य ततो देवाः प्रयुज्य पर
माशिषः स्वधामानि ययू राजन्ब्रह्माद्याः प्रतिपूजिताः ३३ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ
दितेः हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ३४ ॥

ब्रह्मोवाच

टीके २८ एवं वरस्त्वया न प्रदेयः क्रूरो निसर्गः स्वभावो येषां अम...
तेषां २९।३०।३१।३२।३३ शिशुपालदंतवक्त्रयोर्द्विषतोः ...

रामः

३५।३६। कारभजो इंतवक्रः हरौ सात्त्व... ...यतुः ३७ कृष्णनिंदादिना पूर्वकृतं च यत् एनः पापं तत् त्यक्त्वा तदात्मानः संतो जहुः तदात्मत्वमेव दृष्टांतः कीटः पेशस्कृतो ध्यानेन यथा तदात्मा भवतीति अभिदा भेददर्शनशून्यया हरेः सात्म्यं सारूप्यं ३८।३९।४० प्रह्रादचरितार्थमुपसंहरति एषेति चतुर्भिः अवतारः श्रीनृसिंहरूपः तस्य कथा आख्याति

पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः कुंभकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ३५ शयानौ युधि निर्भिन्नहृदयौ रामसायकैः तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ३६ ताविहाथ पुनर्जातौ शिशुपालकरूषजौ हरौ वैरानुबंधेन पश्यतस्ते समीयतुः ३७ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः जहुस्तेंते तदात्मानः कीटः पेशस्कृतो यथा ३८ यथा यथा भगवतो भक्त्या परमयाभिदा नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिंतया ययुः ३९ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान् दमघोषसुतादीनां हरेः सात्म्यमपि द्विषां ४० एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ४१ प्रह्रादस्यानुचरितं महाभागवतस्य च भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ४२ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनं परावरेषां स्थानानां कालेन व्यत्ययो महान् ४३ धर्मो भागवतानां च भगवान्येन गम्यते आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ४४ य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितं कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ४५

विशेषः ४२ प्रह्रादस्यानुचरितं चेत्याह समाम्नातमिति त्रिभिः तीर्थेनान्वयः अस्येति अनेनोक्तं सर्गस्थित्यप्ययेशस्य हरेर्याथात्म्यं तत्त्वं अनेनोक्तं हरेर्गुणकर्मानुवर्णनं च व्यत्ययः परावरेषां देवदैत्यानां यानि स्थानानि तेषां व्यत्ययः विपर्यासः ३४ आध्यात्मिकं आत्मानात्मविवेकादि एतच्छ्रवणादिफलमाह य एतदिति द्वाभ्यां।

नन्वन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान् सत्यं स तेऽश्वरोऽस्य तत्वं न जानाति इति कथमित्यपेक्षायां तस्या
प्यनेन साहाय्याद्देवासौ प्रभावो न केवलस्येति वक्तुमाख्यानमुपक्षिपति स एवेति ५० राजा युधिष्ठिर उवाच जग
दीशितुर्देवस्य कीर्तिः कस्मिन् कर्मणि मयो हतवान् ५१ अनेन श्रीकृष्णेनोपबृंहितैः संवर्द्धितैः ५२ हैमी चैरौ।

न

स एव भगवान् राजन् व्यतनोद्विहतं यशः पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ५० राजोवा
च कस्मिन् कर्मणि देवस्य मयोऽहञ्जगदीशितुः यथा चोपचिता कीर्तिः कृष्णेनानेन क
थ्यतां ५१ नारद उवाच निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः मायिनां परमाचा
र्यं मयं शरणमाययुः ५२ स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः दुर्लक्ष्यापायसं
योगा दुर्वितर्क्यपरिच्छदाः ५३ ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन्सेश्वरान्नृप स्मरन्तो ना
शयाञ्चक्रुः पूर्ववैरमलक्षिताः ५४ ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो त्राहि न
स्तावकान्देव विनष्टांस्त्रिपुरालयैः ५५ अथानुगृह्य भगवान्मा भैष्टेति सुरान्विभुः
शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुंचत ५६ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमंडलात् य
था मयूखसंदोहा नादृश्यंत पुरो यतः ५७ ॥

रु१

प्यायसी चेति तिस्रः पुरो निर्माय तेभ्यो दत्तवानिति शेषः।
दुर्लक्ष्यौ अपायसंयोगौ आगमनागमने यासां दुर्वितर्क्याः परिच्छदाः यासु ५३ असुराणां सेनान्यः सेनापतयः
पूर्ववैरं स्मरंतः ५४।५५ अस्त्रं अभिमन्त्रितशरं पुरेषु व्यमुंचत ५६ ततः शरान् सूर्यमंडलान् मयूखसंदोहा
रश्मिसमूहा इव पतः येभ्यः ५७ ॥ ॥ ॥

कूपरसे स्वयं निर्मिताः कृपामृतो वज्रसाराः वज्रवद्दृढांगाः महौजसो महाबलाः मेघदलनाः मेघभेदिनः विद्युद्रूपाः वह्नय इव ५९।६० कालेमध्याह्ने ६१।६२ आत्मनो वा अन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितं अपोहि

तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः तानानीय महायोगी मयः कूपरसेक्षिपत् ५८ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ५९ विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजं तदायं भगवान् विष्णुस्तत्रोपायमकल्पयत् ६० वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ६१ तेसुरा ह्यपि पश्यंतो न न्यषेधन् विमोहिताः तद्विज्ञाय महायोगी रसपालानिदं जगौ ६२ स्वयं विशोकः शोकार्तान् स्मरन्दैवगतिं च तां देवोसुरो नरोन्यो वा नेश्वरोस्तीह कश्चन ६३ आत्मनोन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ६४ अथासौ शक्तिभिः स्वाभिः शंभोः प्राधानिकं व्यधात् धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ६५ रथं सूतं ध्वजं वाहान् धनुर्वर्मशरादि यत् सन्नद्धो रथमास्थाय शरं धनुरुपाददे ६६ शरं धनुषि संधाय मुहूर्तेभिजितीश्वरः ददाह तेन दुर्भेद्यान् हरोथ त्रिपुरान्नृप ६७ दिवि दुंदुभयो नेदुर्विमानशतसंकुलाः देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ६८ अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरोगणाः एवं दग्ध्वा पुराणि त्रीणि भगवान् त्रिपुरहा नृप ६९

तुं परिहर्तुं इह कश्चिदपीश्वरः समर्थो नास्ति ६३ अथासौ प्राधानिकमः प्रधानसंग्रामसाधनं अभिजिति मध्याह्ने ६६ वि

मानशतसंकीर्णानि येषां ते देवादयः ६८।६९ ॥ ० ॥

रामः

आदित आरभ्य उक्तं धर्म्यं निगमयति एवं विधानीति नृलोकं नराकारमात्मनो विडंबमानस्यानुकुर्वतः ७० इति सप्त।
मे दशमः १० एकादशेन नृणां धर्माः साधारणेन वर्णिनां विशेषाश्च वर्णानां मुख्यामुख्याश्च योषितां १ तदेवं द।
र्शितज्ञानभक्तियोगानुवृत्तिरिति अथ पंचभिरध्यायैः कर्मयोगोनुवर्ण्यते २ दैत्यपतेः प्रह्लादस्य साधूनां सभासु सभा।
जितं सत्कृतं समीहितं चरितं श्रुत्वा पुनर्नारदं पप्रच्छ कथंभूतः तस्येहितं महत्तमानामग्रण्यः मुख्यस्य तत्र हेतुः उरुक्रम

ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत एवं विधान्यस्य हरेः स्वमायया विडंबमानस्य
नृलोकमात्मनः वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किं ७० इ
ति श्रीभागवते महापुराणे सप्तमस्कंधे त्रिपुरविजयो नाम दशमोऽध्यायः १० श्रीशुक उवा
च श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः युधिष्ठिरो दैत्यपतेर्मु
दा युतः पप्रच्छ भूयस्तनयं स्वयंभुवः १ युधिष्ठिर उवाच भगवन्श्रोतुमिच्छामि नृणां
धर्मं सनातनं वर्णाश्रमाचारयुतं यत्पुमान्विंदते परं २ भवान्प्रजापतेः साक्षादात्मजः
परमेष्ठिनः सुतानां संमतो ब्रह्मंस्तपोयोगसमाधिभिः ३ नारायणपरा विप्रा धर्मं गुह्यं
परं विदुः करुणाः साधवः शांतास्त्वद्विधा न तथापरे ४ श्रीनारद उवाच नत्वा भग
वतेऽजाय लोकानां धर्महेतवे वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतं ५ योऽवतीर्या
त्मनोंऽशेन दाक्षायण्यां तु धर्मतः लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ६॥

आत्मा मनो यस्य १ श्रवणेच्छायां हेतुः यद्यतो धर्मात् परं ज्ञानं भक्तिं च विंदते २ ॥३॥ ननु स्मृतिकारैर्धर्म उक्त एव तत्र
देवाह। नारायणपरा इति ४ अजाय श्रीनारायणाय तस्य मुखाच्छ्रुतं ५ तन्मुखाद्रात्मनः श्रवणं संभावयन्विशिनष्टि

प्रथमं तावद्धर्मे प्रमाणमाह धर्मस्य मूलं प्रमाणं स्मृतं तच्च स्मृतिः तद्विदां वेदविदां च येन चात्मा मनः प्रसीदति तुष्यति तथा च याज्ञवल्क्यः श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतमिति मनुश्च वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदां आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ७ तत्र तावत्सर्वमात्रसाधारणधर्ममाह सत्यमिति त्रिभिः तप एकादश्युपवासादिः ईक्षा युक्तायुक्तविवेकः शमो मनसः संयमः

धर्ममूलं हि भगवान्सर्ववेदमयो हरिः स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ७ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवं ८ संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनं ९ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव १० श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणं ११ नृणामयं परो धर्मः सर्वेषां समुदाहृतः त्रिंशल्लक्षणवान्राजन्सर्वात्मा येन तुष्यति १२ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यं इज्याध्ययनदानानि विहितानि द्विजन्मनां १३ ॥

लोवाह्येन्द्रियाणां संयमः दानं स्वाध्यायो जपो विनयादिः ८

संतोषो दैववलब्धेनालंबुद्धिः समदृशां महतां सेवा ग्राम्येहोपरमः प्रवृत्तिकर्मभ्यो निवृत्तिः विपर्ययेहेक्षा निष्फलक्रियाणामीक्षा मौनं वृथालापनिवृत्तिः आत्मविमर्शनं देहादिव्यतिरिक्तानुसंधानं ९ आत्मा तेषु देवते च बुद्धिः १० अस्य श्रीकृष्णस्य श्रवणादयो नव इज्या पूजा ११ एवं त्रिंशल्लक्षणावान् १२ इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह संस्कारा गर्भाधानादयो यस्मिन्नविच्छिन्नाः स द्विजः न हि शूद्रस्यापि संस्कारविच्छेदे सति द्विजत्वं स्यात् तत्राह अजो ब्रह्मा यमेवंभूतं संस्कारयुक्तं जगाद स द्विजः शूद्रस्तु न मन्त्रवत्संस्कारयुक्तं जगाद न चोपनयनवान् अतो नासौ द्विजः तथा च स्मृतिः विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा न केनाचित्समसृजच्छूद्रसा तं प्रजापतिरिति श्रुति

श्रवणात् उपनयनस्य तु सर्वथा निषेधात्ततस्तु स

अब्राह्मणश्च पितृः पाठान्तरे वेदस्य दाहक इति गर्भाधानादयः १३

[illegible] गर्भाधानादि [illegible] संस्कारा [illegible]

राम:।

त्रैवर्णिकानामवश्यकान् धर्मानाह जन्मेति जन्मना विशुद्धेन कुलेन कर्मणा च आचारेण च अवदातानां शुद्धानां दुःकुलानां
दुराचाराणां चैनानि विहितानि स्युरित्यर्थः ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च शूद्रस्य वर्णधर्मा नाश्रमभेदकृता विशेषाभा
वात् १४ ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान् धर्मानाह विप्रस्येति सार्द्धैः सप्तभिः विप्रस्य षट्कर्माणि विहितानि स्युरनुषं
गः तत्राध्यापनं याजनं प्रतिग्रहश्च जीविका यदाह मनुः चतुर्णामनुकर्माणामस्य त्रीणि कर्माणि जीविका याजनाध्यापने चैव।
विशुद्धाच्च प्रतिग्रह इति अन्यस्य क्षत्रियस्य अप्रतिग्रहः। प्रतिग्रहातिरिक्ता याजनमध्यापनं चाय यद्यनुज्ञा नास्ति वृत्तिर्यान्न

जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः १४ विप्रस्याध्यापनादीनि षडन्यस्याप्रति
ग्रहः राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः १५ वैश्यस्तु वार्तावृत्तिस्तु नित्यं ब्रह्म
कुलानुगः शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् १६ वार्ता विचित्रा शालीनया
यावरशिलोञ्छनं विप्रवृत्तिश्चतुर्द्धेयं श्रेयसी चोत्तरोत्तरा १७ ॥

रमेव क्षत्रे राजन्यमिति अप्रतिग्रहपते चाध्यवनीये केकमपि नमतीनां क्षत्रियाणामुपदेशत्वादि प्रजापालने धिकृतस्य वृत्ति।
यस्य वृत्त्यन्तरमाह राज्ञ इति अविप्राद्वा इति आदिशब्देन दण्डशुल्कादि १५ वार्ता कृषिवाणिज्यादि लक्षणा वृत्तिर्यस्य सः शूद्रस्य।
द्विजशुश्रूषा विहिता स्वामिनो द्विजस्य तु शुश्रूषा वृत्तिश्च भवेत् १६ विप्रस्य मुख्यानुकल्पभेदेन वृत्तीनाह
वार्ता विचित्रा कृष्यादिरूपा शालीनं धान्यवृद्धिविनेव शत्रुमयाचितं यायावरं प्रत्यहं धान्ययाचा शिलं सालि॥
क्षेत्राद्विशस्या मृत्पक्व कणशो पानं। उञ्छनं आपणादि पतितं कणोपादानं शिलोञ्छने इयमेकीकृत॥
त्यचतुर्द्धा वृत्तिः श्रेयसी उत्तमा १७

वृत्तिषु व्यवस्थां दर्शयन्नापद्वृत्तीराह जघन्यो नीचः उत्तमां अध्यापनादिरूपां ऋते राजन्यं क्षत्रियस्तु प्रतिग्रहादन्यां भजेत ॥१७॥ चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह ऋतामृताभ्यामिति १८ श्लोकं श्लोकांतरेण व्याचष्टे ऋतमिति १९।२० तयोस्तद्वर्जने हेतुमाह सर्ववेदमय इति २१ वर्णानामभिव्यंजकरूपान् धर्मानाह शम इति चतुर्भिः अच्युतात्मत्वं विष्णुपरत्वं २२ शौर्यं युद्धोत्साहः वीर्यं प्रभावः तेजः प्रागल्भ्यं २३।२४ अमंत्रयज्ञः नमस्का

जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः १७ ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन १८ ऋतमुंछशिलं प्रोक्तममृतं यदयाचितं १९ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतं सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनं २० वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सितां सर्ववेदमयो विप्रः सर्वदेवमयो नृपः २१ शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवं ज्ञानं दयाच्युतात्मत्वं सत्यं च ब्रह्मलक्षणं २२ शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणं २३ देवगुर्वच्युते भक्तिस्त्रिवर्गपरितोषणं आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणं २४ शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया अमंत्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणं २५ स्त्रीणां च पतिदेवानां तच्छुश्रूषानुकूलता तद्बंधुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणं संमार्जनोपलेपाभ्यां गृहमंडलवर्तनैः स्वयं च मंडिता नित्यं परिमृष्टपरिच्छदा २६ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिं २७॥

परलोकस्ना नं५

रेणैव पंचयज्ञानुष्ठानं तथा च याज्ञवल्क्यः नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेत्माययेति २५ स्त्रीधर्मानाह स्त्रीणामिति पंचभिः पतिरेव देवो उपास्यो यासां ताः तस्य पत्युः शुश्रूषा तदनुकूलता च यस्य यद्व्रतं नियमस्तस्य धारणमेव तद्व्रतं पतिव्रतानां लक्षणं धर्मश्च २६ किंच संमार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदाः गृहोपस्कराणि यथा ता दृढतामादीनि यथा २७

उत्कृष्टायां स्त्रियां नीचाद्वीर्याज्जाता संततिः सा प्रतिलोमजा नीचायां स्त्रियामुत्कृष्टपुरुषाज्जाता संततिः सानुलोमजा २७

किंच। संतुष्टापि पालनेन तावन्मात्रभोगे ऽप्यलोलुपा दक्षा अनलसा प्रिया सत्या च वाग्यस्याः सर्वत्राप्यप्रमत्ता अवहिता अपतितं महापातकशून्यं पत्युः पातित्ये त्वाह भरद्वाजः संप्रतीतो हि महापातकदूषित इति तत्परा सती भजेत श्रीर्हरिमिव हर्यात्मना पत्या सह प्रतिलोमजानुलोमजानां वृत्तिमाह वृत्तिरिति तत्कुलकृता कुलपरंपराप्राप्ता परंपराप्राप्तमपि चौर्यहिंसादिकं निषेधति अचौराणामपापानां चेति नत्र प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह

संतुष्टालोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् २८
या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते २९ वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत् अचौराणामपापानामन्त्यजान्तेवसायिनां ३० प्रायः स्वभावविहितो नृणां धर्मो युगे युगे वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ३१ वृत्त्या स्वभावकृतया वर्त्तमानः स्वकर्मकृत् हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ३२ ॥

अन्त्यजेति रजकश्चर्मकारश्च नटो बुरुड एव च कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः अन्तेवसायिनस्तु चाण्डालपुल्कसमातंगादयः तेषां परंपराप्राप्तैव वस्त्रनिर्णेजनादिरंगकारवृत्तिरित्यर्थः ३० श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एव श्रेयानित्याह प्राय इति स्वभावेन सत्त्वादिप्रकृत्या विहितो धर्मः शर्मकृत् सुखहेतुः स्मृतः केवैर्देदवदृग्भिश्च ऋषिभिः भगवता चोक्तं श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितादिति ३१ ननु स्वाभाविकस्य कर्मणो बन्धहेतुत्वात्कथं सुखहेतुत्वं तत्राह वृत्त्येति ३२

ननु काम्यानि कर्माणि कुर्वतस्तत्फलोपभोगपरस्य कथं नैर्गुण्यं स्यात् तदुक्तं प्रह्लादेन जोपसृष्टोह्यंव
हृमन्यमानः कथं विरज्येत दुरंतमोहः इत्यादि तत्राधिकारभेदेन व्यवस्थां सदृष्टांतमाह उप्यमानमिति द्वाभ्यां ॥
पुनः सूत्यै सस्योत्पत्तये ३३ कामाश्चाशेरते वासनारूपेण यस्मिन् तत् उत्कटवासनो विशिष्टस्य सहसैव काम
त्यागासंभवाद्वैराग्यं नियमेन बहुशः कामान् भुंजानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेन म

उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीजतामियात् । न कल्पते पुनः सूत्यै उप्तं बीजं विनश्यति
३३ एवं कामाशयं चित्तं कामानामतिसेवया । विरज्येत यथा राजन्नाग्निवत्कामबिंदुभिः
३४ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यंजकं । यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ३५
इति श्रीभागवते महापुराणे सप्तमस्कंधे एकादशोऽध्यायः ११ ॥ ११ ॥ ११ ॥ श्री श्री ॥

ययातिसौभरिप्रमुखानामिव शनैर्वैराग्यो भवति यथा सबीजं क्षेत्रं शनैर्निर्बीजं भवति यथा च प्रज्वलितो
ऽग्निर्नैव घृतबिंदुभिः शाम्यति महता च घृतपूरेण शाम्यत्येव तद्वत् प्रल्हादकृतस्तु कौमार एव निवृत्त्यु
पदेशो मंदवासनानामधिकारेण तदुक्तं तत्रैव बालानदूषितधियोऽह्यरामे विप्रेति अतः सर्वमनव
द्यं ३४ शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यः न जातिमात्रादित्याह यस्येति यद्यस्मिन् अन्यत्र वर्णांत
रेपि दृश्येत तद्वर्णांतरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत् न तु जातिनिमित्तेनेत्यर्थः इति श्रीभा
गवते महापुराणे सप्तमे एकादशोऽध्यायः ११ श्रीकृष्णाय नमः



रामः

·ननु मिथ्यात्वादिति कथमलन्त्वाच्च स्वयं त्यक्तप्रायं स्यादिति जह्यादिति कोपमति निर्बन्धस्तत्राह कल्पयित्वेति आत्म
नास्वरूपस्याज्ञानात्कारणाद्देहादिद्वैताद्याभासमात्रं कल्पयित्वा निष्क्रियस्य यावदसौ जीव ईश्वरः स्वतंत्रो न भव
ति तावद्द्वैतं अहं पुमान् इयं स्त्रीत्यादि भेदो न विरमेत् ततः किमत आह ततो हि द्वैताद्विपर्ययः गुणाध्यासेन
भोग्यताबुद्धिः अतो जह्यादेवेत्यर्थः १ एतत्सर्वं स्त्रीलक्ष्यमुक्तं गृहस्थस्य विशेषमाह गुरुवृत्तिरिति ११॥
अंजनादिना मामिषांतामांउद्वैकं अंजनं शरीरस्य अभ्यंजनं शिरसि च अवलेखं चाचित्रकर्म स्त्रीणां॥

कल्पयित्वात्मना यावदाभासमिदमीश्वरः द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः १ एतत्सर्वं गृहस्थस्य
समाम्नातं यतेरपि गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ११ अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषं म
धु स्रग्गंधलेपालंकारांस्त्यजेयुर्ये धृतव्रताः १२ उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च त्रयीं सांगो
पनिषदं यावदर्थं यथाबलं १३ दत्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः गृहं वनं वा प्रविशेत्प्रव्रजे
त्तत्र वा वसेत् १४ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजं भूतैः स्वधामभिः पश्येदप्रविष्टं प्रवि

कुर्यादौ लेखनं वा तन्निरीक्षणं चात्र भृंगादिस्वरूपतो निषिध्यते पूर्ववत्तु कथंचिदापदि शास्त्रमपि स्त्रीकल्पकं
निषिद्धमिति भेदः १२ अंगैः शिक्षादिभिरुपनिषद्भिश्च सहितां वेदत्रयीमधीत्य अवबुध्य च तदर्थं च बुद्ध्वा॥
चार्ययावदर्थं स्वस्वाधिकारानुसारेण १३ यदीश्वरः शक्तः तर्हि गुरोः काममपेक्षितं वरं दत्वा यथाधिकारं
गृहस्थाद्याश्रमं स्वीकुर्यात् तत्रैव वसेत् नैष्ठिकः स्यादित्यर्थः १४ स्वधामभिः स्वाश्रयभूतैर्जीवैः सह तं
निर्यन्तव्या १५ श्रीः श्रीः श्रीः श्रीः श्रीः श्रीः लक्ष्मीः लक्ष्मीः लक्ष्म्यै नमो नमः श्रीः ००

चरन्नेवमाचरन् विदितं विज्ञानं विज्ञेयं येन सः १५ ऋषिलोकं महर्लोकं १६ अकृष्टं अकृष्टपच्यं अकालतः पाकं॥
कालात्पूर्वमेव निष्पन्नमित्यर्थः अर्कपक्वं फलाद्याहरेत् अश्नीयात् १७ वन्यैर्नीवारादिभिः काले चोदितान् नि
त्यान् पुराणं पूर्वसंचितं १८ हिमादीन् सहतः शीलितया १९ केशादीन् मलादींश्चाप्रक्षालनेन धारयन् कमंडल्वा।
दींश्च दधत् २० कृच्छ्रतस्तपः क्लेशाद्यथा बुद्धिर्न नश्येत्तथा चरेत् २१ द्वादशाब्दाद्यन्यतममवधिं स्वानुष्ठाने श

एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही चरन्विदितविज्ञानः परं ब्रह्माधिगच्छति १५
वानप्रस्थस्य वक्ष्यामि नियमान्मुनिसम्मतान् यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्ज
सा १६ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः अग्निपक्वमथामं वा अर्कपक्वमुताहरे
त् १७ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् लब्धे नवे नवेऽन्नाद्ये पुराणं तु परित्यजे
त् १८ अग्न्यर्थमेव शरणमुटजं वाद्रिकंदरं श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयं
१९ केशरोमनखश्मश्रुमलानि जटिलो दधत् कमंडल्वजिने दंडवल्कलाग्निपरिच्छ
दान् २० चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः
२१ यदाकल्पः स्वक्रियायां व्याधिभिर्जरयाथवा आन्वीक्षिक्यां वा विद्यायां कुर्यादनशना
दिकं २२ आत्मन्यग्नीन्समारोप्य संन्यस्याहंममात्मतां कारणेषु न्यसेत्सम्यक् संघातं तु य
थार्हतः २३॥

ते हि वन एव वसेत्। यदि तु ज्ञानाभ्यासयोग्यस्तर्हि संन्यसेत् तदा व्यापेवक्ष्यति। तदुपरि हितस्य तु
यत्कर्तव्यं तदाह। यदा अकल्पः असमर्थः आन्वीक्षिक्यां ज्ञानाभ्यासे अनशनादिकं विध्युक्तः २२ पूर्वोक्तं स्पष्टमाह
आत्मनीत्यादि यावत्समाप्तिः यथार्हतः यथायोग्यं कारणेषु आकाशादिषु संघातं देहं अग्नौ सन्न्यस्य विलापयेत् २३

तद्देव विभज्य दर्शयति खे आकाशे खानि छिद्राणि आत्मवान् धीमान् शेषं अधिष्ठितं सात्विकदिनांश २५ एवं स्थू
लशरीरस्य लयमुक्त्वा लिंगशरीरस्य तथाध्यात्मादित्रयस्य लयमाह वाचमित्यादिना अत्र यद्यपि पायूपस्थयोर्द्वन्द्वं लयस्य
युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहंकारादिषु लयो वाच्यः तथापीह तेषां लयभावनेयमाहितोपास्य
प्रतिपत्तिपरेति। यथा कथंचित् लयेप्यध्यात्मदेवतानां प्रवर्त्तकत्वेन आध्यात्मादिद्वियत्तादुपयोर्देवतासु लयकथ्यते।
वक्तव्यसहितां वाचमग्नौ न्यसेत् एवं सर्वत्र यदानिया दीव यास्यविष्णौ २६ सनादेन शब्देन सह अध्यात्मानं वायौ

खे खानि वायौ निश्वासांस्तेजस्यूष्माणमात्मवान् अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं य
थोद्भवं २५ वाचमग्नौ सवक्तव्यामिन्द्रे शिल्पं करावपि पदानि गत्या वयसि रत्योपस्थं प्र
जापतौ २६ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत् दिक्षु श्रोत्रं सनादेन स्पर्शम
ध्यात्मनि त्वचं २७ रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् अप्सु प्रचेतसा जिह्वां
घ्रेयैर्घ्राणं क्षितौ न्यसेत् २८ मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे कर्माण्यध्यात्मना रुद्रे
यदहं ममताक्रिया २९ सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ ३०

आध्यात्मविद्विति पाठे वायाविति ज्ञातव्यं २७ ज्योतिषि आदित्ये रसगंधयोस्त्विंद्रियाकर्षत्वेन आध्यात्म्यविवक्षा
यां देवतासहितेंद्रियस्य विषयेण लयमाह प्रचेतसा सह जिह्वां रसेन अप्सु रसरूपासु घ्राणं शब्देनाश्विनोरप्युपल
क्षणं अश्विभ्यां सह घ्राणं ~~[illegible]~~ घ्रेयैर्गंधैः सह पतत्क्षितावाहिताविरोध्यैः २८ परे कवौ ब्रह्मणि।
अध्यात्मनाहंकारेण अध्यात्मनात्मनामीति पाठे कर्माण्यकारं चेष्टयिष्यैः। कथंभूते रुद्रे यद्यस्मादहंममतापूर्वि
का क्रिया भवति २९ तस्मिन् सत्त्वे चेतनत्वयागुणैः गुणकार्यैः प्राणप्रियादिदैवैः सह यद्वा सत्त्वादिभिः गुणैः दे
ह्यतैः वैकारिकं भोक्तृत्वादिविकारवंतं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि॥ ३० ॥

ननुविकारवतःकथंपरत्वंस्यात्तुविकारहेतुनांसर्वोपाधीनांलयद्वारेणोत्सर्गमाह। अप्स्विति-अप्स्तेज्योतिःतच्चनभःकू
टस्थेअहंतत्वेतच्चकूटस्थमहतितच्चमहदव्यक्तेप्रधानेतच्चाव्यक्तं अक्षरेपरमात्मनि ३१ इतिसर्वोपाधिलयद्वारेणा
अविशेषितंचिन्मात्रमात्मानंचेत्यक्षरत्वेनतया ज्ञात्वाअद्वयःसन्विरमेत् दग्धकाष्ठोपयोनेरनलः ३२ इतिसप्तमेद्वा
दश १२ त्रयोदशेयतेर्धर्मःसाधकस्योच्यतेमहान् अवधूतेतिहासेनसिद्धावस्थाचवर्ण्यते १ एवंध्यात्वाकल्मान

अप्स्वितिमयोज्योतिरद्दोवायौनभस्यमुं कूटस्थेतच्चमहतितदव्यक्तेऽक्षरेचतत् ३१ इत्यक्षर
तयात्मानंचिन्मात्रमवशेषितं ज्ञात्वाऽद्वयोऽथविरमेद्दग्धयोनिरिवानलः ३२ इतिश्रीभागव
तेमहापुराणेसप्तमस्कंधेद्वादशोऽध्यायः १२ श्रीनारदउवाच कल्पस्त्वेवंपरिव्रज्यदेहमात्रा
वशेषितः ग्रामैकरात्रविधिनानिरपेक्षश्चरेन्महीं १ बिभृयाद्यद्यसौवासःकौपीनाच्छाद
नंपरं त्यक्तंनलिंगदंडादेरन्यत्किंचिदनापदि २ एकएवचरेद्भिक्षुरात्मारामोऽनपाश्र
यः सर्वभूतसुहृच्छांतोनारायणपरायणः ३ पश्येदात्मन्यदोविश्वंपरेसदसतोऽव्यये
आत्मानंचपरंब्रह्मसर्वत्रसदसन्मये ४ ॥

शनादिकंकुर्यात् आन्वीक्षिकींकल्पस्त्वेवंध्यात्वापरिव्रज्येतिसंबंधः। किंपरत्रम्याज्यं देहव्यतिरिक्तंसर्वमित्याह। दे
हमात्रेति। तस्यधर्मानाह। ग्रामैकरात्रेति। नवभिः १ कौपीनंगुह्यस्थानतदाकौपीनमाच्छाद्यतेयावत्तावन्मात्रंपरंकेवलंत्य
न्यदितिवात्यक्तंप्रेषोच्चारणात्पूर्वमेव २।३ सदसतःपरेकार्यकारणाव्यतिरिक्ते॥४॥ रामः रामः रामः

नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः नहि बद्धमुक्तयोरैक्यं संभवति। तत्राह सुप्तेति सुषुप्तेर्हि तमसाच्छन्नं जाग्रत्स्वप्नयोस्तु विहितं प्रकाशते संधौ तु न तमो नापि विक्षेपः अतस्तदा आत्मदृक् आत्मानं तद्दीक्षुः स्थितः सन् आत्मनो गतिं तत्त्वं पश्यन् अत एव बंधं मोक्षं च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वं च पश्येदित्यन्वयः। तदुक्तं योगग्रंथे। निद्रादौ जागरस्यांते यो भाव उपपद्यते तं भावं भावयन्नित्यं मुच्यते नेतरो यतिरिति ५ अस्य देहस्य प्रभवाप्ययरूप यस्मात्तं का

सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् पश्यन्बंधं च मोक्षं च मायामात्रं न वस्तुतः ५
नाभिनंदेद्ध्रुवं मृत्युमध्रुवं वास्य जीवितं कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययं ६ नासच्छा
स्त्रेषु सज्जेत नोपजीवेत जीविकां वादवादांस्त्यजेत्तर्कान्पक्षं कंचन नाश्रयेत् ७ न शि
ष्याननुबध्नीत ग्रंथान्नैवाभ्यसेद्बहून् न व्याख्यामुपयुंजीत नारंभानारभेत्क्वचित् ८ न
यतेराश्रमः प्रायो धर्महेतुर्महात्मनः शांतस्य समचित्तस्य बिभृयादुत वा त्यजेत् ९ ॥

लं ६ असच्छास्त्रेषु अनात्मपरेषु। जीविकां नक्षत्रविद्यादिवृत्तिं वादवादान् जल्पवितंडादिनिष्ठान् कंचन पक्षमपि च हेतुनिर्बंधेन संश्रयेत् ७ नानुबध्नीत प्रलोभमानादिना बलान्नोपादयेत आरंभान् मठादिव्यापारान् ८ परमहंसस्य विशेषमाह। न यतेराश्रमो धर्मार्थः कथंभूतस्य महात्मनः तस्य लक्षणं शांतस्येत्यादि प्रायः स्यात्पायं भावः ज्ञानोत्पत्तिपर्यंतं बहूदकादि लिंगमाश्रितस्य सत्त्वशुद्ध्यर्थं। यमनियमाभ्यासार्थं चरन्नेव ज्ञानोत्पत्तेर्यतेत। उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति यमाश्च स्वतः एव स्युः अतस्तदा लिंगादिभिः प्रयोजनाभावात् लोकसंग्रहार्थं धारयेत्त्यजेद्वा ९॥

तस्यैवज्ञानदातृत्वाभावेयोगभ्रंशापरिहारार्थमाह नचेति अव्यक्तलिंगं यस्य व्यक्तोऽर्थः प्रयोजनं आत्मानुसंधानं यस्य सः।
मनीष्यप्युन्मत्तवद्बालवच्च कविरपि मूकवदात्मानं नृणां दृष्ट्यादर्शयेत् येन यथान्ये नाद्रियेरन् तथावर्तेरन्
तथावर्तेरन् स्वदृष्ट्यालिंगादेवा[illegible]भावेनेत्यर्थः १० परमहंसधर्ममेवेतिहासेन स्फुटयति अत्रापीतियाव
दध्यायसमाप्तिः आजगरस्यव्रतम[illegible] ११ [illegible]भयस्य मृ १२ सह्याद्रेस्तटे रजोभिर्धूसरैस्तनुदेशैरेव हावयवैर्नि

अव्यक्तलिंगो व्यक्तार्थो मनीष्युन्म[illegible]बालवत् कविर्मूकवदात्मानं स्वदृष्ट्यादर्शयेन्नृणां १०
अत्राप्युदाहरंतीममितिहासं पुरातनं प्रह्लादस्य च संवादं मुनेराजगरस्य च ११ तं शयानं ध
रोपस्थे कावेर्यां सह्यसानुनि रजस्वलैस्तनूदेशैर्निगूढामलतेजसं १२ ददर्श लोकान्वि
चरन्लोकतत्वविवित्सया वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः १३ कर्मणाकृतिभिर्वा
चालिंगैर्वर्णाश्रमादिभिः न विदंति जना यं वै सोऽसाविति न वेति च १४ तं नत्वाभ्यर्च्य विधिव
त्पादयोः शिरसा स्पृशन् विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः १५ बिभर्षि कायं पीवानं
सोद्यमो भोगवान्यथा वित्तं चैवोद्यमवतां भोगो वित्तवतामिह १६ भोगिनां खलु देहोऽयं पीवा
भवति नान्यथा १७ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नुहार्थो यत एव भोगः अभोगिनोऽयं तव
विप्र देहः पीवा यतस्तद्वद नः क्षमं चेत् १८ ॥

गूढममलं तेजो यस्य तं १२।१३। कर्मादिभिर्जना यं न विदुः १४ तं पादयोः
शिरसा स्पृशन्नत्वा अप्राक्षीदित्युत्तरेणान्वयः १५ उद्यमसहितः सभोगवानिव पीवानं स्थूलं देहं धारयसि तत्र हेतुं वदे
ति तृतीयेनान्वयः १६।१७। उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राह वित्तं चेति न्वित्तनिष्क्रये हेतिप्रसिद्धे यत वाप्यो
नास्तीति प्रसिद्धरूपे वेत्यर्थः यतो यस्मादेव यतो हेतोः पीवा तत्क्षमं यदि ग्यं चेत् १८ ॥ रामः रामः

किंचविद्वान्नात्मसमर्थोप्यर्थंजनस्तदर्थमुद्यमंकरोतित्वंतुसमर्थोपिकिमितिनकरोषीत्याह।कविर्विद्वान्कल्पःदक्षः
निपुणदृक्चतुरःचित्राःप्रियाःलोकरंजनाःकथायस्यतथापिलोकस्यकर्मकुर्वतःशेषेतद्वीक्षितोपीवाअतःतत।
सर्वंपश्यन्नपिपार्श्वतरे।नहेयितत्कर्मनहेयं।नतोपिवानचरतोपीत्यर्थः १९ तस्यवागेवामृतंतेनयंत्रितोवशीकृतः
सन् २० अध्यात्मचक्षुषाअंतर्दृष्ट्याभवान्वेदैवआर्याणांज्ञानिनांसम्मतोननुभवान्इदमितियदुक्तं।तदेवाहनृणा
मीहोपरमयोःप्रवृत्तिनिवृत्त्योःपदानिस्थानानिफलानीत्यर्थः २१ वेदत्वेत्रहेतुःयस्येतिहृदिप्रविष्टःसन्अज्ञानंधुनोति।

कविःकल्पोनिपुणदृक्चित्रप्रियकथःसमः लोकस्यकुर्वतःकर्मशेषेतद्वीक्षितोपिवा
१९ नारदउवाच सइत्थंदैत्यपतिनापरिपृष्टोमहामुनिः स्मयमानस्तमभ्याहतद्वागमृतयंत्रि
तः २० ब्राह्मणउवाच वेदेदमसुरश्रेष्ठभवान्नन्वार्यसंमतः ईहोपरमयोर्नृणांपदान्य
ध्यात्मचक्षुषा २१ यस्यनारायणोदेवोभगवान्हृद्गतःसदा भक्त्याकेवलयाऽज्ञानंधुनोति
ध्वांतमर्कवत् २२ अथापिब्रूमहेप्रश्नांस्तवराजन्यथाश्रुतं संभावनीयोहिभवानात्मनः ग३
शुद्धिमिच्छता २३ तृष्णयाभववाहिन्यायोग्यैःकामैरपूरया कर्माणिकार्यमाणोहंनानायो
जि१ निषुयोजितः २४ यदृच्छयालोकमिमंप्रापितःकर्मभिर्भ्रमन् स्वर्गापवर्गयोर्द्वारंतिरश्चांपुनरस्यच २५

तिअर्कोयथावहिर्ध्वांतं २२ यथाश्रुतमित्यौद्धत्यपरिहारायोक्तं लोकःकर्मसुप्रवर्तते त्वंतुकथंनिवृत्तःसन्किं
शेषेइतियदुक्तंतत्राहत्रिभिःतृष्णयेतिचतुर्भिःभवप्रवाहकारिण्यायोग्यैश्चितैरपिविषयैःपूरयितुमशक्ययातत्सयाकर्मसु
प्रवर्तमानोहंपूर्वंनानायोनिषुप्रवेशितः २४ तथैवेमंलोकंमनुष्यदेहंयदृच्छयाप्रापितःकथंभूतंलोकंधर्मेणस्वर्गस्य
द्वारंसाधनंअधर्मेणतिरश्चांशूकरादियोनेर्द्वारंमिश्राभ्यांताभ्यांपुनरप्यस्यमनुष्यत्वस्यद्वारंसर्वतोनिवृत्त्योअपव

अत्रापि मनुष्यत्वे इति । अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दृष्ट्वा निवृत्तोऽस्मि २६ ननु यद्यपि त्वया कदाचित्सुखं स्यादपि निवृ-
त्तस्य तु किं स्यादिति चेत्तत्राह । सुखमस्य जीवस्य स्वरूपमेव तर्हि किं न प्रकाशते तत्राह सर्वेहोपरतिस्तनुः सर्वक्रियानि-
वृत्तौ सुखमेव प्रकाशत इत्यर्थः । भोगांश्च मनःसंस्पर्शजान् मनोरथमात्रजान् अतस्त्वतान् दृष्ट्वा स्वप्स्यामि निरुद्यमोऽस्मीत्य-
र्थः २७ तर्हि कदाचित्कथं भुंक्षे तत्राह संविशन् प्रारब्धान् भोगान् भुंजान इत्यर्थः २८ एवं चेत्कोऽपि न संसारं प्राप्नुयात्
तत्राह इत्येतदात्मनः सुखात्मकं स्वार्थं स्वस्मिन्नेव स्वार्थं विस्मृत्य असत्यपि द्वैते २९ एतदेव दृष्टांतेन स्पष्टयति । जलमि-

अत्रापि दंपतीनां च सुखायान्यापनुत्तये कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययं २६
सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः मनःसंस्पर्शजान् दृष्ट्वा भोगान् स्वप्स्यामि संविशन् २७
इत्येतदात्मनः स्वार्थं संतं विस्मृत्य वै पुमान् विचित्रामसति द्वैते घोरामाप्नोति संसृतिं २८ जलं
तदुद्भवैश्छन्नं हित्वाज्ञो जलकाम्यया मृगतृष्णामुपाधावेत्तथान्यत्रार्थदृक् स्वतः २९ देहा-
दिभिर्दैवतंत्रैरात्मनः सुखमीहतः दुःखात्ययं चानीशस्य क्रिया मोघाः कृताः कृताः ३० आध्या-
त्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किं ३१ पश्या-
मि धनिनां क्लेशं लुब्धानामजितात्मनां भयादलब्धनिद्राणां सर्वतोऽभिविशंकिनाम् ३२ ॥

ति । तदुद्भवैः शैवालादिभिः जलकाम्यया जलेच्छया स्वतः आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन् २९ एवं स्वस्य निरु-
द्यमहेतुकारणमुक्त्वा विपर्ययं दृष्ट्वेति । यदुक्तं तं विवृणोति देहादिभिरिति पंचभिः ईहतः ईच्छतः अनीशस्य निर्दैवस्य ।
आरब्धाः क्रिया मोघाः विफला एव भवंति ३० क्रियाणां सफलत्वेऽपि फलस्यानुपयोगमाह । आध्यात्मिकादि-
भिरिति मर्त्यस्य मरिष्यतः कृच्छ्रेण दुःखेनोपनतैः प्राप्तैः ३१ कृच्छ्रं विनैव प्राप्तेऽप्यर्थे दुःखं तदवस्थमित्याह पश्यामीति ३२

भयं प्रपंचयति राजत इति स्वस्मान्मत एव कथंचित्त्यागो भोगादिस्मरणादिना नाशः स्यादिति प्राणार्थवतां भयं नित्यं ३३ अतोनर्थहेतुत्वात्प्राणार्थयोः स्पृहाहानं कार्यमित्याह ३४ नन्वेवमनर्थाननुभवंतोपि न केचिद्विरज्यंते न च यथालाभेन तुष्यंति। त्वं तु कथं वैराग्यादिकं प्राप्तोसि। तत्राह मधुकारेति। मधुकमक्षिका अजगरो ययोः शिक्षया वा तयोः पर्यालोचनया ३५ मधुकाराच्छिक्षितमाह विराग इति। वित्तपतिं हत्वाप्यन्यो वित्तं हरेदित्येवं ३६ अजगराच्छिक्षितमाह। अनीह इति

राजतश्चौरतः शत्रोः स्वजनात्पशुपक्षितः अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयं ३३ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः यन्मूलाः स्युर्नृणां जह्यात्स्पृहां प्राणार्थयोर्बुधः ३४ मधुकारमहासर्पौ लोकेस्मिन्नो गुरूत्तमौ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयं ३५ विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिं ३६ अनीहः परितुष्टात्मा यदृच्छोपनतादहं नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ३७ क्वचिदल्पं क्वचिद्भूरि भुंजेन्नं स्वाद्वस्वादु वा क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ३८ श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितं भुंजे भुक्त्वाथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया ३९ क्षौमं दुकूलमजिनं चीरं वल्कलमेव च वसेन्यदपि संप्राप्तं दिष्टभुक्तुष्टधीरहं ४० क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु क्वचित्प्रासादपर्यंके कशिपौ वा परेच्छया ४१ क्वचित्स्नातोनुलिप्तांगः सुवासाः स्रग्व्यलंकृतः रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ४२

सत्त्ववान् धैर्यवान् ३७ पीनत्वे हेतुत्वेन यदृच्छया प्राप्तास्य परितोषं प्रपंचयति। क्वचिदल्पमिति षड्भिः ३८।३९ चीरं जीर्णवस्त्रखंडं वसे परिदधे दिष्टभुक् प्रारब्धभोगी ४० प्रासादमध्ये पर्यंके तत्रापि कशिपौ तूलिकायां ४१ चरे विचरामि क्वचिद्ग्रहवद्दिगंबरो विचरामि ४२ ॥

नच मानापमानकर्तृत्वमप्यस्तीत्याह नाहं निंदामि महात्मनि विलीनो ४३ एवं भक्तेन तत्त्वस्थितावुपायमाह विकल्पमिति द्वाभ्यां
चित्तौ भेदग्राहकमनोवृत्तौ अर्थरूपो विभ्रमो यस्मिन् वैकारिके अहंकारे अनन्तरं महत्तत्त्वद्वारेण मायायां ४३ सत्यमेव प।
श्यतीति तथा ४४ भेदहेतुत्वाल्लोकशास्त्राभ्यां व्यपेतं न तत्त्वहेतुर्यतो भवान् भगवत्परः ४५।४६। इति सप्तमे त्रयोदशः।
चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते देशकालादिभेदेन पुनः श्रेयो विशेषकृत् १ गृहस्थस्य मुक्त्युपायमोहान्तरंगत्वेन प्रथमं

नाहं निंदेन च स्तौमि स्वभावविषमं जनं एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ४२ विक
ल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे मनो वैकारिके हुत्वा तं मायायां जुहोत्यनु ४४ आत्मानुभूतौ तां
मायां जुहुयात्सत्यदृक् मुनिः ततो निरीहो विरमेत् स्वानुभूत्यात्मनि स्थितः ४५ स्वात्मवृत्तं मये
त्थं ते सुगुप्तमपि वर्णितं व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्परः ४६ श्रीनारद उवाच ध
र्मं पारमहंस्यं वै मुनेः श्रुत्वासुरेश्वरः पूजयित्वा ततः प्रीत आमंत्र्य प्रययौ गृहं ४७ इति श्रीभागव
ते म० पु० त्रयोदशोध्यायः १३ युधिष्ठिर उवाच गृहस्थ एतां पदवीं विधिना येन चांजसा यायाद्दे
वर्षे ब्रूहि मादृशो गृहमूढधीः १ नारद उवाच गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् यथोचिताः
वासुदेवार्पणं साक्षादुपासीत महामुनीन् २ शृण्वन् भगवतोभीक्ष्णमवतारकथामृतं श्रद्द
धानो यथाकालमुपशांतजनावृतः ३ सत्संगाच्छनकैः संगमात्मजायात्मजादिषु विमुच्येन्मु
च्यमानेषु स्वयं स्वप्नवदुत्थितः ४ ॥

वनस्थयतिधर्मेष्वभिहितेषु तर्हि गृहस्थस्य मोक्षो न स्यादिति शंकितचित्तः पृच्छति
गृहस्थ इति १ तस्य मोक्षधर्मानाह गृहेष्वित्यादि यावदध्यायसमाप्तिः साक्षाद्वासुदेवार्पणं यथा भवत्येवं कुर्वन्नुपासी
त २।३ स्वयमेव मुच्यमानेषु वियुज्यमानेषु यथा उत्थितः पुमान् स्वप्नदृष्टेषु पुत्रादिषु संगं विमुंचति तद्वत् ४

नन्वेवंभक्तस्यदुर्जनेनाभिभूयमानस्यकुतोगृहोचिताःक्रियाःस्युस्तत्राहयावदर्थमिति। अंतरनासक्तःबहिस्त्वासक्तइवनृलोकेजनमध्येनरतांमानुष्यंन्यसेत्पुरुषकारंनाविःकुर्यादित्यर्थः ५ आज्ञांतुकथंनकुर्यादित्याहज्ञातयइति ६ नन्वेवंसर्वानुमोदेनवित्तव्ययःप्रसज्येतकुतोजीवनंकुतोवाकर्मकरणंतत्राह। दिव्यंवृष्ट्यादिभिर्जातंधान्यादिभौमंनिधानादिअंतरिक्षमकस्मादेवप्राप्तंतदेवअच्युतनिर्मितंदैवलब्धंयदएतत्स्वीकंकर्मादि ७ दैवादधिकलाभेजातेतत्राभिमानेन। कार्पण्यंत्याहयावदिति भ्रियेतपूर्येत ८ अतएवयंकमपिस्वगृहेक्षेत्रेवाप्रविश्यभुंजानंनातिवारयेदित्याह। मृगोष्ट्रेति मर्को

यावदर्थमुपासीनदेहेगेहेचपंडितः विरक्तोरक्तवत्तत्रनृलोकेनरतांन्यसेत् ५ ज्ञातयःपितरौपुत्राभ्रातरःसुहृदोपरे यद्वदंतियदिछंतिचानुमोदेतनिर्ममः ६ दिव्यंभौमंचांतरिक्षंवित्तमच्युतनिर्मितं तत्सर्वमुपभुंजानएतत्कुर्यात्स्वतोबुधः ७ यावद्भ्रियेतजठरंतावत्स्वत्वंहिदेहिनां अधिकंयोभिमन्येतसस्तेनोदंडमर्हति ८ मृगोष्ट्रखरमर्काखुसरीसृपखगमक्षिकाः आत्मनःपुत्रवत्पश्येत् तैरेषामंतरंकियत् ९ त्रिवर्गंनातिकृछ्रेणभजेतगृहमेध्यपि यथादेशंयथाकालं यावद्दैवोपपादितं १० आश्वाघांतेवसायिभ्यःकामान्संविभजेद्यथा अप्येकामात्मनोदारांनृणांस्वत्वग्रहोयतः ११ ॥

सर्वेषांवचनंमानयेत्।२।

मर्कटःसरीसृपःसर्पःमक्षिकाअनैःपुत्रैःएषांमृगादीनां ९ अतिकृछ्रेणाप्ययनभजेतकिंतुयावद्दैवप्रापितंतावद्देवभजेतश्वानश्च अघाश्वपतिताअंतेवसायिनश्चांडालादयःतानभिव्याप्ययथाहंकामान्संविभजेत्स्वभोग्यानविभज्यदद्यात्। यद्यप्येकेवात्मनोदाराभार्यातस्यामतिथिप्रभृतयोनिपुणायांस्वस्यप्रभुयाहोयेत। यस्यांचनृणांस्वत्वग्रहःममैवयमित्याग्रहःतामेकामपिसंविभजेत्। अतिथ्यादिप्रभृतयोप्रयुंजीतेत्यर्थः नत्वन्यथामंतव्ययथार्हंसंविभ

एवंविवेकेन स्त्रीवशीकृतः स्यादित्याह। यदर्थे यन्निमित्तं अन्यैरजितोपीश्वरस्तेन जित एव १२ कथमेवं तस्यां स्वत्वाभिमा
नो हातुं शक्यः तत्र विचारेणेत्याह। क्रिमिविड्भस्म संज्ञा मृत्युनिष्ठा पर्यवसानं अन्ते यस्य तदीया देहाश्रयरतिर्यस्याः सा स्व
महिम्ना नभोपि छादयतीति तथा १३ किंच सिद्धैर्दैवलब्धैः यज्ञावशिष्टार्थैः पंचयज्ञशेषैरन्नादिभिः महतां निवृत्तानां
१४ एतद्विवृण्वन्नाह देवादीन् पंचयज्ञदेवताः आत्मानं च एवं पृथक् अंतर्यामिणमेव यजेत् १५।१६ नपुनरतिनिर्बं।

जह्याद्यदर्थे स्वप्राणान् हन्याद्वा पितरं गुरुं तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः १२ कृमिवि
ड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरं क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः १३ सिद्धैर्यज्ञाव
शिष्टार्थैः कल्पयेद्वृत्तिमात्मनः शेषे स्वत्वं त्यजन्प्राज्ञः पदवीं महतामियात् १४ देवानृषीन्नृ
भूतानि पितॄनात्मानमन्वहं स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् १५ यर्ह्यात्मनोधिका
राद्याः सर्वाः स्युः यज्ञसंपदः वैतानिकेन विधिना अग्निहोत्रादिना यजेत् १६ न ह्यग्निमु
खतोयं वै भगवान् सर्वयज्ञभुक् इज्येत हविषा राजन् यथा विप्रमुखे हुतैः १७ तस्माद्ब्राह्म
णदेवेषु मर्त्यादिषु यथार्हतः तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणाननु १८ ॥

योयज्ञार्पिकार्यः स्यादित्याह। नहीति विप्रमुखे हुतैः अन्नादिभिः यथाऽऽज्येत तथा अग्निमुखतो हविषाऽऽज्येत १७ ब्राह्म
णेषु देवेषु च पंचयज्ञदेवतासु मर्त्यादिषु अन्येष्वपि नरेषु यथार्हं आदिष्ट क्षेत्रज्ञं अंतर्यामिणं। ब्राह्मणाननु मर्त्या
दि। यजेनानंतरं मन्येषु यजस्व यद्वा अंतरे ब्राह्मणा आननं यस्य तं १८ ॥ ॥ ॥ ॥

प्रौष्ठपदे भाद्रपदे कृष्णपक्षे १९।२०। शुक्लपक्षे अक्षय्यतृतीयायामित्यर्थः। हेमंते शिशिरे च। मार्गशीर्षादिमासचतुष्टये
पि मासि प्रौष्ठकाष्टासु २१ संक्रांतौ चंद्रपौर्णमास्यां राकायां पूर्णचंद्रा सेवानुमतिस्तस्यां मासर्क्षाणि तत्तन्मासनामप्र
वर्तिनिमित्तानि नक्षत्राणि युतानि यदा स्युः तदा तदुक्तं। त्रिकार्ष्णौ। पुष्यपक्षौ पौर्णमासी पौषी मासे तु पत्र सा। ना।
मासि पौषी माघा घा श्रवणैकादश्यापर्वणि २२ अनुराधा श्रवणा उत्तरा फाल्गुनी उत्तराषाढा उत्तरा भाद्रपद द्वाद

कुर्याद्दा परपत्नीयं मासि प्रौष्ठपदे द्विजः श्राद्धं पित्र्यं विवित्तं तद्दद्यान्नां च वित्तवा
न् १९ अयने विषुवे कुर्याद्व्यतीपाते दिनक्षये चंद्रादित्योपरागे च द्वादश्यां श्रवणे
षु च २० तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके चतस्रष्वप्यष्टकासु हेमंते शि
शिरे तथा २१ माघे च सितसप्तम्यां मघाराकासमागमे राकया चानुमत्या वा मासर्क्षाणि
युतान्यपि २२ द्वादश्यामनुराधा स्यात्श्रवणस्तिस्र उत्तराः तिस्र एकादशी वा
सु जन्मर्क्षश्रोणयोगयुक् २३ त एते श्रेयसः काला नृणां श्रेयोविवर्द्धनाः कु
र्यात्सर्वात्मनैतेषु श्रेयो मोघं तथायुषः २४ एषु स्नानं जपो होमो व्रतं देवद्विजार्चनं
पितृदेवद्विजातिभ्यो यद्दत्तं तद्ध्यनश्वरं २५ ॥



श्रीवायद्याप्यात्। तदा च जन्मर्क्षश्रोणयोगयुक् जन्मनक्षत्रस्य श्रवणस्य वा योगेन युक्तं दिनं यदा। योगस्तदुक्तं।
वंधवाद्यस्यार्थं २३ न केवलं श्राद्धस्यैव तेकालाः किंतु धर्ममात्रस्येत्याह। तएतेद्वाभ्यां। तदेवायुषः अमोघं सा
फल्यमित्यर्थः २५ ॥ शिव रामायनमः शिव रामायनमः

संस्कारकाल इति। जायायाः पुंसवनादि अपत्यस्य कर्मादि आत्मनो यज्ञदीक्षादि। प्रेतस्य संस्थायाहनादि। मृताहश्च सांवत्स
रिकः यदा अन्यस्मिन्नपि। अभ्युदयार्थं कर्माणि श्रेयः कुर्यादित्यत आह नृपसंगः २७।२८ यत्र यस्मिन्सर्वमेतच्चराचरमस्तित
स्य भगवतो बिंबं रूपं सत्पात्रं लभ्यते स वै पुण्यतमो देशः २९ अर्हतां महतां क्षेत्राणि ३०।३१ सीतायाः रामस्य चाश्रम आदि
शब्दयोः वृष्यकृष्णहरीणां वियोगकालाभिप्रायेण ३२ अर्चाश्रिताश्च स्थिरप्रतिमाश्रिताः पूर्वं शालिग्रामशिलाद्यर्चनदेश।

संस्कारकाले जायाया अपत्यस्यात्मनस्तथा प्रेतसंस्थामृताहश्च कर्मण्यभ्युदये नृप २६ अ
थ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान् स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते २७ बिंबं भ
गवतो यत्र सर्वमेतच्चराचरं यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितं २८ यत्र यत्र हरेरर्चा स दे
शः श्रेयसां पदं यत्र गंगादयो नद्यः पुराणेषु च विश्रुताः २९ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रिता
न्युत कुरुक्षेत्रं गयाशिरः प्रयागः पुलहाश्रमः ३० नैमिषं फाल्गुनं सेतुः प्रभासोथ कुशस्थली वा
राणसी मधुपुरी पंपा बिंदुसरस्तथा ३१ नारायणाश्रमो नंदा सीतारामाश्रमादयः सर्वे कुलाच
ला राजन महेंद्रमलयादयः ३२ एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये एतान्देशान्निषेवेत श्रे
यस्कामो ह्यभीक्ष्णशः ३३ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ३४ पात्रं त्वत्र निरुक्तं वै कवि
भिः पात्रवित्तमैः हरिरेकउर्वीश यन्मयं वै चराचरं ३५ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु
राजन्यदग्रपूजायां मतः पात्रतयाच्युतः ३६ ॥

कालः स्वल्पोपि महत्त्वं ३३ अत्र एषु ईहितः कृतः सहस्रगुण
मधिकस्य फलस्य उदयो यस्मात्स ३४ तथा हरिरेव पात्रं निरुक्तं निर्णीतं देवाः देवेषु च अर्हत्सु च तपोयोगादिसिद्धेषु ब्रह्मा
त्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीये राजसूये यद्यस्मादच्युत एव पात्रतया संमतः ३६॥ ॥ ॥

समस्त्वे हेतुमाह जीवराशिभिर्व्याप्तो ब्रह्माण्डकोश एव योऽङ्घ्रिपः सर्वजीवानामात्मनश्च तर्पणं ३७ एतदेव पुरुषनामनिरुक्त्या द्रढयति पुराणीति। नृतिर्यगादिरूपाणि पुराणि शरीराणि तेष्वन्तर्यामिरूपेण प्रत्यगंशेन च यः शेते। अतः पुरुष इति प्रसिद्धः ३८ तारतम्येनेति तिर्यगादिभ्यः पुरुषो यस्मादाधिक्येन वर्तते। तस्मात्पुरुषः पात्रं। तत्रापि यावानात्मा ज्ञानादिः पुरुषार्थ्यापूर्वीयते। तपआदियोगेन यत्र यत्र प्रतीयते। तथा तथा सोऽपात्रमित्यर्थः। तथा चश्रुतिः। पुरुषत्वे चाविस्तरामात्मे

जीवराशिभिराकीर्ण अण्डकोशांघ्रिपो महान्। तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणं ३७ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः। शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ३८ तेष्वेव भगवान्राजंस्तारतम्येन वर्तते। तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते ३९ दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप। त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ४० ततोऽर्चायां हरिं केचित्संश्रद्धाय सपर्यया। उपासत उपास्तापि नार्थदा पुरुषद्विषां ४१ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः। तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुं ४२ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः। पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ४३ इति श्रीभागवते महापुराणे सप्तमस्कंधे चतुर्दशोऽध्यायः १४ ॥

त्यादि ३९ तर्हि प्रतिमादौ हरेः पूजां किमिति कुर्वन्ति। तत्राह दृष्ट्वेति द्वाभ्यां मिथो अवज्ञामसन्मानं तस्मिन्नात्मबुद्धि येषां भाववृद्ध्यै क्रियायै पूजाद्यर्थं ४० हरिमुपासते उपासितापि पुरुषद्वेषिणामर्थदा न भवति। पुरुषद्वेषं हित्वार्चिता सती सापि मंदाधिकारिणां पुरुषार्थप्रदा भवत्येवेत्यर्थः ४१ पुरुषेष्वपि ब्राह्मणा उत्तमा इत्याह पुनर्विशेषान्तरमाह पुरु षेष्वपीति। यो धत्ते तं सुपात्रं विदुः। एतदेव कैमुत्यन्यायेन द्रढयति। नन्वस्येति ४३ इति सप्तमे चतुर्दशः १४

च त ल

ततः पंचदशे सर्ववर्णाश्रमनिबंधनं सारतः संग्रहेणाथ वर्ण्यते मोक्षलक्षणं १ सर्वेषामपि मोक्षधर्माणां संग्रहाध्याय मध्यायारंभः। तत्र श्राद्धं गतान्धर्मानाह। कर्मनिष्ठा इति स्वाध्यायादिषु परिनिष्ठिताः इति शेषः १ कव्यानि पितॄनुद्दिश्य देयानि दैवे च २ व्यानि अपि। तस्मै देयानि। यथार्हतः इति सर्वत्र ज्ञानादितारतम्येन २। ३। ननु विस्तरः कुतः प्राप्तः। येन निषिध्यते

नारद उवाच कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपापरे स्वाध्यायेन्ये प्रवचने केचिज्ज्ञानयोगयोः १ ज्ञाननिष्ठाय देयानि कव्यान्यानंत्यमिच्छता दैवे च तदभावे स्यादितरेभ्यो यथार्हतः २ द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा भोजयेत्सुसमृद्धोपि श्राद्धे कुर्यान्न विस्तरं ३ देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च सम्यग्भवंति नैतानि विस्तरात्स्वजनार्पणात् ४ देशकाले च संप्राप्ते मुन्यन्नं हरिदैवतं [illegible] श्रद्धया विधिवत्पात्रे न्यस्तं कामधुगक्षयं ५ देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च अन्नं संविभजन्पश्येत्सर्वं तत्पुरुषात्मकं ६ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् मुन्यन्नैः स्यात्परा प्रीतिः यथा न पशुहिंसया ७ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छतां न्यासो दंडस्य भूतेषु मनोवाक्कायकर्मभिः ८ ॥

तत्राह। स्वजनानां मर्पणात्। जामाता चेन्निमंत्र्यते तत्पित्रादयः कथं वर्ज्या इत्येवं प्राप्तविस्तरादित्यर्थः ४ मुन्यन्नं आरण्यं व्रीह्यादि हरिदैवतं। हरये निवेदितं तत् ५ पुरुषात्मकं ईश्वरस्वरूपं ६। ७। दंडस्य न्यासः हिंसायास्त्यागो यः एतादृशो धर्मो नास्ति ॥ ८ ॥ ॥ ॥

अतएवोत्तमाधिकारिणोबाह्यानिकर्माणित्यजंतीत्याह। एके अनीहानिष्कामाः। ज्ञानदीपिते आत्मस्फूर्तिमति आत्म संयमनेजुहूतिमनोनियमात् दंतरायतयोत्यजंतीत्यर्थः तदुक्तंसर्वज्ञसूक्तैः प्रत्यक्स्फूर्तिरसत्पूर्तिस्तत्वनिष्ठाविधानकं संतस्यसंत्यजेत्कर्मत्यजन्विघ्नहतोन्ययेति ९ मामांएवफलंवहन्यादितिकुतः अकरुणः तत्कुतः असुतृपप्राणतर्पकः तत्किमतत् आत्मत्वानभिज्ञ अतज्ज्ञः तथाचश्रुतिः। नतंविदाथयइमाजजानान्यद्युष्माकमंत

एकेकर्ममयान्यज्ञान्ज्ञानिनोयज्ञवित्तमाः आत्मसंयमनेऽनीहाजुह्वतिज्ञानदीपिते ९
द्रव्ययज्ञैर्यक्ष्यमाणंदृष्ट्वाभूतानिबिभ्यति एषमाकरुणोहन्यादतज्ज्ञोह्यसुतृप्ध्रुवं १०
तस्माद्दैवोपपन्नेनापिधर्मवित् संतुष्टोऽहरहःकुर्यान्नित्यनैमित्तिकीःक्रियाः ११ विधर्मःप
रधर्मश्चआभासउपमाछलः अधर्मशाखाःपंचेमाधर्मज्ञोधर्मवत्त्यजेत् १२ धर्मबाधो
विधर्मःस्यात्परधर्मोन्यचोदितः उपधर्मस्तुपाखंडोदंभोवाशब्दभिच्छलः १३ यस्त्वि
छयाकृतःपुंभिराभासोह्याश्रमात्पृथक् स्वभावविहितोधर्मःकस्यनेष्टःप्रशांतये १४

रंबभूव।नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंतीति १० प्रसक्तमनुवर्तयतीति ११ अधर्मवत्साक्षान्नि षिद्धवत् १२ क्रमेणनाह्यस्यपंचापिव्याचष्टे धर्मबाधः धर्मस्तुद्धायुयस्मिन्क्रियमाणेस्यधर्मबाधः अन्यस्यचोदितोन्यस्यपर धर्मः उपमेतिव्याचष्टे उपधर्मस्त्विति शाखस्यभिदेदः अन्यथाव्याख्यानंयस्मिन्। यथादशावरान्भोजयेदित्युक्ते दश। श्वोवराणितिपुत्रान्भितुः शब्दभिदितिपाठे। धर्मशब्दमात्रविभर्तीतितथायथागंगायामित्युक्ते मरिष्यत्यगोदाने १३ स्व धर्ममात्रानुष्ठानंतरं धर्मस्यपरत्वात्पर्यमपियदौ धर्मोनानुष्ठेयः अनुपयोगादित्याह स्वभावविहिताइति १४॥ ॥

किंचाधनोधर्मार्थंनेहेत नापेक्षेत धनार्थेन्याप्रियतेतियोदैवोपपन्नेनैवस्वधर्मसिद्धेःस्वस्वात् यात्रार्थमपिनेहेतेत्ये
तत्प्रपंचयति। अनीहेति। सार्द्धैःषड्भिः १५।१६ तुष्यानदोषादस्यासंतुष्टानपातःस्य १७ गृहपालःश्वातद्वदाचरति १८
तृट्तृड्भ्यांजनःकामस्यांतंयाति। अन्नोदकातिरिक्तकामांतराभावात्क्रोधस्यचांतंयाति। एतस्यक्रोधस्यफलंहि

धर्मार्थमपिनेहेतयात्रार्थंवाधनोधनं अनीहानीहमानस्यमहाहेरिववृत्तिदा १५ संतुष्टस्यनि
रीहस्यस्वात्मारामस्ययत्सुखं कुतस्तत्कामलोभेनधावतोर्थेहयादिशः १६ सदासंतुष्टम
नसःसर्वाःशिवमयादिशः शर्कराकंटकादिभ्योयथोपानत्पदःशिवं १७ संतुष्टःकेनवारा
जन्नवर्त्तेतापिवारिणा औपस्थ्यजैह्वकार्पण्याद्गृहपालायतेजनः १८ असंतुष्टस्यविप्रस्य
तेजोविद्यातपोयशः स्रवंतींद्रियलौल्येनज्ञानंचैवावकीर्यते १९ कामस्यांतंतुक्षुत्तृड्भ्यांक्रोध
स्यैतत्फलोदयात् जनोयातिनलोभस्यजित्वाभुक्त्वादिशोभुवः २० पंडिताबहवोराजन्
बहुज्ञाःसंशयछिदः सदसस्पतयोप्येकेअसंतोषात्पतंत्यधः २१ असंकल्पाज्जयेत्का
मंक्रोधंकामविवर्जनात् अर्थानर्थेक्षयालोभंभयंतत्वावमर्शनात् २२ आन्वीक्षिक्या
शोकमोहौदंभंमहदुपासया योगांतरायान्मौनेनहिंसांकायाद्यनीहया २३ ॥

सांतस्योदयान्निष्पत्तेः। दिशोजित्वापिभुवोभुक्त्वापिलोभस्यैवांतंयातीत्यर्थः २०।२१ इदानींकामादिजयोपायाना
ह। असंकल्पादितिचतुर्भिः। जयेदितियथायथमन्वेति अर्थानर्थदर्शनेनतत्वावमर्शनात् आत्मानुसंधानेनआ
न्वीक्षिक्याआत्मानात्मविवेकेन। महतांसात्विकानांसेवया। योगस्यांतरान्लोकवार्तादीन् २३ ॥ ॥

येभ्यो भूतेभ्यो भयं जायते तेष्वेव कृपया हिंसाचरणेन दैवोपसर्गनिमित्तं दुःखं मनःपीडा तदुक्तं याज्ञवल्क्येन विमनाविकलारं भासंसोरं स्यु निमित्तं तदिति। आत्मजं देहजं योगवीर्येण प्राणायामादिबलेन सत्त्वनिषेवया सात्त्विकाहारादिना २४
२५ ननु कथं गुरौ भक्त्या सर्वस्य जयः स्यात्। तस्यापि मनुष्यत्वेन नरत्वस्य त्वात्। तत्राह यस्येति। मर्त्यासद्धीः
मनुष्य इति दुर्बुद्धिः। तस्य शास्त्रश्रवणं कुञ्जरस्नानवद्व्यर्थं २६ ननु गुरोः पितृपुत्रादय एनं नरमेव मन्यन्ते। अत

कृपया भूतजं दुःखं दैवं जह्यात्समाधिना आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया २४
रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् २५
यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवत्
२६ एष वै भगवान्साक्षात्प्रधानपुरुषेश्वरः योगेश्वरैर्विमृग्याङ्घ्रिर्लोको यं म
न्यते नरं २७ षड्वर्गसंयमैकान्ताः सर्वा नियमचोदनाः तदन्ता यदि नो योगाना
मा१ वहेयुः श्रमावहाः २८ ॥

आह। एष गुरुः साक्षाद्भगवानेव लोकः यं नरो मायेतिबुद्धिर्भ्रान्तिरित्यर्थः यद्वा नहि तत्पुत्रादेर्मनुष्यबुद्ध्या प्रतीय
मानोऽपि गुरुर्भगवानेव भक्तेन यथेष्टं स्वीकार्य इत्यर्थः २७ एवं सर्वैरुपायैः कामादिवेगान् जित्वापि यतेऽरियो गुरुसेवाध्यान
परो भवेत् अन्यथा तत्प्रतिसर्वशास्त्रं वैफल्यं स्यादित्याह। षड्वर्गेति सर्वा अपि नियमचोदना इष्टापूर्त्तादिविधयः
षडिन्द्रियवर्गस्य यः संयमः तस्मिन्नेवैकस्मिन्नन्तो यासां तादृक्परा इत्यर्थः। न च तावतापि चरितार्था इत्याह तदन्ता

तदेव दृष्टांतेनाह। यथा वार्त्तादयः कृष्यादयः अर्थास्तत्फलानि च योगस्यार्थं मोक्षं न साधयंति। प्रत्युत अनर्थाय संसारायै।
वासतो वहिर्मुखस्येष्टापूर्त्तादि अपि तथा २९ एवं योगं प्रयुंजानोपि यस्य कुटुंबादिसंयोगेन चित्तं विक्षिप्येत तस्य कष्टमाह। यश्चि
त्तस्य विजये यत्नः उद्युक्तः स भिक्षुः स्यात् तथा च सति। हृद्वा हृतस्य गार्हस्थ्ये ध्यानभंगादिकारणं। लक्षयित्वा गृहाश्रमं सं
न्यसेदविचारयन्निति भिक्षया प्राप्तं मितमशनं यस्य ३० ऋजुः सममंगं यस्य सः सुखं यथा भवत्येवमासीत। ओमित्युच्चा

यथा वार्त्तादयो ह्यर्था योगस्यार्थं न बिभ्रति अनर्थाय भवेयुस्ते पूर्त्तमिष्टं तथासतः २९ यश्चि
त्तविजये यत्तः स्यान्निःसंगोऽपरिग्रहः एको विविक्तशरणो भिक्षुर्भैक्षामिताशनः ३० देशे शुचौ
समे राजन्संस्थाप्यासनमात्मनः स्थिरं सुखं समं तस्मिन्नासीतर्ज्वंग ओमिति ३१ प्राणापानौ स
न्निरुंध्यात्पूरकरेचककुंभकैः यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः ३२ यतो यतो निः
सरति मनः कामहतं भ्रमत् ततस्तत उपाहृत्य हृदि रुंध्याच्छनैर्बुधः ३३ एवमभ्यसतश्चित्तं का
लेनाल्पीयसा यतेः अनिशं तस्य निर्वाणं यात्यनिंधनवह्निवत् ३४ कामादिभिरनाविद्धं प्रशां
ताखिलवृत्ति यत् चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ३५ यः प्रव्रज्य गृहात्पूर्वं त्रि
वर्गावपनात्पुनः यदि सेवेत तान्भिक्षुः स वै वांताश्यपत्रपः ३६ ॥

रयन्निति शेषः ३१।३२।३३ एवम
निशमभ्यसतस्तस्य यतेश्चित्तं निर्वाणं शांतिं याति ३४ न च पुनः पुनर्विक्षिप्येतेत्याह। कामादिभिरक्षुभितं यच्चित्तं तन्नोत्ति
ष्ठेत्। यतः प्रशांता अखिला वृत्तयो यस्य। कुतो ब्रह्मसुखेन स्पृष्टं ३५ यस्तु प्रव्रज्यानंतरमपि भोगलिप्सुः स्यात्तं निंदय
ति। य इति। त्रयाणां धर्मादीनां वर्गः आ समंतादुप्यते यस्मिन् तस्मात् गृहात् तान् धर्मादीन् वांताशी छर्दितभोजी निर्लज्जश्च

नचेदमघटितंद्रष्टव्यमित्याह। यैरिति। यैः पूर्वं स्वदेहः अनात्मादिरूपः स्मृतः चिंतितः त एव पुनरेनमात्मसात्कृत्वा श्लाघयंति स्तावयंति
हि ३७ यतिमुपलक्षणीकृत्यान्यपि स्वधर्मत्यागिनो निंदति। गृहस्थस्येति द्वाभ्यां ३८।३९ नन्वात्मतत्त्वज्ञस्य भिक्षोरिंद्रिय
लौल्ये को दोषस्तत्राह। आत्मानं परं ब्रह्म चेत् विजानीयात् ज्ञानेन धुता निरस्ता आशया वासना यस्य। तस्य ज्ञानि
नो लौल्यमेव न संभवतीत्यर्थः। तथा च श्रुतिः। आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय श
रीरमनुसंज्वरेदिति ४० अज्ञस्य तु लौल्येन रथपाताल्पतेः प्रमत्तेन सदा तत्त्वज्ञानेन यतितव्यमिति। इममर्थं आत्मानं

यैः स्वदेहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मसात् । त एनमात्मसात्कृत्वा श्लाघयंति ह्यसत्त
माः ३७ गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि । तपस्विनो ग्रामसेवा भिक्षोरिंद्रियलोल
ता ३८ आश्रमापसदा ह्येते खल्वाश्रमविडंबकाः । देवमायाविमूढांस्तानुपेक्षेतानुकंपया
३९ आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः । किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लं
पटः ४० आहुः शरीरं रथमिंद्रियाणि हयानभीषून्मन इंद्रियेशं । वर्त्मानि मात्रा धिषणां
च सूतं सत्त्वं बृहद्बंधुरमीशसृष्टं ४१ अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च
जीवं । धनुर्हि तस्य प्रणवं पठंति शरं तु जीवं परमेव लक्ष्यं ४२ ॥



रथिनं विद्धि शरीरं रथमेव त्वित्यादिश्रु
त्युक्तरथरूपकद्वारेणाह। आहुरिति द्वाभ्यां। इंद्रियेशं मनो अभीषून् रश्मीनाहुः। मात्राः शब्दादीन् वर्त्मानि गंतव्यदेशानाहुः।
सत्त्वं चित्तं बृहद्बंधुरं बंधनं चित्रं विना ह्यनिबद्धमिव शरीरं भवति। ईशसृष्टमिति। वेधुनकर्तृत्वोक्तिः स्पष्टेत्यर्थः ४१
प्राणादयः पंच नागः कूर्मश्च कृकलो देवदत्तो धनंजय एवं दशविधप्राणमक्षं अभिमानं साहंकारं जीवं रथिनं प्राहुः जी
वं शरं ब्रह्म लक्ष्यं यस्य धनुः प्रणवं आहुः धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यत इत्यर्थः॥ ४२ ॥ ॥

रागादयो जेतव्याः शत्रवः ४३ न अरजोभिनिवेशः क्वचित् आरूढसमाधेः सत्त्वप्रकृतयोपि परोपकारादिप्रवृत्ताः शत्रवः ४४ नृकायरूपं रथं आत्मवशः उपकल्पः इंद्रियादिपरिकरो यस्मिन् तथाभूतं यावद्धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया निशिते ज्ञानखड्गं बिभ्रत् अच्युताश्रयः सन् निरस्तशत्रुस्तत उपशांतः स्वानंदेन तुष्टो भूत्वा इदं रथादिकं मुपेक्षेतेत्यर्थः ४५ अच्युताश्रयाभावे बाधकमाह नोचेदिति । असंतो बहिर्मुखा इंद्रियवाजिनः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयाख्येषु दस्युषु निक्षिपंति । हयैः सूतेन च वर्तमानं । तमोंधे तमसा व्याप्ते । उरु मृत्युभयं यस्मिन्

रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः मानोवमानोसूया च माया हिंसा च मत्सरः ४३ र
जः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ४४ याव
न्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातं ज्ञानासिमच्युतबलो दध
दस्तशत्रुः स्वानंदतुष्ट उपशांत इदं विजह्यात् ४५ नो चेत्प्रमत्तमसदिंद्रियवाजिसूता नी
त्वोत्पथं विषयदस्युषु निक्षिपंति तेदस्यवः सहयसूतममुं तमोंधे संसारकूप उरुमृत्युभये क्षि
पंति ४६ प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकं आवर्तते प्रवृत्तेन निवृत्तेनाश्नुतेमृतं ४७
हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशांतिदं दर्शश्च पौर्णमासश्च चातुर्मास्यं पशुः सुतः ४८
एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च पूर्तं सुरालयारामकूपाजीव्यादिलक्षणं ४९ ॥

४६ ननु च वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमेवमनर्थप्राप्तिः स्यादित्याशंक्य वेदोक्तकर्मणो द्वैविध्यं दर्शयन् फलभेदमाह प्रवृत्तं चेति द्वाभ्यां ४७ हिंस्रं पश्वालंभनादिकर्म । अशांतिदं । अन्याशक्तियुक्तं आदिशब्दार्थं विवरणं दर्शयंश्चेति पशुः पशुयागः सुतः सोमयागः ४८ हुतं वैश्वदेवं प्रहुतं बलिहरणं एतत्सर्वमिष्टमुच्यते एतदेव यदि काम्यं अशांतिदं

प्रवृत्तेन कर्मणा आरोहावरोहाभ्यामावृत्तिप्रकारमाह। द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देहान्तरारंभकः। ये
न संपरिष्वक्तो गच्छति यथावक्ष्यतावच्छब्देनोक्तः इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्तीति पाठान्तरे। द्रव्यमात्रोऽस्य वि
पाकश्च द्रव्यशब्देन तेजोमात्राशब्देनोक्ता भौतिकप्राणाद्युपाधिविपाकशब्देन तद्द्वयाग्रप्रद्योतः। तथा च श्रुतिः। स एतास्ते
जोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामतीति। धूमा
दिशब्दैस्तत्तदभिमानिन्यो देवताः। तत्रापक्षयः कृष्णपक्षः। सोमः सोमलोकः। तत्र भुक्तभोगस्यावरोहणप्रकारमाह। इत्या
दिदर्श इति विपरीतलक्षणया विशिष्टभोगक्षयप्रकाशितेन देहत्वेनादर्शनमुच्यते। एतदुक्तं भवति। भूतसूक्ष्मोपयुक्तो धू

द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः अयनं दक्षिणं सोमो दर्श ओषधिवीरु
धः ५० अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः एकैकश्येनानुपूर्वं भूत्वा भूत्वे
ह जायते ५१ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः इंद्रियेषु क्रियायज्ञा
न्ज्ञानदीपेषु जुह्वति ५२ ॥

मापितवाहिकादेवताभिः सोमलोकं प्रापितस्तद्भोगावसाने विलीनदेहो वृष्टिद्वारेणौषधीवीरुधादिसाम्यापत्ति
निष्क्रमेण न जायते। एवं पुनर्भवहेतुः पितृयानप्रावृत्तकर्ममार्ग इति। क्ष्मेश हे भूपते पुनर्भवमेवाह। एकैकश्येन प्रत्येकं
क्रमेण भूत्वा तत्तत्सान्निध्यं प्राप्येह भूमौ जायते ५१ तत्राधिकारिणमाह। निषेकादीनि। अन्यास्त्विष्टादिकार्येभ्यो
वं जन्म लभत इत्यर्थः। निवृत्तकर्मनिष्ठस्योपासनाविशेषमुपदिशन्नर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह। इंद्रि
येष्विन्द्रियादिनाथद्वा द्रव्ययज्ञेषु हिंसाद्युर्वारत्वात् मुख्यं निवृत्तं कर्मैव दर्शयन्नाह ज्ञानेन दीप्यन्त इति। तथा तेष्विं
द्रियव्यापाराणां इष्टापूर्तादीनामिंद्रियतन्मात्रार्पितानां भावयन्तीत्यर्थः। एवमुत्तरत्रापि ५२ ॥ ॥

ऊर्मौ दर्शनादिसंकल्पस्वरूपे मनसि वैकारिकं विकारयुक्तं वाचि विध्यादिलक्षणायां वाचि हि मनः कर्तृत्वादिविकारं भजति वर्ण
समाम्नाये समुदाये नहि शब्दाद्वाचः स्वरे अकारादिस्वरत्रयात्मके ५३ ओंकारं बिंदौ तं च नादे प्राणे सूत्रात्मनि मह
ति ब्रह्मणि। अग्निरिति तत्तदभिमानिन्यो देवताः अग्निर्ज्योतिरिति पूर्ववत् दिवाहः प्राह्णस्तस्यैवांशः राका शुक्लपक्षस्यान्तः य
द्वा प्राह्णो राके ति च पुनरुत्तम उत्तरमुत्तरमयनं स्वराट् ब्रह्मा ५४ एवं ब्रह्मलोकं गतस्य भोगावसाने सोऽपि क्रमं कारमाह। वि
श्व इति विश्वः स्थूलोपाधिः स स्थूलं सूक्ष्मे विलापयन् सूक्ष्मोपाधिस्तैजसो भवति। सूक्ष्मं च कारणे विलाप्य कारणोपाधिः

इंद्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः वाचं वर्णसमाम्नाये तमोंकारे स्वरे न्यसेत् ५३
ओंकारं बिंदौ नादे तं तं तु प्राणे महत्यमुं अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् ५४ वि
श्वस्तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् देवयानमिदं प्राहुर्भूत्वा भूत्वानुपूर्वशः ५५
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते य एते पितृदेवानामयने वेदनिर्मिते ५६ शा
स्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति आदावन्ते जनानां सद्बहिरन्तः परावरं ५७ ज्ञानं ज्ञे
यं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयं ५८

प्राज्ञो भवति कारणं च सर्वत्र साक्षित्वेनान्वयात् साक्षिस्वरूपे विलाप्य तुर्यो भवति। तेषां व्यभिचारिणां लये शुद्ध आत्मा भ
वति मुच्यत इत्यर्थः। य एते तयोर्भूत्वा निवर्तते तथा न निवर्तत इत्यर्थः वेदनिर्मिते ते धूममभिसंभवन्तीत्यादिना तेऽर्चिरम
भिसंभवतीत्यादिना च निश्चयेन विविच्य ज्ञायते इत्यर्थः जनस्थोऽपि देहस्थोऽपि न मुह्यति। तत्र हेतुमाह। आदाविति। ज
नानां देवादीनां आदौ कारणत्वेन अन्ते चावधित्वेन यत्सत् तथा बहिर्भोग्यं अन्तर्भोक्तृ परमवरं च उच्चनीचं ५७ त
मोऽप्रकाशो ज्योतिः प्रकाशः ननु सर्वमयं ज्ञानी स्वयमेव न तस्माद्व्यतिरिक्तं वस्तु किंचिदस्ति येन मुह्येदित्यर्थः ५८

ननु तर्हि कथं पृथगर्थः प्रतीयते तत्राह। आबाधितः तर्कविरोधेन सर्वतो बाधितोपि आभासः। प्रतिबिंबादि सर्ववस्तु
तथा यथास्तु नः। तद् दृष्टं इंद्रियादिकं सर्वमर्थत्वेन विकल्पितं। ननु यमाश्रितः ५९ दृष्टत्वात्तदेवाहस्त्यादीनां च सत्।
तादीनां छायारोक्तेर्भ्रमात्मवत् रूपं देहादि संघातांतरं भयपरिणामानां मध्ये कृतमपि अन्यतमापि न भवति। न ता
वत्तेषां संघातः पृथक्त्वानामिव वनानां एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः। [illegible]त्वेकस्मिन्वृक्षे आकृष्टे सर्ववनमा
कृष्टं। न च विकारः आरब्धो ऽवयवी अपि शक्यः न परिणामोपि। कुतः स किं स्वावयवेभ्यो वा रूपांतरप्राप्तेभ्यः परिण
मते वा पृथक् तदान्वितो वा न तावदेतत् पृथक् तथा अप्रतीतेः न चान्वितः स किं प्रत्यवयवमन्वेति। अंशेन वा आहो

आबाधितो ऽवभासोपि यथावस्तु तथास्तु नः दृष्टत्वादैंद्रियकं तद्दृष्ट्यर्थे विकल्पितं ५९
हस्त्यादीनामिहार्थानां छायानकतमापि हि न संघातविकारोपि न पृथक् नान्वितो ऽसौ ६०
धावतो ऽवयवित्वाच्च तन्मात्रावयवैर्विना न स्युर्ह्यस्त्यवयविन्यसन्नवयवी ततः ६१ ॥

अंगुलिमात्रेपि देहबुद्धिः स्यात्। द्वितीयेपि तत्स्यात्पृथगंगीकारे सत्यनवस्थाप्रसंगात्। अतो मध्यैवेत्यर्थः ६० एवं देहादेर्मिथ्या
त्वमुक्त्वा तद्वत्तेनोहस्त्यादीनामपि मिथ्यात्वमाह। धारयंतीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः। अ
वयवित्वात्तेषामपि तर्ह्यवयवः सत्य इति चेत्तत्राह। उक्तप्रकारेणावयविन्यसति। अवयवोप्यंततोसन्नेव स्यात् अ
वयविप्रतीत्यन्यथा। त्वनुपपत्तिं विना तत्सद्भावे प्रमाणाभावादित्यर्थः। तदुक्तं पंचमस्कंधे। एवं निरुक्तं क्षितिशब्दवृ
त्तमित्यादि ६१ ॥

राम:॥

नन्ववयविनो भावो ऽऽगमापायिषु बाल्यादिषु सोयं देवदत्त इति प्रत्यभिमानं न स्यात्। तदुक्तं भेदे ऽऽविर्भवति हि भाव
धर्मके ह्यनुयायि यत्तद्धर्मीति। तत्राह स्यादिति। वस्तुनः परमात्मनो विकल्पे भेदे ऽसति। यद्वा वस्तुनो विषयाविक।
ल्पे सति। पूर्वपूर्वारोपसादृश्यात्। स एवेति भ्रमः स्यात्। स च तावदेव यावत्। अविद्यानिवृत्तिः। ननु सर्वमिथ्यात्वे शा
स्त्रविधिनिषेधता कथं तत्राह। स्वप्नमध्ये जाग्रत्स्वापव्यवस्था यथेति ६२ इदानीं मुक्तमेवाद्वैतं भावनात्रयोपदे।
शेन दृढीकरोति। भावाद्वैतमिति चतुर्भिः। वर्तयन्नालोचयन् स्वानुभूत्या। आत्मतत्त्वानुभावेन त्रीन् जाग्रदादीन् त्रयः आ

स्यात्सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता
६२ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः वर्तयन्स्वानुभूत्येह त्रीन्स्वप्नान्धुनुते मु
निः ६३ कार्यकारणवस्त्वैक्यमर्शनं पटतंतुवत् अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्य
ते ६४ यद्ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणं मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदु

वस्थास्त्रयः स्वप्नाः इति क्रमेणः यद्वा वस्तुभेदबुद्धिरेकः स्वप्नः ततस्तत्तदधिकारभेदेन कर्मभेदेन कर्मसु भेदबुद्धिः इति द्वितीयः
ततो मत्कर्मसाधितमेतत्फलं ममैव भोग्यं इति तृतीयः तान् धुनुते निवर्तयति ६३ कार्यकारणयोर्वस्त्वैक्यं मर्शनं आलो
चनं तंतुरेव न पट इति ६४ मनोवाक्तनुभिः कृतानां कर्मणां समर्पणं तैः समर्पणमिति वा। उद्देश्यफलभेदो हि क्रियाभे
दे हेतुः ईश्वरार्पणे च तदभावात्। क्रियाणामद्वैतं ६५ ॥

आत्मनः स्वस्य जायादीनां च स्वार्थश्च कामश्च । तयोर्देहादीनां पंचभूतात्मकत्वेन भोक्तृत्वपरमात्मत्[illegible]नाः भेदालो
चनेनाधिकामयोर्यदैक्यदर्शनमित्यर्थः ६६ उक्तानाश्रमधर्मान्संक्षिप्याह । यद्यस्य येनोपायेन यतः सकाशात् ६७
प्रस्तुतमुपसंहरति । एतैरिति । अस्य श्रीकृष्णस्य गतिं तद्भक्तिमाश्रितस्य भक्तः ६८ एतच्च सर्वसाधारणमुक्तं । भे

आत्मजायासुतादीनामन्येषां सर्वदेहिनां यत्स्वार्थकामयोरैक्यं दृश्याद्वैतं तदुच्यते ६६ य
यस्य चानिषिद्धं स्याद्येन यत्र यतो नृप स तेनेहेत कार्याणि नरो नान्यैरनापदि ६७ एतैर
न्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ् नरः ६८ यथा
हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः यत्पादपङ्केरुहसेवया भवान्
क्रतून् कार्षीन्निर्जितदिग्गजः क्रमात् ६९ ॥

कृष्णस्य तु भक्तिरेव सर्वपुरुषार्थत्वे हेतुरिति यां दृष्ट्वा नैव त्वद्गृहे कृत्याह । यथा हीति । हे नृपदेव नृपेन्द्र वै यूयं सहायैर्दुस्त्य
जादिति वा आत्मनः श्रीकृष्णादेव प्रभोर्हेतोः अद्भुतभावः आपः उत्कर्षेण अतरत इत्यर्थः यावता वत्सेन भजतेति शेषः
यद्वा यथा । आपद्गणादुत्तीर्णास्त्वं तथा च क्रतून् कार्षीत् । तथा श्रीकृष्णादेव नारकात् संसारादुत्तरेत्यर्थः ६९

श्रीकृसेवामहत्तामवज्ञया भ्रष्टपदं तत्कृपया च सिध्यतीति दर्शयन् स्ववृत्तांतमाह। अहमिति सार्द्धैः पंचभिः

अहं पुराभवं कश्चिद्गंधर्व उपबर्हणः नाम्नातीते महाकल्पे गंधर्वाणां सुसंमतः ७०
रूपपेशलमाधुर्यसौगंध्यप्रियदर्शनः स्त्रीणां प्रियतमो नित्यं मत्तः स्वपुरलंपटः ७१
एकदा देवसत्रे तु गंधर्वाप्सरसां गणाः उपहूता विश्वसृग्भिः हरिगाथोपगायने
७२ अहं च गायंस्तद्विद्वान् स्त्रीभिः परिवृतो गतः ज्ञात्वा विश्वसृजस्तन्मे हेलनं शे
पुरोजसा ७३ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ७४ ततो दास्यामहं जज्ञे
तत्रापि ब्रह्मवादिनां शुश्रूषयानुषंगेण प्राप्तोहं ब्रह्मपुत्रतां ७५ धर्मस्ते गृहमेधी
यो वर्णितः पापनाशनः गृहस्थो येन पदवीमंजसा न्यासिनामियात् ७६ ॥

नाम्ना उपबर्हणः पेशलत्वं सौकुमार्यं रूपादिभिः प्रियं दर्शनं यस्य ७१।७२ तदा हूतो न विद्वान् उन्मत्तः सन् गायन्नेव
गतः ॥७३।७४॥७५॥७६॥ नृसिंहाय नमः नृसिंहाय नमः ॥

त्वंतुकृतार्थावेतिहर्षेणपुनःपूर्वश्लोकानेवपठति। यूयमिति ७७।७८।७९।८०।८१।८२ इतिश्रीभागव

यूयंनृलोकेवतभूरिभागालोकंपुनानामुनयोभियंति तेषांगृहानावसतीतिसाक्षा
गूढंपरंब्रह्ममनुष्यलिंगं ७७ सवाअयंब्रह्ममहद्विमृग्यकैवल्यनिर्वाणसुखानुभूतिः
प्रियःसुहृद्वःखलुमातुलेयआत्मार्हणीयोविधिकृद्गुरुश्च ७८ नयस्यसाक्षाद्भवपद्म
जादिभीरूपंधियावस्तुतयोपवर्णितं मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषसात्व
तांपतिः ७९ शुकउवाच इतिदेवर्षिणाप्रोक्तंनिशम्यभरतर्षभः पूजयामाससुप्रीतःकृ
ष्णंचप्रेमविह्वलः ८० कृष्णपार्थावुपामंत्र्यपूजितःप्रययौमुनिः श्रुत्वाकृष्णंपरंब्रह्म
पार्थःपरमविस्मितः ८१ इतिदाक्षायणीनांतेपृथग्वंशाःप्रकीर्तिताः देवासुरमनुष्या
द्यालोकायत्रचराचराः ८२ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेयुधिष्ठिरनारद
संवादेपंचदशोध्यायः १५ समाप्तोयंसप्तमस्कंधः ७ ॥ ॥

का २

रामः।

तेमहापुराणेसप्तमस्कंधेभावार्थदीपिकायांपंचदशोध्यायः १५ ॥ नृसिंहायनमः ॥ ॥

श्रीगणेशायनमः ऊष्यारण्ये नृसिंहैकनामसिंहो विराजते यन्नादतः पलायंते महाकल्मषकुंजराः १ विसर्गसंभवान्जीवान्स्वमर्यादासु संयुतान् विष्णुः पात्यखिलैरूपैरित्येवं षष्ठमेष्यते २ अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते अतिलंघितमर्यादभक्तरक्षणलक्षणं ३ अजामिलो मनुष्येषु महापापो यथाऽवितः विश्वरूपादिघाती च तत्पादेषु वासवः ४ अजामिलस्य भक्तत्वविस्पष्टदूतैर्निरूपितं संकेतभगवन्नामपुत्रस्नेहानुषंगजं ५ इंद्रोपि भगवद्भक्तः सख्येनोपेंद्रसेवकः तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः ६ तत्रादौ त्रिभिरध्यायैरजामिलकथोच्यते विश्वरूपकथा षड्भिरिंद्रदोषाकृये ततः ७ इंद्रस्यैव तु दोषाक्त्यै वृत्राख्यानं ततोऽष्टभिः द्वाभ्यां च मरुदाख्यानमेवं प्रकरणक्रमः ८ तत्रादौ प्रथमे विष्णोर्दूतैः पातकिमोचने तत्पापरव्यापनायोक्तं याम्यैर्धर्मादि

**ॐ राजोवाच निवृत्तिमार्गः कथित आदौ भगवता यथा क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः १ प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने योसावलीनप्रकृतेर्गुणसर्गः पुनः पुनः २॥**

लक्षणं १ अथ षष्ठस्कंधो व्याख्यायते पूर्वोक्तानुवादपूर्वकं निरंतरोक्तनरकपरिहारोपायं पृच्छति निवृत्तिमार्ग इति द्वाभ्यां आदौ द्वितीयस्कंधे वैश्वानरं यातीत्यादिना भगवता त्वया यथा पावत् यत्र येन मार्गेण क्रमेण योगो अर्चिरादिप्राप्तिः तेनोपलब्धो ब्रह्मा तेन सहासंसृतिर्मोक्षो भवति ब्रह्मणा सह ते देवविषयः प्राप्य यस्य न लीना प्रकृतिर्यस्य तस्य पुंसः पुनः पुनः गुणसर्गः भोगार्थदेहारंभरूपो यः मार्गः स च कथितः तृतीये दक्षिणेन यथा पार्यम्णः पितृलोकं व्रजंतीत्यादिना ॥ २॥ रामायनमः

अनुवर्णिता निरंतरं अध्याये व्याख्यात अनुपिस्यादौ यतः यस्मिन् ३ ४ द्वीपादीन् भागतो लक्षणतो मानतश्च धरामंडलसंस्था
नं ज्योतिषां विवराणां च इदं संस्थानं विभुर्यथासृजत् तथा व्याख्यातमित्यर्थः ५ नाना उग्रयातना येषु तान् नरकान् यथा येनोपा
येन नरो यान् न गच्छेत् तन्मे अधुना व्याख्यातुमर्हसि ६ तत्र तावन्महत्त्वाद्युक्तं प्रायश्चित्तं विना नरकाद्दुर्निवारं स्यादिति आह न चेदिति द्वा
भ्यां मनउक्तिपाणिभिः मनोवाक्कायैः कृतस्यांहसस्तैरेव इहैवापचितिं प्रायश्चित्तं न कुर्यात्तर्हि स नरः प्रेत्य मृत्वा नरकान्
ध्रुवं स उपैति ये मया ये भवतः कीर्तिताः तिग्मा दारुणा यातना येषु तान् ७ यस्मादेवं तस्मात्पापस्य निष्कृतौ प्रायश्चित्ते यतेत क

अधर्मलक्षणा नाना नरकाश्चानुवर्णिताः मन्वंतरश्च व्याख्यात आद्यः स्वायंभुवो यतः ३
प्रियव्रतोत्तानपादोर्वंशस्तच्चरितानि च द्वीपवर्षसमुद्राद्रिनद्युद्यानवनस्पतीन् ४ धरामंड
लसंस्थानं भागलक्षणमानतः ज्योतिषां विवराणां च यथेदमसृजद्विभुः ५ अधुनेह म
हाभाग यथैव नरकान्नरः नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि ६ श्रीशुक उवाच न चे
दिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्ति
ता मे भवतस्तिग्मयातनाः ७ तस्मात्पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना
दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ८ ॥

स्वा ४

दा मृत्योः पुरैव तत्रापि अविप
द्यतात्मना अम्रियमाणेनात्मना देहेन यद्वा अविपत् विपत्तिरहितो यावत् यतात्मना संयतेन मनसा तत्रापि आशु अन्यथा अती
व चिरकालेन द्विगुणं व्रतमर्हतीति द्वैगुण्यापत्तेः तत्र च पापस्य महत्त्वमल्पत्वं चावेक्ष्य तदनुरूपं प्रायश्चित्तं यतेत रुजां रोगाणां नि
दानवित् यथा वैद्यः तदनुरूपं चिकित्सेत तद्वत् ८ रामाय नमः ॥ ॥

तत्र चोदयति दृष्टश्रुताभ्यां दृष्टं राजदण्डादि श्रुतं नरकप्राप्त्यादि ताभ्यामात्मनः पापमहितं जानन्नपि भूयः प्रायश्चित्तानन्तरं करोति अथो अतः कारणात् द्वादशाब्दादिकं प्रायश्चित्तं तेन समूलस्य दोषस्यानिवृत्तेः निवृत्तौ वा पुनः पापप्ररोहायोगादिति भावः ८ किं च क्वचित् कदाचिदभद्रात्पापान्निवर्तते क्वचित् देवं पुनराचरति यथा कुञ्जरः स्नातोऽपि रजोभिरात्मानं मलिनीकरोति न पापस्य पुनर्दुर्निवारत्वेन नरकपातस्यावश्यंभावित्वात् प्रायश्चित्तं व्यर्थमिति १० परीहरति कर्मणेति कर्मणा कृच्छ्रादिप्रायश्चित्तेन कर्मणः पापस्य निर्हारो नाशः आत्यन्तिकः समूलो न हीष्यते अविद्वदधिकारित्वात् प्रायश्चित्तस्य तस्य भावस्तत्त्वं तस्मात् अतोऽवि

राजोवाच दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितं करोति भूयो विवशः प्रायश्चित्तमथो कथं ८ क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः प्रायश्चित्तमथोऽपार्थं मन्ये कुञ्जरशौचवत् १० श्रीशुक उवाच कर्मणा कर्मनिर्हारो न ह्यात्यन्तिक इष्यते अविद्वदधिकारित्वात् प्रायश्चित्तं विमर्शनं ११ नाश्नतः पथ्यमेवान्नं व्याधयोऽभिभवन्ति हि एवं नियमकृद्राजन् शनैः क्षेमाय कल्पते १२ तपसा ब्रह्मचर्येण शमेन च दमेन च त्यागेन सत्यशौचाभ्यां यमेन नियमेन च १३

द्यानाशाभावान्नष्टेऽपि तस्मिन् पापे तत्संस्कारेण पापान्तरस्य पुनः पुनः प्ररोहो भवत्येव किं तर्हि मुख्यं प्रायश्चित्तं तदाह प्रायश्चित्तं तु विमर्शनं ज्ञानं ११ तत्तु निःसम्भ्रमतः शनैर्लभते नान्य इति सदृष्टान्तमाह नेति पथ्यमेवान्नमश्नतः पुरुषान् यथा व्याधयो न बाधन्ते तथा हि नियमादिकर्त्ता क्षेमाय तत्त्वज्ञानाय समर्थो भवति १२ एतदेव विशदयति द्वाभ्यां तपसा एकाग्र्येण मनस इन्द्रियाणां च एकाग्र्यं परमं तप इति स्मृतेः ब्रह्मचर्येणाष्टाङ्गेन तदुक्तं स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणं शमो मनसो नियमनं दमो बाह्येन्द्रियाणां त्यागो दानं यमो हिंसादिर्नियमो जपादिः १३ ॥

१४ अस्यातिदुष्करत्वात् सुगममेवान्यत् प्रायश्चित्तमाह केचिदिति अनेनैवंभूता भक्तिप्रधाना विरला इति दर्शयति केवलया तप आदिनिरपेक्षया वासुदेवपरायणा इति नाधिकारिविशेषणमेतत् किं त्वन्येषामसंभवात्तत्रोपपत्तेरर्थात्सिद्धत्वपर्यवसानादनुवादमात्रं १५ एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह न तथेति पूयेत शुद्ध्येत तत्पुरुषनिषेवया कृष्णेऽर्पिताः प्राणा येन १६ तत्रापि हेतुः सध्रीचीनः अयं पन्थाः भक्तिमार्गः यतः क्षेमः क्षेमत्वे हेतुः न कुतश्चिद्विघ्नादेर्भयं यस्मिन् तदेवाह सुशी

कृष्णा २

देहवाक्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः १४ केचित्केवलया भक्त्या वासुदेवपरायणाः अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः १५ न तथा ह्यघवान् राजन् पूयेत तप आदिभिः यथार्पितप्राणस्तत्पुरुषनिषेवया १६ सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः सुशीलाः साधवो यत्र नारायणपरायणाः १७ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखं न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः १८ सकृन्मनः कृष्णपदारविन्दयोर्निवेशितं तद्गुणरागि यैरिह न ते यमं पाशभृतश्च तद्भटान् स्वप्नेऽपि पश्यन्ति हि चीर्णनिष्कृताः १९ रामः

लाः कृपालवः साधवो निष्कामाः यत्र मार्गे धर्मनिष्ठाः अतो न ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्ममार्गवन्मत्सरादियुक्तेभ्यो भयमिति भावः १७ भक्तेरन्यनिरपेक्षत्वमुक्तं कृच्छ्रादीनि तु भक्तिं विना न शोधयन्तीत्याह प्रायश्चित्तानीति महतामप्यशोधकत्वे दृष्टान्तमाह सुराकुम्भमिवापगा नद्य इवेति १८ भक्तिः स्वल्पापि पुनात्येवेत्याह सकृदिति तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानं यस्य तन्मनः तावतैव चीर्णानि कृतं प्रायश्चित्तं यैः १९ ॥ रामः।

दृष्टमर्थमितिहासेनोपपादयति अत्रचेतिमेमतः २० कान्यकुब्जेपुरेदास्याःपतिःनाम्ना अजामिलः २१ वंदीग्रहेणअक्षैर्द्यूतेनकैतवैर्वंचनादिभिश्चवृत्तिंजीविकांविभ्रत्‌युध्यन्‌घातयामासपीडयामास २२ आयुषःसंवधीमहान् कालोत्यगात्‌सकियानितिपत्तायामाह अष्टाशीत्यासंख्ययायुक्ताःसमासंवत्सराः २३ प्रवयसःवृद्धस्य २४ व

अत्रचोदाहरंतीममितिहासंपुरातनं दूतानांविष्णुयमयोःसंवादस्तन्निबोधमे २०
कान्यकुब्जेद्विजकश्चिद्दासीपतिरजामिलः नाम्नानष्टसदाचारोदास्याःसंसर्ग
दूषितः २१ वंद्यक्षैकैतवैश्चौर्यैर्गर्हितांवृत्तिमास्थितः विभ्रत्कुटुंवमशुचिर्या
तयामासदेहिनः २२ एवंनिवसतस्तस्यलालयानस्यतत्सुतान् कालोत्यगान्म
हान्राजन्नष्टाशीत्यायुषःसमाः २३ तस्यप्रवयसःपुत्रादशतेषांतुयोवमः वा
लोनारायणोनाम्नापित्रोश्चदयितोभृशं २४ सबद्धहृदयस्तस्मिन्नर्भकेकलभा
षिणि निरीक्षमाणस्तल्लीलांमुमुदेजरठोभृशम् २५ भुंजानःप्रपिबन्खादन्बा
लकंस्नेहयंत्रितः भोजयन्पाययन्मूढोनवेदागतमंतकं २६ सएवंवर्तमानोज्ञो
मृत्युकालउपस्थिते मतिंचकारतनयेवालेनारायणाह्वये २७ सपाशहस्तांस्त्रीन्दृ
ष्ट्वापुरुषान्भृशदारुणान् वक्रतुंडानूर्ध्वरोम्णआत्मानंनेतुमागतान् २८ ॥

द्धहृदयंयेनजरठोवृद्धः २५।२६ एतच्चतत्पुत्रलालनादिश्रीनारायणनामोपचारमाहात्म्येनतद्भक्तिरेवाभूदितिसिद्धा
न्तोपयोगित्वेनापिद्रष्टव्यं २७ वक्राणितुंडानिमुखानियेषांऊर्ध्वानिरोमाणियेषांतान् २८ रामायनमः ।।

प्लावितेन प्लुतत्वं नीतेन २९ हरिकीर्तनं निशम्यापतन् पतंतस्तद्भर्तुर्नाम ३० ॥ ३१ पुरःसराः अग्रस्थाः ३२ अस्य नयनं निषेधथ
३३ वयं युष्मान्न जानीमः इति न कोऽयं कार्यः यतोऽलौकिकाद्भुतरूपा यूयमित्याहुः सर्व इति सार्धाभ्यां लसंत्यः पुष्करमा
लाः संति येषां ३४ नूतनं वयो येषां निषंगः इषुधिः धनुर्निषंगादिभिः श्रीः शोभा येषां ते ३५ विगततिमिरं आलोक।

दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयं प्लावितेन स्वरेणोच्चैराजुहावाकुलेंद्रियः २९ नि
स्य२ शम्य म्रियमाणंब्रुवतो हरिकीर्तनं भर्तुर्नाम महाराज पार्षदाः सहसापतन् ३० विकर्ष
तोंतर्हृदयाद्दासीपतिमजामिलं यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा ३१ ऊचुर्निषे
धितास्तांस्ते वैवस्वतपुरःसराः के यूयं प्रतिषेद्धारो धर्मराजस्य शासनं ३२ कस्य वा कुत आ
याताः कस्मादस्य निषेधथ किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ३३ सर्वे पद्मपलाश
क्षाः पीतकौशेयवाससः किरीटिनः कुंडलिनो लसत्पुष्करमालिनः ३४ सर्वे च नूत्नव
यसः सर्वे चारुचतुर्भुजाः धनुर्निषंगासिगदाशंखचक्रांबुजश्रियः ३५ दिशो वितिमिरा
लोकाः कुर्वंतः स्वेन रोचिषा किमर्थं धर्मपालस्य किंकरान्नो निषेधथ ३६ श्रीशुक उ
वो२ वाच इत्युक्ते यमदूतैस्ते वासुदेवोक्तकारिणः तान्प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ३७
विष्णुदूता ऊचुः यूयं वै धर्मराजस्य यदि निर्देशकारिणः ब्रूत धर्मस्य नस्तत्त्वं यच्च धर्मस्य लक्षणं ३८

आलोकस्य प्रकाशो यासु तथाभूता दिशः कुर्वंतः सन्तः पीवतामित रत्नुचितमित्याहुः किमर्थमिति ३६ अहो इदं दूतादिज्ञानमत्यागते चौ
राणां अस्माद्दियाधर्मराजस्य किंकराः स्यन्न तं वदंतीति विस्मयेन प्रहस्य तान् प्रत्यूचुः मेघस्येव निर्ह्रादो ध्वनिर्यस्याः तया ३७ तत्त्वं स्वरू
पं लक्षणं प्रमाणं ३८ ॥ रामायनमः रामायनमः ॥

कथंस्वित्केन प्रकारेणास्थानं विषयः कारिणः कर्मिणः नृणामिति निर्धारणे वा नृणां मध्ये ये कारिणः तेष्वपि कतिचिदेवेत्यर्थः ३९ वेदेन प्रणिहितो विहितो धर्मः वेदप्रमाणक इत्यर्थः अनेन यो वेदप्रमाणकः स धर्मः यो धर्मः स वेदप्रमाणक इति स्वरूपं प्रमाणं चोक्तं यथाह। जैमिनिः चोदनालक्षणोऽर्थो धर्म इति व्याख्यातं च भट्टैः द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यत इति अथ [struck] स्याप्यधर्मस्य स्वरूपं लक्षणं च दंडस्थानं कथयन्नाह तद्विपर्ययः यो वेदेन निषिद्धः सोऽधर्मः निषेधश्च तस्मिन्प्रमाणमित्यर्थः वेदस्य प्रामाण्ये हेतुः वेदो नारायण इत्युक्तः स एव साक्षादित्युपचारः स्वयंभूरिति च निःश्वासमात्रेण स्वयमेव भवतीति तथा च श्रुतिः अस्य महतो भूतस्य नि-

कथंस्विद्ध्रियते दंडः किंवास्य स्थानमीप्सितं दंड्याः किं कारिणः सर्वे आहोस्वित्कतिचिन्नृणां ३९ यमदूता ऊचुः वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ४० येन स्वधाम्न्यमी भावा रजःसत्वतमोमयाः गुणनामक्रियारूपैर्विभाव्यंते यथातथं ४१ सूर्योऽग्निः खं मरुद्देवः सोमः संध्याहनी दिशः कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिणः ४२ एतैरधर्मो विज्ञातः स्थानं दंडस्य युज्यते सर्वे कर्मानुरोधेन दंडमर्हंति कारिणः ४३ ॥

श्वसितमेतद्यदृग्वेद इति ४० कोऽसौ नारायणस्तत्राहुः येन स्वधाम्नि स्वस्वरूपे अमी भावाः प्राणिनः गुणाः शांतत्वादयः नामानि ब्राह्मण इत्यादीनि क्रिया अध्ययनाद्याः रूपाणि वर्णाश्रमादयः तैर्विभाव्यंते विविच्यंते यथातथं यथावत् स नारायणः ४१ तथाप्यधर्मोऽनेन कृत इति कुतो ज्ञायते तत्राहुः सूर्य इति अहनी अहश्च रात्रिश्च कं उदकं कुः पृथिवी दैह्यस्य जीवस्य यथाहुः आदित्यचंद्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तमिति २

विपरीतानि अभद्राण्यपि कर्मिणां संभवंति यतस्तेषां गुणसंगोस्ति यदि कश्चिदकर्ता स्यात् तर्हि तस्याभद्राणि न स्युः नत्वे
तदस्तीत्याह नहि देहवानकर्मकृदस्तीति अतः सर्वे कर्मिणः कर्मिणां च पापस्यावश्यंभावित्वात्ते सर्वे दंडमर्हंतीत्यर्थः ४४ क
यं स्विदिष्यते दंड इत्यस्योतरं येनेति धर्मो वेति दृष्टांतः अधर्मानुसारेण दंडो धर्मानुसारेण सुखवदित्यर्थः ४५ न केवलं सू
र्यादय एव धर्माधर्मज्ञापकाः किंत्वर्थापत्तिरपीत्याह यथेति हे देवप्रवराः इह जन्मनि शांतघोरमूढत्वेन वा सुखदुःखमिश्र
त्वेन वा धार्मिकत्वादिना वा त्रैविध्यं भूतेषु यथोपलभ्यते तेन तथान्यत्र जन्मांतरेप्यनुमीयते त्रैविध्यान्यथानुपपत्या कल्प्यते ४६

संभवंति हि भद्राणि विपरीतानि चानघाः कारिणां गुणसंगोस्ति देहवान्नह्यकर्मकृत् ४४
येन यावान्यथाधर्मो धर्मो वेह समीहितः स एव तत्फलं भुंक्ते तथा तावदमुत्र वै ४५ यथे
ह देवप्रवरास्त्रैविध्यमुपलभ्यते भूतेषु गुणवैचित्र्यात्तथान्यत्रानुमीयते ४६ वर्तमा
नोन्ययोः कालो गुणाभिज्ञापको यथा एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनं ४७ मन
सैव पुरे देवः पूर्वरूपं विपश्यति अनुमीमांसतेपूर्वं मनसा भगवानजः ४८ ॥ रामः

वर्तमानजन्मना पूर्वापरजन्मधर्माधर्मज्ञानं भवतीति सदृष्टांतमाह वर्तमानो वसंतादिकालः अन्ययोर्भूतभविष्ययोः
वसंतयोर्ये गुणाः पुष्पफलादयः तेषामभिज्ञापको यथा एवमेतज्जन्म अन्ययोर्भूतभाविजन्मनोः धर्माधर्मौ निदर्शयतीति त
था ४७ अपि च धर्माधर्मज्ञानप्रकाशकोन्येषां धर्मराजस्तु मनसैव सर्वं पश्यतीत्याह पुरे संयमिन्यां स्थित एव देवो यमः
देहे स्थितो यमः देहे स्थितोंतर्यामी वा जीवस्य पूर्वरूपं धर्माधर्मादियुक्तं विशेषेण पश्यति अनंतरमपूर्वं रूपं मी
मांसते यद्यस्यानुरूपं तद्विचारयति यतोसौ भगवानजः ४८ रामायनमः रामायनमः ॥

जीवस्त्वीश्वरेणोपस्थापितं वर्तमानं देहं पश्यति न तु पूर्वमपरं वेत्याह यथेति अज्ञ अविद्योपाधिर्जीवस्तु व्यक्तमेव प्राचीन
नकर्माभिव्यक्तं वर्तमानमेव देहाद्युपास्ते अहमिति मन्यते पूर्वमपरं वा न वेद अत्र हेतुर्नष्टा जन्मनां स्मृतिर्यस्य अत्र दृष्टान्तः
तमसा निद्रया युक्तो यथा स्वप्ने अभिव्यक्तमेव देहाद्युपास्ते न तु जाग्रद्देहादि पूर्वं स्वप्नादिगतं वा तद्वदित्यर्थः ४८ एवंभूत
स्य जीवस्य संसारं प्रपंचयति पंचभिः श्लोकैः पंचभिः कर्मेंद्रियैः स्वार्थानुपादानादीन् कुरुते पंच च शब्दादीन् वेद पंचभिर्ज्ञा
नेंद्रियैः षोडशेन मनसा सह सप्तदशः षोडशो यो ध्यंतर्गतोपि स्वयं त्वेक एव सर्वेंद्रियविषयप्रतिसंधानात् त्रीन् ज्ञानक

यथाज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ४९
पंचभिः कुरुते स्वार्थान् पंच वेदाथ पंचभिः एकस्तु षोडशेन त्रीन् स्वयं सप्तदशोऽश्नु
ते ५० तदेतत् षोडशकलं लिंगं शक्तित्रयं महत् धत्तेनुसंसृतिं पुंसि हर्षशोकभयार्ति
दं ५१ देह्यज्ञो जितषड्वर्गो नेच्छन् कर्माणि कार्यते कोशकार इवात्मानं कर्मणाच्छाद्य
मुह्यति ५२ न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् कार्यते ह्यवशः कर्म गु
णैः स्वाभाविकैर्बलात् ५३ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत यथायोनि यथावीजं स्वभावेनबलि

र्मेंद्रियमनोविषयान् प्राप्नोति ५० तदेतल्लिंगशरीरं शक्तित्रयं गुणत्रयकार्यं महदनादि पुंसि जीवे अन्वनुसंसृतिं धत्ते ५१
नेच्छन् अनिच्छन्नपि अनेनैव कर्माणि कार्यते कोशकारः कीटविशेषः मुह्यति निर्गमोपायं न जानाति ५२ कार्यते इत्यत्रानुभवं प्र
माणयति न हीति गुणैः गुणकार्यै रागादिभिः स्वाभाविकैः पूर्वकर्मसंस्कारोद्भूतैः ५३ कर्मवशेन च तदनुरूपो देहो भवतीत्याह लब्ध्वे
ति अव्यक्तं अदृष्टं निमित्तं लब्ध्वा व्यक्ताव्यक्तं तदनुरूपं स्थूलं सूक्ष्मं च शरीरं भवति यथा योनि मातृसदृशं यथा बीजं पितृसदृ
शं स्वभावो वासनाप्रकर्षेण तयोरेकत्वेपि कर्मवासनया मातृपितृसदृशो देहो भवतीत्यर्थः ५४ रामायनमः ॥

संसारचक्रमुपसंहरंतो मुक्तिप्रकारमाहुः एवंस्थितिरीशासंगात्परमेश्वरभजनात् ५५ न देवं सामान्यतो धर्मादिनिर्णीय मुक्ता प्रस्तु
तस्याजामिलस्याधर्मप्रपंचयंतोऽजामिलमाहुः अयं हीति यावदध्यायसमाप्ति तत्रादौ श्लोकाभ्यां तस्य वेदतो नानानुवादो न्यायातिरेकप्रदर्शी।
नार्थः शीलं सुस्वभावः वृत्तं सदाचारः गुणा दमादयः तेषामालयः ५६ निरहंकृतो निरहंकारः ५७ आवृत्तो वनात्परावृत्तः ५८ भु।
जिष्यया भोगस्त्रिया दास्या मैरेयं मधुपेयं सुरां पीत्वा मदेनाघूर्णिते भ्रांते नेत्रे यस्याः ५९ विशेषेणाल्पं प्रतीनीवी यस्याः तया सह

एषप्रकृतिसंगेन पुरुषस्य विपर्ययः आसीत्स एव नचिराद्दीशसंगाद्विलीयते ५५ अयं हि
श्रुतसंपन्नशीलवृत्तगुणालयः धृतव्रतो मृदुर्दांतः सत्यवाक्मंत्रविच्छुचिः ५६ गुर्वग्न्यति
थिवृद्धानां शुश्रूषुर्निरहंकृतः सर्वभूतसुहृत्साधुर्मितवागनसूयकः ५७ एकदासौ व
नं यातः पितृसंदेशकृद्द्विजः आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ५८ ददर्श का
मिनं कंचिच्छूद्रं सह भुजिष्यया पीत्वा मधु मैरेयं मदाघूर्णितनेत्रया ५९ मत्तया विश्लथन्नीव्या
व्यपेतं निरपत्रपं क्रीडंतमनुगायंतं हसंतमनयांतिके ६० दृष्ट्वा तां कामलिप्तेन बाहुना परिरं
भितां जगाम हृच्छयवशं सहसैव विमोहितः ६१ स्तंभयन्नात्मनात्मानं यावत्सत्त्वं यथाश्रुतं
न शशाक समाधातुं मनो मदनवेपितं ६२ तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः तामेव
मनसा ध्यायन्स्वधर्माद्विरराम ह ६३

व्यपेतं स्वाचाराद्दुष्टं ६० कामोधिकेनानंगरागेण हरिद्रादिना लिप्तेन ६१
सत्त्वं धैर्यं श्रुतं ज्ञानं तद्बलेन स्तंभयन्नपि मदनेन कंपितं मनः समाधातुं न शक्तोऽभूत् ६२ तद्दर्शनमेव निमित्तं यस्य स्मर
व्याजस्य ग्रहस्य तेन ग्रस्तः विचेतनो विगतस्मृतिः ६३ ॥ रामायनमः शिवायनमः ब्रह्मणेनमः

श्री॰भा॰
ष॰टी॰
६

यावतास्य मनोरमा ६४ लंभितां परिणीतां ६५।६६ अवद्यमायुर्यस्य मलमेव तदीयमन्नादिकमत्तीति मलात् ६७ अकृत निर्वेशं अकृतप्रायश्चित्तं अस्यैव चाहितार्थं नेष्याम इत्याहुः यत्रेति ६८ इति षष्ठस्कंधे प्रथमोऽध्यायः १ द्वितीये विष्णुदूतैर्यमदूता...

तामेव तोषयामास पित्र्येणार्थेन यावता ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ६४ विप्रां स्वभार्यामप्रौढां कुले महति लंभितां विससर्ज चिरात्पापः स्वैरिण्यापांगविद्धधीः ६५ यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनं बभारास्याः कुटुंबिन्याः कुटुंबं मंदधीरयं ६६ यदसौ शास्त्रमुल्लंघ्य स्वैरचार्यतिगर्हितः अवर्तत चिरं कालमघायुरशुचिर्मलात् ६७ तत एनं दंडपाणेः सकाशं कृतकिल्बिषं नेष्यामोऽकृतनिर्वेशं यत्र दंडेन शुद्ध्यति ६८ इति श्रीभागवते म॰ पा॰ संहितायां षष्ठस्कंधे प्रथमोऽध्यायः १ शुक उवाच एवं ते भगवद्दूता यमदूताभिभाषितं उपधार्याथ तान् राजन् प्रत्याहुर्नयकोविदाः १ विष्णुदूता ऊचुः अहो कष्टं धर्मदृशामधर्मः स्पृशते सभां यत्रादंड्येष्वपापेषु दंडो यैर्ध्रियते वृथा २ प्रजानां पितरो ये च शास्तारः साधवः समाः यदि स्यात्तेषु वैषम्यं कं यांति शरणं प्रजाः ३ यद्यदाचरति श्रेयानितरस्तत्तदीहते स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ४ यस्यांके शिर आधाय लोकः स्वपिति निर्वृतः स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ५ स कथं न्यर्पितात्मानं कृतमैत्रमचेतनं विस्रंभणीयो भूतानां सघृणो द्रोग्धुमर्हति ६

...नाममाहात्म्यमद्भुतं श्रावयित्वा द्विजो विष्णुलोकं नीत ईर्यते १ नयकोविदा न्यायनिपुणाः १ धर्मदृशां सभां स्वधर्मः स्पृशतीत्याहुः यत्र सभायां यैः धर्मदृग्भिः तेषां तां सभां २ पितरः पितृवत्पालकाः शास्तारः अनुशिक्षकाः वैषम्यं अदंड्यदंडनं ३ एतत्सर्वातिनमधर्ममन्योपि करिष्यतीति महत्कष्टमस्मदित्याहुः यद्यदिति श्रेयान् श्रेष्ठः ४ विश्वस्तघातादपीत्याहुः यस्ये...

रामः
६

यो१

नन्वस्य पापिनो दूतैः किमर्थमाक्रोशः क्रियते तत्राहुः अयं हीति यद्यस्माद्विवशोपि हरेर्नाम व्याजहार उच्चारितवान् न केवलं तत्रा-
पि यञ्चितमात्रं हरेर्नाम अपि तु स्वस्त्ययनं मोक्षसाधनमपि सकृदुच्चरितं येन हरिरित्यक्षरद्वयं बद्धः परिकरस्तेन मोक्षाय गम-
नं प्रतीति स्मृतेः ७ ननु कर्मसाद्गुण्यकरं हरेर्नामेति युक्तं यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु न्यूनं संपूर्णतां याति स-
द्यो वंदे तमच्युतं इत्यादिवचनात् स्वातंत्र्येण त्वघनिवर्तकं हरेर्नाम कथं स्यात्तत्राहुः एतेनैवेति अघोनः अघवतः मघवच्छ-
ब्दवद्रूपं यत् आः इति छेदः आईषत् आभासमात्रं चतुरक्षरं यन्नाम जगाद एतेनैव केवलेन चतुरक्षरमित्यनेनाधिकं च
दर्शितं कथं जगाद नारायण आय आगच्छ इत्येवं विक्रोशरूपेण पुत्राह्वानेन अयं भावः कर्मांगत्वेपि हरिनाम्नः स्वादिर-
त्वादिवत्संयोगपृथक्त्वेन प्रायश्चित्तार्थत्वं युक्तमेव तथाहि अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः पुमान् विमुच्यते सद्यः।

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ७ एतेनैव ह्यघोनोस्य कृतं स्यादघनिःकृतं यदा नारायणायेति जगाद चतुरक्षरं ८ स्तेनः सुरापो मित्रध्रुक् ब्रह्महा गुरुतल्पगः स्त्रीराजपितृगोहंता ये च पातकिनोपरे ९॥

सिंहत्रस्तैर्मृगैरिवेत्यादिभिः पुराणे-
षु तावत्सहस्रशो नाम्नः स्वातंत्र्यमवगम्यते न चैतेऽर्थवादा इति शंकनीयं विधिशेषत्वाभावात् न च विध्यश्रवणादर्थवादता क-
ल्पनीया यदाग्नेयोष्टाकपालो भवतीत्यादिवदप्राप्तार्थत्वेन विधिकल्पनोपपत्तेः मंत्रेषु च मर्त्ता अमर्त्यस्य ते भूरि नाम मना-
महे विप्रासो जातवेदसः अस्य जानंतो नाम चिद्विवक्तन इत्यादिषु नाम्नस्तपोदानादिसर्वधर्माधिक्यमवगम्यते उपपादितं
च मंत्रार्थवादानामपि स्वार्थे प्रामाण्यं देवताधिकरणे तस्मात् श्रीनारायणनामाभासमात्रेणैव सर्वाघनिःकृतं कृतं
स्यादिति ८ ननु कामकृतानां बहूनां महापातकानां सहस्रशः आवर्तिनां द्वादशाब्दादिकोटिभिरप्यनिवर्त्यानां कथ-
मिदमेकमेव प्रायश्चित्तं स्यात्तत्राहुः स्तेन इति द्वाभ्यां ९॥ रामायनमः रामः रामः रामः राम

सुनिःकृतं श्रेष्ठं प्रायश्चित्तं इदमेव तत्र हेतुः यतो नामव्याहरणात् तद्विषया नामोच्चारकपुरुषविषया मदीयोयमयासर्व
तो रक्षणीय इति विष्णोर्मतिर्भवति १० अत्र ब्रूलमेवोपपादयति नेति हि यस्माद्ब्रह्मवादिभिर्मन्वादिभिरुदितैः कृतैर्निःकृतैः।
कृतैः तथा न विशुद्ध्यति उदाहृतैः उच्चारितैः यथा नामपदैरित्यनेन नामाभिधानादिक्रियायोगोपि नापेक्षित इति दर्शितं किं
च तन्नामपदोच्चारणं उत्तमश्लोकस्य गुणानां चोपलंभकं ज्ञापकं भवति न तु कृच्छ्रचान्द्रायणादिवत् पापनिवृत्तिमा
त्रापादिनामीत्यर्थः ११ नैकान्तिकं नात्यंतशोधकं तन्निःकृतं यस्मिन्कृतेपि असत्पथे असत्मार्गे मनो धावति चेत् त

सर्वेषामप्यघवतामिदमेव सुनिःकृतं नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः १० न निःकृ
तैरुदितैर्ब्रह्मवादिभिस्तथा विशुद्ध्यत्यघवान्व्रतादिभिः यथा हरेर्नामपदैरुदाहृतैस्तदुत्तम
श्लोकगुणोपलंभकं ११ नैकान्तिकं तद्धि कृतेपि निःकृते मनः पुनर्धावति चेदसत्पथे तत्क
र्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्वभावनः १२ अथैनं मापनयत कृताशेषाघनिः
कृतं यदसौ भगवन्नाममियमाणः समग्रहीत् १३ सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा
वैकुण्ठनामग्रहणमशेषाघहरं विदुः १४ ॥

तस्मात्कर्मणां पापानां निर्हारमात्यंतिकं नाशमिच्छतां हरेर्गुणा
नुवाद एव प्रायश्चित्तं यतोसौ खलु सत्वभावनः चित्तशोधकः १२ अथ तस्मादेनं मा अपनयत कृतमशेषा
णामघानां निःकृतं येन यद्यस्मात् समगृहीत् संपूर्णमुच्चारितवान् नामैकदेशेनाप्यलमिति भावः म्रियमाण इत्यनेन पुनः
पापान्तरसंभवः उक्तः ननु तत्कालं तन्नमेवोववदितं तदानीं कृच्छ्रादिविधिवन्नामोच्चारणविधेरसंभवात् न च विधिनाका
लालीवत् नामोच्चारणं पापहरमित्र प्रमाणमस्ति १३ ननु ययत्र नामग्रही न तु भगवन्नामत आह सांकेत्यं पुत्रादौ
संकेतितं पारिहास्यं परिहासेन कृतं स्तोभं गीतालापपूरणार्थं कृतं हेलनं किं विष्णुनेति सावज्ञमपि च वैकुण्ठनाम

ननु नायं संकल्पपूर्वकं वैकुंठनामाग्रहीत् किं तु पुत्रस्नेहपरवशः सन् तत्राह पतित इति अवशेनापि यो हरिरित्याह स यातनां नार्हति पुमानित्यनेनावर्णाश्रमादि नियमः सूचितः अवशत्वमेवाह पतितः प्रासादादिभ्यः स्खलितो मार्गे भग्नगात्रः संदष्टः सर्पादिभिः तप्तो ज्वरादिना आहतो दंडादिना १५ ननु महत्पापस्य महदेव प्रायश्चित्तं युक्तं न त्वल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत् तत्राह द्वाभ्यां गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां च लघूनि तारतम्येन ज्ञात्वा मन्वादिभिरुक्तानि अतस्तत्र तथैव व्यवस्था हरिनाम्नस्तु नेयं व्यवस्था उक्तो विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैरिति च।

पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः हरिरित्यवशेनाह पुमान्नार्हति यातनां १५ गुरूणां च लघूनां च गुरूणि च लघूनि च प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः १६ तैस्तान्यघानि पूयंते तपोदानजपादिभिः नाधर्मजं तद्धृदयं तदपीशांघ्रिसेवया १७ अज्ञानादथवा ज्ञानादुत्तमश्लोकनाम यत् संकीर्तितमघं पुंसो दहेदेधो यथानलः १८ ॥

चनात् न च सुरादिं द्रुपाने महापातकत्वस्मरणवन्नाम्नः स्वल्पप्रायश्चित्तस्मरणस्याप्रमतिभारः १६ किं च तैस्तपोदानादिभिस्तान्यघान्येव पूयंते न तु पूयंति अधर्मजातं मलिनं तु तस्य पापकर्तुर्हृदयं यद्वा तैर्नामघानां हृदयं संस्कारस्तं संस्कारं च्यो न शुद्ध्यति तदपीशांघ्रिसेवया कीर्तनादिना शुद्ध्यतीति अयं भावः महांत्यपि पापानि सकृदुच्चरितेनैव नाम्ना नश्यंति सकृत्स्वकीर्तितेन दीपेनेव गाढध्वांतानि तदावृत्यानुपापांतरस्यानुत्पत्तिः दीपधारणवत्तमोंतरस्य नतत्र वासनाद्यपात् हृदय शुद्धिः एतदर्थमेव तत्र तत्राव्रतिविधानं पापत्वयक्षमभवति स्मरतां तम हर्निशमित्यादिषु तद्देवात्राप्युक्तं गुणानुवादः खलु सत्वभावनः तदपीशांघ्रिसेवयेति च अतोस्य हरिनाम्नैव सर्वपापक्षयः वासनाक्षयस्तु महापुरुषदर्शनादिभिरिति १७ तथापि पापप्रायश्चित्तमिति ज्ञात्वा नोच्चारितमिति चेत्तत्राह अज्ञानादिति बालकेनाज्ञानादपि प्रदीप्तोग्निर्यथा

नन्विदमपि पर्यवसन्नुपदिष्टं श्रद्धादिहीनं च कथं प्रायश्चित्तं स्यात्तत्राह यथेति अगदमौषधं वीर्यवत्तममित्युक्तं यदृच्छया श्र
द्धादिहीनं उपयुक्तं भक्षितं पर्यवसन्नुपरवात् अजानतोपि स्वगुणमारोग्यं कुर्यात् मंत्रोपि नामात्मकः तथा स्वकार्यं कुर्यादेव न हि व
स्तुशक्तिः श्रद्धादिकमपेक्षत इत्यर्थः तदुक्तं विष्णुधर्मेषु हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः अनिच्छयापि संस्पृष्टो द
हत्येव हि पावकः १९ तं विप्रं अमूमुचन् मोचयामासुः २० प्रत्युदितान्निराकृताः सन्तः यात्वा गत्वा यथावद्यमराजाय कथयामा

यथागदं वीर्यतममुपयुक्तं यदृच्छया अजानतोप्यात्मगुणं कुर्यान्मंत्रोप्युदाहृतः १९ श्रीशुक उवाच
त एवं सुविनिर्णीय धर्मं भागवतं नृप तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् २० इति प्रत्युदि
ता याम्या दूता यात्वा यमांतिकं यमराज्ञे यथा सर्वमाचचक्षुररिंदम २१ द्विजः पाशाद्विनिर्मुक्तो गतभीः
प्रकृतिं गतः ववंदे शिरसा विष्णोः किंकरान् दर्शनोत्सवः २२ तं विवक्षुमभिप्रेत्य महापुरुषकिंकराः
सहसा पश्यतस्तस्य तत्रांतर्दधिरेनघ २३ अजामिलोप्यथाकर्ण्य दूतानां यमकृष्णयोः धर्मं भागव
तं शुद्धं त्रैविद्यं च गुणाश्रयं २४ भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः अनुतापो महानासीत् स्म
रतोशुभमात्मनः २५ अहो मे परमं कष्टमभूदविजितात्मनः येन विप्लावितं ब्रह्म वृषल्यां जायता
त्मना २६ धिङ्मां विगर्हितं सद्भिर्दुःकृतं कुलकज्जलं हित्वा बालां सतीं योहं सुरापामसतीमगां २७ ॥

सुः २१ दर्शनेनोत्सवो यस्य २२ विवक्षुं वक्तुमिच्छं तं ज्ञात्वा २३ त्रैविद्यं वेदत्रयीप्रतिपाद्यं गुणाश्रयं यमदूतानां धर्मं कृष्णदूतानां च
भागवतं भगवत्प्रणीतं शुद्धं निर्गुणं धर्ममाकर्ण्येति योज्यं भक्तिमान् आसीदित्युत्तरस्यानुषंगः २४।२५ अनुतापं प्रपंचयति
ति अहो इति चतुर्भिः येन मया वृषल्यां शूद्रायां जायमानेन ब्रह्म ब्राह्मण्यं विप्लावितं नाशितं २६ दुःकृतं दोषकर्त्ता

नास्त्यन्यो बंधुः पुत्रादिर्ययोस्तौ तपस्विनौ संतप्तौ अधुना तत्क्षणमेव २८। २९ ॥ इदानीं तस्य विमर्शपूर्वकं मोहत्यागमाह किमिदं-
मित्यष्टभिः साक्षात्प्रत्यक्षमिव जाग्रत्येव दृष्टं ३० ये मां व्यमोचयन् ते च क्व गताः ३१ यद्यप्यहमस्मिन् जन्मनि दुर्भगः पापीयानस्मि

वृद्धावनाथौ पितरौ नान्यबंधू तपस्विनौ अहो मयाधुना त्यक्तावकृतज्ञेन नीचवत् २८ सोऽहं व्य-
क्तं पतिष्यामि नरके भृशदारुणे धर्मघ्नाः कामिनो यत्र विंदंति यमयातनाः २९ किमिदं स्वप्न आ-
हो स्वित्साक्षाद्दृष्टमिहाद्भुतं क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ३० अथ ते क्व गताः सिद्धा-
श्चत्वारश्चारुदर्शनाः व्यमोचयन्नीयमानं बद्ध्वा पाशैरधो भुवः ३१ अथापि मे दुर्भगस्य विबुधो-
त्तमदर्शने भवितव्यं मंगलेन येनात्मा मे प्रसीदति ३३ क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः
क्व च नारायणेत्येतद्भगवन्नाम मंगलं ३४ विमुच्य तमिमं बंधमविद्याकामकर्मजं सर्वभूतसुहृ-
च्छांतो मैत्रः करुण आत्मवान् ३६ मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया विक्रीडितो य-
यैवाहं क्रीडामृग इवाधमः ३७ ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिं धास्ये मनो भगव-
ति शुद्धं तत्कीर्तनादिभिः ३८ श्रीशुक उवाच इति जातसुनिर्वेदः क्षणसंगेन साधुषु गंगा-
द्वारमुपेयाय मुक्तसर्वानुबंधनः ३९ ॥

पापि जन्मांतरेषु पुण्यवानित्याह विबुधोत्तमदर्शने इति निमित्तसप्त-
मी तेषां दर्शनात् पूर्वेण मंगलेन महता पुण्येन भवितव्यं येन दर्शनेन ३२ अन्यथा पूर्वपुण्यं विना कथं मृतवैकुंठनामग्र-
ह्यते वृषलीपते अनेनेति ग्रहणं ३३ ब्रह्मघ्नः विप्रत्वनाशकः ३४ ॥ स्पष्टौ ३५।३६।३७ अमिथ्याभूते पदार्थे धीर्यस्य तथाभू-
तः सन् देहादौ ममाहमिति मतिं हित्वा धास्ये ३८। मुक्तं सर्वमनुबंधनं पुत्रादिस्नेहो येन सः ३९ ॥ रामाय नमः ॥

सोऽहं तथा यतिष्यामि यतचित्तेंद्रियानिलः यथा न भूय आत्मानमंधे तमसि मज्जये ३५ स्थलच्युती

प्रत्याहृतइंद्रियग्रामोयेन ४० गुणेभ्योदेहेंद्रियादिभ्य आत्मानंवियुज्यविशोध्य आत्मसमाधिनाचित्तैकाग्र्येणभग वतोधाम्निरूपे ४१ तस्मिन्भगवद्धाम्निउपारतानिश्चलाधीर्यस्यसः तस्मिन्कालेद्राक्षीदितिवापुरः पुरतः ततश्चप्रा गुपलब्धानितानुपलभ्यप्रत्यभिज्ञायववंदे ४२।४३ उपसंहरतिएवमितिद्वाभ्यांविप्लाविताः सर्वेधर्मायेनहतंव्रतंस्व

सतस्मिन्देवसदने आसीनोयोगमास्थितः प्रत्याहृतेंद्रियग्रामोयुयोजमन आत्मनि ४०
ततोगुणेभ्य आत्मानंवियुज्यात्मसमाधिना युयुजेभगवद्धाम्निब्रह्मण्यनुभवात्मनि ४१
यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः उपलभ्योपलब्धान्प्राग्ववंदेशिरसाद्विजः ४२
हित्वाकलेवरंतीर्थेगंगायांदर्शनादनु सद्यःस्वरूपंजगृहेभगवत्पार्श्ववर्तिनां ४३ सा
कंविहायसाविप्रोमहापुरुषकिंकरैः हैमंविमानमारुह्ययययौयत्रश्रियःपतिः ४४ ए
वंसविप्लावितसर्वधर्मादास्याःपतिःपतितोगर्ह्यकर्मणा निपात्यमानोनिरयेहतव्रतःस
द्योविमुक्तोभगवन्नामगृह्णन् ४५ नातःपरंकर्मनिबंधकृंतनंमुमुक्षतांतीर्थपदानुकीर्तना
त् नयत्पुनःकर्मसुसज्जतेमनोरजस्तमोभ्यांकलिलंततोन्यथा ४६ यएतंपरमंगुह्यमि
तिहासमघापहं शृणुयाच्छ्रद्धयायुक्तोयश्चभक्त्यानुकीर्तयेत् ४७ नवैसनरकंयाति
नेक्षितोयमकिंकरैः यद्यप्यमंगलोमर्त्योविष्णुलोकेमहीयते ४८ ॥

दारनियादियस्य ४५ कर्मनिबं

धस्यपापमूलस्यकृंतनंछेदकमतःपरंनास्तिकस्मात्परंतीर्थपदस्यानुकीर्तनात् तत्रहेतुःयत् यतोनुकीर्तनात्त तोनुकीर्तनादन्यथाप्रायश्चित्तांतरैः रजस्तमोभ्यांकलिलंमलिनमेवतिष्ठतियतन्मनः ४६।४७ नचेक्षितोभवति ४८

म्रियमाणः अवशत्वेन श्रद्धाविहीनोपि ४९ इति अजामिलोपाख्याने द्वितीयः २ तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः । शांतयित्वा स्वदूतांस्तैर्वैष्णवैः किंकरीकृताः १ विसृष्टैर्निर्णीतशास्त्रार्थं यममुखेन द्रढयितुं तृतीयाध्यायारंभः तत्र यदुक्तं यमराजेन यथा सर्वमाचचक्षुरिति ततः किं तत्र वृत्तमिति पृच्छति निशम्येति मुरारेर्नैदेशिकैः किंकरैरेवं विहतान् अत एव हताज्ञा आज्ञा यस्य वशवर्ती अयं जनः सोपि तान् प्रति किमाह १ अत्याश्चर्यमेतदित्याह यमस्येति हे ऋषे यमस्य दंडभंगः

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितं अजामिलोप्यगाद्धाम किंपुनः श्रद्धया गृणन् ४९
इति श्रीभाग० अजामिलोपाख्याने द्वितीयोध्यायः २ राजोवाच निशम्य देवः स्वभटोपवर्णितं
प्रत्याह किं तान् प्रति धर्मराजः एवं हताज्ञो विहतान्मुरारेर्नैदेशिकैर्यस्य वशे जनोयं १ यमस्य
देवस्य न दंडभंगः कुतश्चनर्षे श्रुतपूर्व आसीत् एतन्मुने वृश्चति लोकसंशयं न हि त्वदन्य इति
मे विनिश्चितं २ शुक उवाच भगवत्पुरुषै राजन् याम्याः प्रतिहतोद्यमाः पतिं विज्ञापयामासुर्यमं सं
यमनीपतिं ३ यमदूता ऊचुः कति संतीह शास्तारो जीवलोकस्य वै प्रभो त्रैविध्यं कुर्वतः कर्मफला
भिव्यक्तिहेतवः ४ यदि स्युर्बहवो लोके शास्तारो दंडधारिणः कस्य स्यातां न वा कस्य मृत्युश्चामृतमेव वा ५

कुतश्चन कस्माच्चिदपि श्रुतपूर्वो नासीत् एतत् एतस्मिन्नर्थे यद्दानं श्रुतपूर्वं एतत् यमदूतनिराकरणं चासीत् अतः सर्व
स्यापि लोकस्य संशयो वर्तते तं च त्वत्तोन्यो न छिनत्तीति मे निश्चितं अतः कथय इति शेषः २ भगवतः पुरुषैः प्रतिहत उद्यमो
येषां ते याम्याः पुरुषाः ३ कति संति त्वत्तोन्ये इति त्रैविध्यं त्रिविधं सुखदुःखमिश्रं यद्वा त्रैविध्यं यथा भवति तथा कर्म कुर्वतः तद्रूपे
ण कर्मफलस्याभिव्यक्तिहेतवः कति संतीति ४ सन्तु बहवः को बाधस्तत्राह यदीति मृत्युर्दुःखं अमृतं सुखं तेषां विप्रतिपत्तौ
उभे कस्य स्यातां न कस्यापि परस्परविरोधेनोभयोरपि प्रतिबंधात् एकः सुखं कर्तुमिच्छति दुःखं चान्यः एकमत्ये तु कस्यचन स्यातां

ननु बहूनां कर्मिणां व्यवस्थया बहवः शास्तारो भवंतु तथा सति नायं दोषः स्यात्तत्राह॥ बहूनां कर्मिणां व्यवस्थया शास्तृत्व
बहुत्वे शास्तृत्वं स्यात् घटेत किंतु तदा यत् सर्वशास्तारि मुख्यं शास्तृत्वं तदेकदेशे उपचारमात्रमेव स्यात् यथा चक्रवर्त्तिनि
एवमुख्यं शास्तृत्वं मंडलवर्त्तिनामुपचारमात्रं निरंकुशत्वाभावात् ६ यस्मादेवं शास्तृबहुत्वं न घटते अतस्त्वमेक ए
व शास्ता शुभाशुभ विवि॥ नक्की तितथा ७ विप्रलंभितावंचितालंघितेत्यर्थः ८ तदेवाह॥ नीयमानमिति ९ तत्त्वतः यदि

किंतु शास्तृबहुत्वं स्याद्बहूनामिह कर्मिणां शास्तृत्वमुपचारो हि यथा मंडलवर्त्तिनां ६ अतस्त्व
मेको भूतानां सेश्वराणामधीश्वरः शास्ता दंडधरो नृणां शुभाशुभविवेकिनः तस्य ते विहितो दं
डो न लोके वर्त्ततेधुना चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलंभिता ८ नीयमानं तवादेशादस्माभिर्या
तनागृहान् व्यमोचयन् पातकं नं छित्वा पाशान् प्रसह्य ते ९ तांस्ते वेदितुमिच्छामो यदि नो म
न्यसे क्षमं नारायणेत्यभिहिते माभैरित्याययुर्द्रुतं १० शुक उवाच इति देवः स आपृष्टः प्रजासं
यमनो यमः प्रीतः स्वदूतान् प्रत्याह स्मरन् पादांबुजं हरेः ११ यम उवाच परो मदन्यो जगतस्त
स्थुषश्च ओतं प्रोतं पटवत् यत्र विश्वं यदंशतोस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लो

नोस्माकं तत्र मे हि मे हितं मन्यसे अन्यथाऽज्ञानतस्तदवज्ञानेन तवाप्यनर्थः स्यात् अतः कोहि ते यां प्रभावः यतो नाराय
णायेति केवलमभिहिते मा भैपं कुर्विति वदंतः शीघ्रमागताः १० संयमयतीति तथा ११ मत्तोन्यो जगतः स्तस्थुषश्च परो
धीश्वरोस्ति अहं तु जंगमानामेव तत्रापि नृणामेव तत्रापि पापिनामेव तत किंकरः सन् ईश्वरः स तु सर्वेश्वरः कोसौ
यत्र यस्मिन् विश्वमोतं प्रोतं च ऊर्ध्वं तिर्यक् तंतुषु पटवत् यदंशतः यस्य त्वंशभ्यो ब्रह्मविष्णुरुद्रेभ्योस्य स्थित्यादयो भवंति

एतत्प्रपंचयति त्रिभिः नामादिनामभिर्वाचायां निजायां तंत्यां दामभ्यां जनं यो वध्नाति दामभिर्गाः वलीवर्दानिव तद्वदिमे जीवाः।
नामकर्मभिर्निबंधैर्बद्धाः यस्मै बलिं वहंति यदधीनाः कर्म कुर्वंतीत्यर्थः १३ यस्य च लीला दुर्विभाव्येत्याह अहमिति द्वाभ्यां न
स्पृष्टं रजस्तमश्च यैः ईहितं अभिप्रेतं चेष्टितं वा न विदुः स्पृष्टमायाः मायया स्पृष्टाः ततस्तेभ्योऽन्ये न विदुरिति किं पुनर्वक्तव्यं
१४।१५ तन्मायामोहितत्वान्न जानंतीत्युक्तं अविषयत्वाच्चेत्याह यमिति गोभिरिंद्रियैः हृदा चित्तेन न विचक्षते न पश्यंति

यो नामभिर्वाचि जनं निजायां वध्नाति तंत्यामिव दामभिर्गाः यस्मै बलिं त इमे नामकर्मभिर्निबंध
बद्धाश्चकिता वहंति १३ अहं महेंद्रो निर्ऋतिः प्रचेताः सोमोग्निरीशः पवनोर्को विरंचः आदि
त्यविश्वे वसवोथ साध्या मरुद्गणाः रुद्रगणाः ससिद्धाः १४ अन्ये च ये विश्वसृजोमरेशा भृ
ग्वादयोस्पृष्टरजस्तमस्काः यस्येहितं न विदुः स्पृष्टमायाः सत्वप्रधाना अपि किं ततोन्ये १५
यं वै न गोभिर्मनसासुभिर्वा हृदा गिरा वासुभृतो विचक्षते आत्मानमंतर्हृदि संतमात्मनां चक्षुर्य
थैवाकृतयस्ततः परं १६ तस्यात्मतंत्रस्य हरेरधीशितुः परस्य मायाधिपमहात्मनः प्रायेण दू
ता इहवै मनोहराश्चरंति तद्रूपगुणस्वभावाः १७ ॥ भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिंगा
नि महाद्भुतानि रक्षंति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च १८॥

यद्वा वाचा[illegible]भ्युदितं यन्मनो न
मनुत इत्यादिश्रुतेः आत्मनां जीवानां आत्मानं द्रष्टारं आकृतयो रूपाणि चक्षुर्यथा कर्मभूतं न जानंति ततः परमाकृतीनां
प्रकाशकं नहि प्रमाता प्रमाणप्रमेययोर्विषय इति भावः एवंभूतः परमेश्वरोस्तीति पूर्वेणैव संबंधः १६ भवत्वेवंभूतोन्यः परमे
श्वरः येषु नरस्मान्निर्भयः पापिनं रक्षितं वक्तस्ते के तानाह तस्येति द्वाभ्यां तस्यैव रूपगुणाः शमादयः स्वभावः भक्तवात्सल्यादिर्येषां
ते १७ विष्णोर्भूतानि भृत्याः दुर्दर्शानि द्रष्टुमप्यशक्यानि लिंगानि रूपाणि येषां तानि तद्भक्तिमतः विमतान् परेभ्यः शत्रुभ्यः
सर्वतः अग्न्यादिभ्यः रक्षंति १८ ॥

नन्वविष्णुभक्ताश्चेत्कथमधर्मपथपातेन नवर्तंतः तत्राह धर्ममिति ऋषयो भृग्वादयः १९ ननु केऽपि चेन्न जानंति तर्हि स कर्तव्ये किं प्रमा
णं तत्राह स्वयंभूरिति कुमारः सनत्कुमारः वयमित्यात्मानमेव बहुमन्यमानो निर्दिशति २० हे भटाः २१ तमेव धर्ममाह एतावानिति २२
न चात्र प्रमाणं वक्तव्यं दृष्टत्वादित्याह नामोच्चारणेति येनैव केवलेन सकृदुच्चारितेन २३ ननु सकृदुच्चारितेन नामाभासेन कथं
सर्वपापक्षयः स्यात् अनुभूयमानत्वादरपि विधानात् तथाहि सायप्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते इति अनुदिनमिदमादरे।
ण श्रृण्वन्नितिस्त्रवर्णाकीर्तनध्यानं हरेरद्भुतकर्मणः जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितमित्याद्युक्तिरन्तेव श्रूणोत तत्र तत्र पठ्य
ते श्रूणामत्र च पापक्षयश्च भवति स्मरतां महर्निशमिति अत्र वचनमस्मात्संकीर्तने विघ्नो जगन्मंगलं महसां महतामपि केरक्षविद्वेषकी।
तिकनिःकृतिमित्यादिना सम्यक्कीर्तनादेव मन्यते किं च तथा सति किमिति मन्वादयो महाशास्त्रेशेषु स्मरेयुः तस्मादिदमनुपपन्नं।

धर्मंतुसाक्षाद्भगवत्प्रणीतंन वैविदुरृषयोनापिदेवाः नसिद्धमुख्याअसुरामनुष्याःकुतन्नुविद्याधरचारणादयः १९ स्वयंभूर्नारदःशंभुःकुमारःकपिलोमनुः प्रह्लादोजनकोभीष्मोबलिर्वैयासकिर्वयं २० द्वादशैतेविजानीमोधर्मंभागवतंभटाः गुह्यंविशुद्धंदुर्बोधंयंज्ञात्वामृतमश्नुते २१ एतावानेवलोकेऽस्मिन्पुंसांधर्मःपरःस्मृतः भक्तियोगोभगवतितन्नामग्रहणादिभिः २२ नामोच्चारणमाहात्म्यंहरेःपश्यतपुत्रकाः अजामिलोपियेनैवमृत्युपाशादमुच्यत २३ एतावतालमघनिर्हरणायपुंसांसंकीर्तनंभगवतोगुणकर्मनाम्नां विक्रुश्यपुत्रमघवान्यदजामिलोपिनारायणेतिम्रियमाणइयायमुक्तिं २४ ॥

मिवमत्राह एतावतेति भगवतो गुणानां कर्मणां च नाम्नां च सम्यक् कीर्तनमिति यत् एतावता
पुंसामघनिर्हरणाय पापक्षयमात्राय अलमुपयोगि भावमेवाह अजामिलो महापातक्यपि नारायणेति विक्रुश्य न तु सम्यक् कीर्ति।
यित्वा तच्च पुत्रं विक्रुश्य न तु हरिं अघवानप्यचिरेणापि म्रियमाणोऽपि स्वस्य चतोऽपि मुक्तिमवाप न त्वघनिर्हरणमात्रं अतो नामाभा
सेनापि सर्वपापक्षय इति तत्त्वं आकृतिश्रद्धादिविधायस्तु पापवासनाक्षयायैवेत्युक्तमेव हरेर्गुणानुवादः खलु सत्त्वभा ॥ ॥ ॥
वन इत्यत्र २४ ॥ रामायनमः

यद्येवं तर्हि द्वादशाक्षरादिस्मरणमिति तत्राह प्रायेणेति महाजनो मन्वादिः। अयं भावः यथामृतसंजीवनौषधीमजानंतो वै-
द्या रोगनिर्हरणाय त्रिकटुकनिंबादीनि स्मरंति तथा स्वयंभूशंभुप्रभृतयो द्वादशाक्षरादि केवलं महाजनो निगूढमिदमज्ञा-
त्वा द्वादशाक्षरादिकं स्मरंतीति किं च मायया देव्या अलं मोहितमतिरयं जनः मधुमधुरं यथा भवत्येवं पुष्पितायां पुष्पस्था-
नीयैरर्थवादैर्मनोहरायां त्रय्यां जडीकृता अभिनिविष्टा मतिर्यस्य अतो महत्येव कर्मणि अश्वमेधादौ युज्यमानो नाल्पे प्रवर्त-
ते इत्यर्थः तेहि प्राकृतस्य लोकस्य महति मंत्रादौ श्रद्धा अल्पे चाश्रद्धा तस्मादस्य ग्राहको नास्तीति तेनोक्तं यद्वा स्वाधीनः

प्रायेण वेद तदिदं न महाजनोयं देव्या विमोहितमतिर्बत माययालं त्रय्यां जडीकृतमतिर्मधु-
पुष्पितायां वैतानिके महति कर्मणि युज्यमानः २५ एवं विमृश्य सुधियो भगवत्यनंते सर्वा-
त्मना विदधते खलु भावयोगं ते मे न दंडमर्हंत्यथ यद्यमीषां स्यात्पातकं तदपि हंत्युरुगायवादः २६
ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः तान्नोपसीदत हरेर्गदया-
भिगुप्तान्नैषां वयं न च वयः प्रभवाम दंडे २७ तानानयध्वमसतो विमुखान्मुकुंदपादारविं-
दमकरंदरसादजस्रं निःकिंचनैः परमहंसकुलैरसंगैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् २८

सिद्धो अस्ति तावता अश्वमेधादि गाल्पादि निवारणाय एतमथान प्रयुंजते तथापि तुच्छत्वात्पापस्य न तन्निरसनाय परमं मंगलं हरे-
र्नामस्मरणमिति यद्वा नाममहात्म्यज्ञाने सर्वमुक्तिप्रसंगादिदोषबाहुल्यं ग्रंथविस्तरभयान्नुनातिप्रपंच्यते २५ भावयोगं भक्तियो-
गं अमीषां पातकं न स्यादेव यदि स्यात्तदुरुगायवादः कीर्तनं २६ तदेवं धर्मतत्त्वं निर्णीय भृत्याननुशास्ति त इति ये भगवत्प्रपन्ना-
स्ते देवैः सिद्धैश्च परिगीता पवित्रा गाथा वर्णितपवित्रकथाः अतस्तान्नोपसीदत तत्समीपमपि न गच्छत वयः कालोपि न
प्रभवति २७ के तर्हि दंडार्हा यमानेया इत्याह तानिति द्वाभ्यां असतः दुष्टान् तानेवाह मुकुंदपादारविंदयोर्मकरंदरसो
रसः तस्माद्विमुखान् कथंभूतात् निःकिंचनैरजस्रं जुष्टात् तेषां ज्ञापकमाह निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा

किंचजिह्वेत्यादि यद्येषांजिह्वेत्याद्यन्वयः नकृतंविष्णुकृत्यंभगवद्वृत्तंयैः २९ भगवंतंक्षमापयति तदिति अयंभावः नःत्व
त्पुरुषैरस्मदीयत्वेनस्थितैः स्वपुरुषैरेवपुरुषैर्यद्यस्मादसदन्याय्यंकृतंतत्तस्मात् स्वयमेवक्षम्यतांसहतांस्वानांस्वीयानांनः
नविदुषांअज्ञानांअहोगरीयसितस्मिन्क्षांतिर्युक्तेवमहंशपाठेस्वीयानांभक्तानांमाहात्म्यमविदुषांनः क्षमाकरो
त्वित्यर्थः ३० तस्मादित्यादिसंकीर्तनं जगतोपिमंगलरूपं ३१ एकांतिकत्वमेवाह शृण्वतामितिशुद्धादिभिस्तथान

जिह्वानवक्तिभगवद्गुणनामधेयंचेतश्चनस्मरतितच्चरणारविंदं कृष्णायनोनमति
यच्छिरएकदापितानानयध्वमसतोकृतविष्णुकृत्यान् २९ ततत्क्षम्यतांसभगवान्पु
रुषःपुराणोनारायणःस्वपुरुषैर्यदसत्कृतंनः स्वानामहोनविदुषांरचितांजलीनांक्षां
तिर्गरीयसिनमःपुरुषायभूम्ने ३० तस्मात्संकीर्तनंविष्णोर्जगन्मंगलमंहसां महतामपि
कौरव्यविद्ध्यैकांतिकनिःकृतिं ३१ शृण्वतांगृणतांवीर्याण्युद्दामानिहरेर्मुहुः यथा
सुजातयाभक्त्याशुद्ध्येन्नात्माव्रतादिभिः ३२ कृष्णांघ्रिपद्ममधुलिट्नपुनर्विसृष्टमा
यागुणेषुरमतेवृजिनावहेषु अन्यस्तुकामहतआत्मरजःप्रमार्ष्टुमीहेतकर्मयततएवर
जःपुनःस्यात् ३३॥

शुद्ध्येत् ३२ एतदुपपादयति कृष्णांघ्रिपद्मयोर्मधुलेढि आस्वादयतीतितथामधुलि
हतातुच्छत्वेनविसृष्टामेमायागुणाविषयास्तेषुपुनर्नरमते अन्यस्तुतन्मध्वास्वादरहितः अतएवकामाभिहतः
सत्रात्मनोरजःपापंप्रमार्ष्टुमपिकर्मैवप्रायश्चित्तरूपमीहेत यतःकर्मणाःपुनरपिरजःपापस्यादेवकुंजरशौच
वत्सत्वशोधकत्वाभावात् ३३॥ ॥

नैव विस्मितधियो बभूवुः किंतु सत्यमुक्तमित्यवमेनिरे ततः प्रभृति प्रतिशंकमानाः अस्मानेवैष हन्यादिति शंका
वहंतः तद्दृष्टमपि बिभ्यति स्म यद्वा तौ तरेतु विस्मितधियो जाताः ते च ततः प्रभृति बिभ्यति स्मेत्यर्थः ३४ कुंभसंभवो गस्त्यो
मलये आर्यवर्तः आसीनोऽध्यक्षोऽहरिमर्चयन् ३५ कुर्वन् विष्णोः सार्थ हरेः पादोत्थ शान्तित्यर्थः ३५ षष्ठे तु तृतीयः
चतुर्थ्यादि त्रिभिर्विभ्य स्यजन्मादिवत् यथा प्रचेतःसुत दक्षस्य वंशस्ताव तस्यतन्यते १ चतुर्थे तु प्रजासृष्टो दक्षेण

इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिंकरास्ते नैवाच्युताश्रयजनं प्रतिशंकमाना द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् ३४ इतिहासमिमं गुह्यं भगवान्कुंभसंभवः कथयामास मलय आसीनो हरिमर्चयन् ३५ इति श्रीभा० भगवद्गुणमहात्म्ये तृतीयोऽध्यायः ३ राजोवाच देवासुरनृणां सर्गो नागानां मृगपक्षिणां सामासिकस्त्वया प्रोक्तो यस्तु स्वायंभुवेंऽतरे १ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा अनुसर्गं यया शक्त्या ससर्ज भगवान्परः २ सूत उवाच इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः प्रतिनंद्य महायोगी जगाद मुनिसत्तमाः ३ शुक उवाच यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः अंतःसमुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृतां ४॥ धनं हरेः तपसा हंस

गुह्याख्यस्तोत्रेण च निरूप्यते ३ प्रसक्तानुप्रसक्तेन स्वायंभुवमनुना न्वये नाम प्रभावमाकर्ण्य वंशव्यासं पृच्छते ३ देवा
सुरेति द्वाभ्यां सामासिकः संक्षिप्तो यः प्रोक्तः तृतीयस्कंधे १ व्यासं विस्तारं तत्त्वतः यया शक्त्या यथा ससर्ज ताशक्तितत्प्रकारं च ज्ञातु
मिच्छामि अनुसर्गमनुवृत्तं सर्गं २।३ दक्षादिरूपेण ससर्जेति वक्तुं दक्षजन्मप्रकारमाह यदेति प्राचीनबर्हिषः पुत्राः यदा समुद्रमध्यादु

तपसा दीपितो मन्युर्येषां ते द्रुमाणां दग्धुमिच्छया ५ ताभ्यां वाय्वग्निभ्यां दह्यमानांस्तान् द्रुमान् वनस्पतीनां राजा सो
मउवाच मा द्रुमेभ्य इति नवभिः ६ हे महाभागा विशेषेण वर्धयितुमिच्छवः ७ प्रजापतीनां तद्रूपस्मोऽप्यहोत्तुचिंतमित्या।
हे अहो इति खिन्नः ऊर्जं मन्नमिषं रसमन्नं ८।९।१० आतिष्ठत आतिष्ठत आश्रयत सतां मार्गमुपशमं पित्रादिभिर्जुष्टं सेवितं ११

द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ५
ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह राजोवाच महान्सोमो मन्युं प्रशमयन्निव ६ मा
द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ७ अ
हो प्रजापतिपतिर्भगवान् हरिरीश्वरः वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ८
अन्नं चराणामचरा ह्यपदः पादचारिणां अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ९ यू
यं च पित्रान्वादिष्टा देवदेवेन चानघाः प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ १०
आतिष्ठत सतां मार्गं कोपं यच्छत दीपितं पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ११
तोकानां पितरौ बंधू दृशः पक्ष्म स्त्रियाः पतिः पतिः प्रजानां भिक्षूणां गृह्यज्ञानां
बुधः सुहृत् १२ अंतर्देहेषु भूतानामात्मास्ते हरिरीश्वरः सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो २
ह्यसौ १३ यः समुत्पतितं देह आकाशान्मन्युमुल्बणं आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते १४
१२

प्रजानां प्रजापतिरेव बंधुः अतः तज्जीविकानाशो न कर्तव्य इति दृष्टांतपंचकेनाह तोकानां बालानां मातापितरौ अ
ज्ञानां ज्ञानदो बुध एव सुहृत् १२ ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह अंतर्देहेष्विति वः युष्माभिः १३ आका
शाद्देहे समुत्पतितं आकस्मिकमित्यर्थः आत्मविचारेण यो नियच्छेत् १४ ॥ रामायनमः ॥

राम:

खिलानां शेषाणां वः युष्माकं च शिवमस्तु वृक्षरक्षणार्थं तदीयां कन्यां ददाति वार्क्षी वृक्षैः पालिता १५ आमंत्र्य संबोध्य विलाप्य आप्सरसीं अप्सरसः प्रम्लोचायाः सुतां कंडोर्मुनेः १६।१७ दुहितृवत्सलः इति तस्य कन्या वशगा एवेत्युक्तं मम मत्तः १८ प्रजापतिर्दक्षः १९ अबृंहिते असंवृद्धे विंध्यस्य पादान् संनिहितपर्वतान् २०।२१।२२ हंसगुह्याख्येन स्तोत्रेण कस्य स्तवस्य २२ परा

अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यतां १५ इत्यामंत्र्य वरारोहां कन्यामाप्सरसीं नृप सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे १६ तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः १७ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः रेतसा मनसा चैव तन्ममावहितः शृणु १८ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः देवासुरमनुष्यादीन्नभस्स्थलजलौकसः १९ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः विंध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः २० तत्राघमर्षणं नाम तीर्थं पापहरं परं उपस्पृश्यानुसवनं तपसातोषयद्धरिं २१ अस्तौषीद्धंसगुह्येन भगवंतमधोक्षजं तुभ्यं तदभिधास्यामि कस्यातुष्यद्यथा हरिः २२ प्रजापतिरुवाच नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबंधवे अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयंभुवे २३॥

बुधेयेऽस्तिपाठांतरं
१

परस्मै वीतमायन नमो दधे नमनं करोमि परत्वे हेतुः अवितथा अनुभूतिः चिद्रूपं । नित्यं यस्य अतो गुणत्रयाभासो जीवो निमित्तमाया चतयोर्बंधवे नियंत्रे एवमपि गुणेषु तत्त्वबुद्धिर्येषां तैर्जीवैरदृष्टं धाम स्वरूपं यस्य तत्र हेतुः निवृत्तमानं यस्मात् पाठांतरे निवृत्तमानमवधिश्च यस्मात् न हि कथं तस्य सिद्धिस्तत्राह स्व

अदृष्टधामत्वं दर्शयन्नाह नेति पुरुषः सखा जीवः अस्मिन् पुरे देहे वसन्नपि अत्रैव संवसतः सख्युर्यस्य सख्यं क
रणप्रवर्तकत्वादिकं नावैति न जानाति तस्मै कुतः अव्यक्तदृष्टेः प्रपंचदृष्टेः नहि द्रष्टा दृश्यो भवतीति श्रुतेः प्रपंचमात्र
पाते व्यक्ते प्रपंचे एव दृष्टिर्यस्य सः गुणो विषयो गुणिनो विषयिण इंद्रियादेः सख्यं प्रकाशत्वं यथा न वेत्ति तद्वत् २४ न
नु गुणो जड इत्यतो न जानाति जीवस्तु चेतनः किमिति न जानाति अत आह देह इति देहः असवः प्राणाः अक्षाणीन्द्रिया
णि मनवः अंतःकरणानि भूतानि च मात्राश्च तन्मात्राणि आत्मानं स्वस्वरूपं इंद्रियवर्गं तयोः परं देवतावर्गं
च न विदुः पुमान् जीवस्तु सर्वमेतद्रूपं वेद गुणांश्च तन्मात्रलक्षणान् वेद तज्ज्ञोपि सन् यं सर्वज्ञं न वेद तमनंतमीडे स्तौमि २५ अदृष्टधा

**न यस्य सख्यं पुरुषो वैति सख्युः सखा वसन् संवसतः पुरेस्मिन् गुणो यथा गुणिनो व्यक्तदृ
ष्टेस्तस्मै महेशाय नमस्करोमि २४ देहोसवोक्षा मनवो भूतमात्रानात्मानमन्यं च विदुः परं यत् स
र्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडे २५ यदोपरामो मनसो नामरूपरूपस्य दृष्ट
स्मृतिसंप्रमोषात् य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः २६ मनीषिणोन्तर्हृ
दि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः वह्निं यथा दारुणि पांचदश्यं मनीषया निःकर्षंति गूढ**

मत्वमुक्त्वा स्वप्रकाशत्वमाह यदेति यदा मनस उपरामः समाधिः न तु सुप्तौ विलयः न च जाग्रत्स्वप्नयोरिव विक्षेपः तदाह नामरूपे रूप्येते
येन तत्तथा तस्य उपरमे हेतुः दृष्टं दर्शनं स्मृतिश्च तयोः संप्रमोषात् नाशात् तदा यः केवलेन स्वरूपज्ञानेन प्रतीयते तस्मै हंसाय शुचि
शुद्धं मनः सद्म प्रतीतिस्थानं यस्य तस्मै नमः २६ एवंभूतः केषांचित् प्रतीयत इत्यपेक्षायामाह मनीषिण इति हृद्यंतर्विवेकिनो योगिनः कर्षन्ति वि
विच्य ध्यायंति तन्निर्वाणस्य आनुभूतिर्मम प्रसीदतामिति द्वयोरन्वयः एवं निष्कर्षता प्रतीयत इति भावः किंभूतं निष्कर्षंति स्वशक्ति
भिर्गूढमप्रकाशमानं कतिभिर्नवभिः पुनश्च त्रिवृद्भिः त्रिगुणाभिः सप्तविंशत्युपाधिभिर्गूढं अष्टाविंशतिः कर्षंतीत्यर्थः यद्वा
नवभिः प्रकृतिपुरुषमहदहंकारपंचतन्मात्ररूपाभिः त्रिवृद्भिस्त्रिगुणात्मकाभिः चकारात्षोडशविकाररूपाभिश्च कर्षंति भूत
निकर्षंति मनीषया अन्तर्हृदि संनिवेशितं निष्कलीकृतं पांचदश्यं पंचदशसामिधेनीयैर्मंत्रैः प्रकाश्यं यत्र लौकिकं वह्निमिवाहं का

अशेषाविशेषा यस्याः तस्या मायाया निषेधेन निर्वाणसुखे अनुभूतिर्यस्य अप्रसक्तनिषेधासंभवात् प्रसक्तिमाह स
एव सर्वनामा सर्वविश्वमूर्तिरिति तद्रूपत्वेपि वास्तवत्वाभावान्निषेधः संभवतीत्याह अनिरुक्तात्मशक्तिमा
याय स्य सः २८ ननु यदि केवलया स्वसंस्थया प्रतीयते तर्हि सर्वनामत्वं विश्वरूपत्वं चानुपपन्नं वागाद्यगोचरत्वा
दित्याशंक्य सर्वैर्नामभिर्वाच्यं प्रत्यक्षादिदृश्यं यत्तस्य स्वरूपं वस्तुतो मा भूत् तथापि मायया घटत इति श्लोकत्रये
णोपपादयन्नमस्करोति यद्यद्वचसा निरुक्तं अभिहितं धिया निरूपितं अक्षैर्गृहीतं अक्षिभिर्वा इंद्रियैर्निरूपितं गृहीतं उतापि मनसोपनि
रूपितं संकल्पितं यस्य स्वप्रकाशत्वं तस्य तत् स्वरूपं मा भूत् स्वरूपत्वाभावे हेतुः हि यस्मात्तद्गुणानामेव रूपं तत्पाठांतरे गुणैर्वृद्धि
तं सत्त्वगुणव्यतिरिक्तः यतो गुणानामप्यायविसर्गाभ्यां प्रलयोत्पत्तिभ्यां लक्ष्यत इति चेत्तन्नाधिष्ठानं विना तयोरसंभवात् यद्वा यस्य

स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः स सर्वनामा स च विश्वरूपः प्रसीदतामनि
रुक्तात्मशक्तिः २८ यद्यन्निरुक्तं वचसा निरूपितं धियाक्षिभिर्वा मनसा वोत यस्य मा भूत् स्वरूपं गु    ५५२
णरूपमेव हि स वै गुणापायविसर्गलक्षणः २९ यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते।
कार्यते च परावरेषां परमं प्राक्प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकं ३०॥

स्वरूपं मा भूत् भवति तस्मै नमः इति तृतीयेनान्व
यः २९ तदेवं वस्तुतो गुणस्वरूपत्वाभावमंगीकृत्य अनिरुक्तात्मशक्तिरित्यनेन द्योतितं मायया सर्ववाच्यत्वेन विश्वरूपत्वमाह यस्
मिन्नधिकरणे यतोपादानात् येन करणेन यस्य संबंधि यस्मै संप्रदानाय यदीप्सिततमं यः कर्ता कुरुते स्वतंत्रः कार्यते चान्येन प्रयो
ज्यकर्त्ता तद्ब्रह्मेति प्रत्येकं संबंधः अत्र च सप्तभिर्यच्छब्दैः सप्तविभक्त्यर्था दर्शिताः यथेति च क्रियाकारकसंबंधप्रकारवाचि
नामव्ययानामर्थाः कुरुते कार्यते चेति स्वार्थपरार्थक्रियान्वयाः अत्र सर्वव्यादर्शिताः चशब्देन भावकर्मादिविहितप्रत्ययार्थाः संगृ
हीताः तद्ब्रह्मैवेति कुतस्तत्राह तदेव तेषां कारणं ततः कुतः सर्वेभ्यः प्राक्प्रसिद्धं ननु च ब्रह्मादयः तद्धेतवः श्रूयते अवरेषद्।
पूर्यते तत्र क एव ब्रह्मैव तद्धेतुः तत्राह परेषामवरेषां च हेतुः नापि परमकारणं ननु सर्वकारणत्वे तस्य किं नाम सकर्तृकारि भवेत्तदानी
मन्यस्याभावात् सत्यं निरपेक्षमेव तत्कारणमित्याह अनन्यत् द्वितीयरहितं एकं सजातीयभेदशून्यं च तस्मै नमः इत्युत्तरेणान्वयः ३०

नन्वेवं ब्रह्म चेद्विश्वस्य हेतुः तर्हि किं न कदाचिदनीदृशं जगदिति वदंतो मीमांसकाः कुतोत्र विवदंते तेन्ये स्वभाववादि-
नः संवदंते ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनः पुनर्मुह्यंतीति तत्राह यस्य मायाया अविद्यायाः शक्तयो विवादस्य कलहस्य च संवा-
दस्य भुवः स्थानानि भवंति तस्मै नमः ३१ ननु किं तद्ब्रह्म यस्य शक्तयो विवादादिकमस्तीत्युपास्यत्वेन विधीयते नास्तीति भुवो भ-
वंति तत्राह अस्तीति योग उपासनाशास्त्रं तत्र हि विराड्रूपेणोपासनायां पातालपादीकमस्तीत्युपास्यत्वेन विधीयते।
नास्तीति सांख्यं ज्ञानशास्त्रं तत्र त्वपाणिपादः अचक्षुरश्रोत्रमिति च पादादिनास्तीति निषिध्यते तयोर्योगसांख्ययोर्यत्।
किंचित्समं अनुवर्तमानं अवेक्षितं प्रतीतं तत् बृहत् ब्रह्म विवादोऽप्यविवादास्पदं ब्रह्मेत्यर्थः विवादपदं स्फुटयति भि-

यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवंति कुर्वंति चैषां मुहुरात्ममोहं
तस्मै नमोऽनंतगुणाय भूम्ने ३१ अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भि-
न्नविरुद्धधर्मयोः अवेक्षितं किंचन योगसांख्ययोः समं परं ह्यनुकूलं बृहत्तत् ३२ यो-
ऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननंतः नामानि रूपाणि च जन्मकर्मभि-
र्भेजे स मह्यं परमः प्रसीदतु ३३॥

न्नौ अस्ति नास्तीत्येवं रूपौ विरुद्धौ धर्मौ ययोः तयोर्भिन्नविषयत्वे विरो-
धो न स्यादित्येकस्थयोरित्युक्तं एकविषययोः कुतः वस्तुनिष्ठयोः पादादिविधिनिषेधयोरेकवस्तुनिष्ठत्वात् समत्वे।
हेतुः परं हि यतो विधिप्रतिषेधयोरविषयः तयोः पादादिविषयत्वात् तर्हि तथा अविषयस्य सद्भावे किं प्रमाणं तत्राह अनुकू-
लं अधिष्ठानं विना पादादिकल्पनायोगात् अवधिं विना तन्निषेधायोगाच्च तयोरुपपादकत्वेन सिद्धमित्यर्थः तस्मै नम
इति पूर्वस्यानुषंगः ३२ ननूदासीनस्य समस्य नमस्कारे को लाभस्तत्राह य इति पादमूलं भजतामनुग्रहार्थं प्राकृतनाम-
रूपरहितोऽपि जन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानि रूपाणि कर्मभिर्नामानि च यो भेजे तत् कुतः भगवानचिंत्यैश्वर्यः

ननुत्वादृशाः सकामा गणेशादीन् प्रार्थयंते नेतु तान् विहाय कथं भगवंतमेव प्रार्थयसे तत्राह प्राकृतैरर्वाचीनैर्ज्ञानप
थै रूपासनात्तद्वासनानुसारेण यो देहगतोंतर्यामी तत्तद्देवतानुसारूपेण विविधो भाति यथा वायुः पार्थिवं चंपकादिगं
धमेदं आश्रितस्य नानागंधवान् विभाति रेणोर्गुणान् धूसरत्वादिकमाश्रितस्य नानारूपवान् प्रतीयते न तु तस्यैव तत्तद्दे
वतारूपेण फलदातृत्वात् स ईश्वर एव मम मनोरथं संकरोतु किमंतगीतैर्डुभिर्देवतांतरैरित्यर्थः नतुतंज्ञात्वा सुयोयो
यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं स तया श्रद्धया युक्तस्तस्याराधनमीह

यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति यथानिलः पार्थिवमाश्रितो गुणं
स ईश्वरो मे कुरुतान्मनोरथं ३४ शुक उवाच इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे आ
विरासीत् कुरुश्रेष्ठ भगवान् भक्तवत्सलः ३५ कृतपादः सुपर्णांसे प्रलंबाष्टमहाभुजः
चक्रशंखासिचर्मेषुधनुःपाशगदाधरः ३६ पीतवासा घनश्यामः प्रसन्नवदनेक्षणः
वनमालानिवीतांगो लसच्छ्रीवत्सकौस्तुभः ३७ महाकिरीटकटकः स्फुरन्मकरकुं
डलः कांच्यंगुलीयवलयनूपुरांगदभूषितः ३८ ॥

ते लभते च ततः कामान् मयैव विहितान् हिता
न् ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहमिति चेति ३४ संस्तुवतो दक्षस्य स भगवान् प्रत्यक्षोभूत् ३५ तं वर्णयति सार्द्धै
श्चतुर्भिः सुपर्णांसे स्कंधे कृतौ पादौ येन प्रलंबा अष्टौ महांतो भुजा यस्य चक्राद्यष्टायुधधरः ३६ प्रसन्ने वदने
क्षणे च यस्य वनमालया निवीतं कंठादिपादांतं व्याप्तमंगं यस्य लसंतौ श्रीवत्सकौस्तुभौ यस्य ३७ महांति किरीट
कटकानि यस्य स्फुरंती मकरकुंडले यस्य कांच्यादिभिर्विभूषितः वलयमत्र पादाभरणं ज्ञेयं कटकस्यो
क्तत्वात् ३८॥

त्रैलोक्यमोहनं श्रीपुरुषोत्तमाख्यं सुरयूथपैर्लोकपालैः ३९।४०।४१ आपूरितानि मनोद्वाराणीन्द्रियाणि येषां ह्रदिन्यो नद्यो निर्झरैरापूर्यन्ते तथा महानन्दपूर्णत्वेनाकृतिकत्वाद्वागादीनां न च किंचिदुक्तुं शक्तोभूदित्यर्थः यद्यप्यसौ। नावोचत्तथापि चित्तज्ञः इदं वक्ष्यमाणमाह ४२ मा वं भक्तिं गतः प्राप्तः सन् ४३ यत् यतस्तेन य अस्य विश्वस्य उद्बृंहणं वृद्धिकरमतस्तेऽहं प्रीतः मत्तः प्रसादो लोकसमृद्ध्यर्थत्वेन त्वत्प्रीतेः किं कारणं तत्राह ममेति भूतानां विभूतयः समृद्धयो भूया

त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः वृतो नारदनन्दाद्यैः पार्षदैः सुरयूथपैः ३९ स्तूयमानोनुगायद्भिः सिद्धगंधर्वचारणैः रूपं तन्महदाश्चर्यं विचक्ष्यागतसाध्वसः ४० ननाम दंडवद्भूमौ प्रहृष्टात्मा प्रजापतिः न किंचनोदीरयितुमशकत्तीव्रया मुदा ४१ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः तं तथावनतं भक्तं प्रजाकामं प्रजापतिं चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ४२ श्रीभगवानुवाच प्राचेतस महाभाग संसिद्धस्तपसा भवान् यच्छ्रद्धया मत्परया मयि भावं परं गतः ४३ प्रीतोहं ते प्रजानाथ यत्तेस्योद्बृंहणं तपः ममैष कामो भूतानां यद्भूयासुर्विभूतयः ४४ ब्रह्मा भवो भवंतश्च मनवो विबुधेश्वराः विभूतयो मम ह्येता भूतानां भूतिहेतवः ४५ तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रियाकृतिः अंगानि क्रतवो जाता धर्म आत्मासवः सुराः ४६॥

सुरिति यत् एष एव मम कामः अतो मत्कामपूरणादेवाहं प्रीतोस्मीत्यर्थः ४४ भूतिविस्तारप्रयत्नश्च भवतो चितएवेत्याह ब्रह्मेति भवन्तः प्रजापतयः भूतेर्हेतवः ४५ विश्व[illegible]त्यर्थः॥ ननु तपसाहं प्रीत इत्युक्तं तदेव तपः स्तुवन् प्रसंगादन्यान्यपि लोकवृद्धिकराणि विद्यादीनि स्तौति तप इति यो यमनियमादि सहितध्यानं मे हृदयं विद्या मीजमंत्रजपः साध्यानं तनोतीति तनुर्देहः क्रिया ध्यानादिविषयः आधारो भावनाशब्दवाच्यस्तेन हि ध्यानादिकमात्रि क्रियत इत्याकृतिः जाताः सुनिष्पन्नाः क्रतवो गानि शिरो वा एतद्यज्ञस्य यच्छीर्षा ग्रीवा उपसदः चक्षुषी आज्यभागावि

तपसः संतानवृद्धिहेतुत्वं प्रदर्शयितुं द्वितीयपत्नीयोगमित्याह मासमाह चतुर्भिः अहमेवेति वस्त्वंतरव्यावृत्तिः आसमेवेति क्रियांतरव्यावृत्तिः अंतरं ग्राहकं बहिर्ग्राह्यं संज्ञानमात्रं चैतन्यमात्रं अव्यक्तं इंद्रियवृत्तिरनभिव्यक्तं अतएव प्रसुप्तमिव विश्वतः सर्वतः ४७ गुणतो मायातः गुणमयो विग्रहो ब्रह्मांडं ततः तदेव अज अयोनिजः ४८ खिलमसमर्थ

अहमेवासमेवाग्रे नान्यत्किंचांतरं बहिः संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ४७
मय्यनंतगुणेऽनंते गुणतो गुणविग्रहः यदासीत्तत एवाद्यः स्वयंभूः समभूदजः ४८
स वै यदा महादेवो मम वीर्योपबृंहितः मेने खिलमिवात्मानमुद्यतः सर्गकर्मणि ४९
अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणं नव विश्वसृजो युष्मान्येनादावसृजद्विभुः ५०
एषा पंचजनस्यांग दुहिता वै प्रजापतेः असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यतां ५१
मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः मिथुनव्यवायधर्मिण्यां भूरिशो भावयिष्यसि ५२
त्वत्तोऽधस्तात्प्रजाः सर्वा मिथुनीभूय मायया मदीयया भविष्यंति हरिष्यंति च मे बलिं ५३
शुक उवाच इत्युक्त्वा मिषतस्तस्य भगवान्विश्वभावनः स्वप्नोपलब्धार्थ इव तत्रैवांतर्दधे हरिः ५४ इति श्रीभा० षष्ठस्कं० चतुर्थोऽध्यायः ४ ॥

मिव ४९ मे मया तपतप्येत्यभिहितः स। नु येन तपसा ५० संततिवृद्ध्युपायमाह एषेति अंग हे दक्ष पंचजनाख्यस्य प्रजापतेः ५१ मिथुनस्य यो व्यवायो रतिः स एव धर्मो यस्य स त्वं तथाभूतायां तस्यां ५२ मायया निमित्तभूतया स्त्रिया सह मिथुनीभूय संभविष्यंति पुत्रादिरूपेणोत्पत्स्यते ५३ इति श्रीभाग० षष्ठे चतुर्थः ४ रामः रामः रामः ॥

५४

पंचमे नारदेनाप्यवाचः कृतैस्तु नाशितान् सुतानाकर्ण्य दक्षोमुं शशापेति निरूप्यते १ अपृथक् धर्मशीला एकाचार स्वभावाः २ तत्र प्रतीच्यां दिशि सिंधोर्नद्याः समुद्रस्य च यत्र संगमस्तत्र स्थं नारायणसरो नाम तीर्थं प्रययुरित्यन्वयः सुमहत् अतिविस्तीर्णं ३ विनिर्धूतो मलो रागादिर्यस्मात् स आशयो येषां तानप्युत्पन्नानपि पित्रादेशाज्ञया न प्रजा

शुक उवाच तस्यां स पांचजन्यां वै विष्णुमायोपबृंहितः हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः १ अपृथक्धर्मशीलास्ते सर्वे दाक्षायणा नृप पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशं २ तत्र नारायणसरस्तीर्थं सिंधुसमुद्रयोः संगमो यत्र सुमहन्मुनिसिद्धनिषेवितं ३ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः धर्मे पारमहंस्ये च प्रोत्पन्नमतयोप्युत ४ तेपिरे तप एवोग्रं पित्रादेशेन यंत्रिताः प्रजाविवृद्धये यत्तान् देवर्षिस्तान् ददर्श ह ५ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः अदृष्ट्वांतं भुवो यूयं बालिशा बत पालकाः ६ तथैकपुरुषं राष्ट्रं बिलं चादृष्टनिर्गमं बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिं ७ नदीमुभयतोवाहां पंचपंचाद्भुतं गृहं क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमि ८ कथं स्वपितुरादेशमविद्वांसो विपश्चितः अनुरूपमविज्ञाय अहो सर्गं करिष्यथ ९ ॥

विवृद्धये यत्तान् यत्नान् ददर्श ५ अहो मोक्षमार्गाधिकारिणः संति एते प्रवृत्तिनिष्ठैः कर्मभिर्न कुप्यन्निति कृपया तानि गूढार्थैर्वाक्यैः रूपयद्विशति स्म तदाह उवाचेति चतुर्भिः पालकाः सेतोपि बालिशा अज्ञाः पृथक् कथं प्रजाः स्रक्ष्यथ बत तेति खेदे वा लकाः इति पाठे बालिशत्वे हेतुः ६ एक एव पुरुषो यस्मिन् तद्राष्ट्रं अदृष्टस्य न निर्गमः बिलं च स्यादिद्धि तो यानानो अविज्ञाय कं सर्गं करिष्यथेति तेनान्वयः ७ पंचपंचानां पंचविंशतेरद्भुतं गृहं क्षौरपव्यं तुरैः पविभिः वज्रेण निर्मितमिवातितीक्ष्णं दृष्ट्वैव तर्ष्यः स्वयं स्वतंत्रं भ्रमि भ्रमणशीलं ८ विपश्चितः सर्वज्ञस्य स्वपितुरादेशमात्मनोनुरूपमविद्वांसोजानंतः एवी

वाचः कूटं परोक्षवादेनार्थांतरमिव प्रतीयमानं वचनं औत्पत्तिकी सहजा मनीषा विचारशक्तिर्यस्याः तया धिया स्वयमेव =
विमृश्य विचारितवंतः १० नारदोक्तदशवाक्यानां तैर्विमृश्य निर्णीतानर्थानाह दशभिः अदृष्ट्वांतं भुव इत्यस्य भावा-
र्थमाह निर्वाणं नाशं असद्भिर्मोक्षानुपयोगिभिः कर्मभिः किं भवेन्न किमपि ११ एकपुरुषमित्यस्यार्थमाह एक एवे =
श्वरः सर्वसाक्षी स्वाश्रयः स्वाधारः अभवं नित्यमुक्तं असद्भिः ईश्वरासमर्पितैः कर्मभिः १२ बिलं चादृष्टनिर्गममित्य।

शुकउवाच तन्निशम्याथहर्यश्वा औत्पत्तिकमनीषया वाचःकूटंतुदेवर्षेःस्वयंवि
ममृशुर्धिया १० भूः क्षेत्रंजीवसंज्ञंयदनादिनिजबंधनं अदृष्ट्वातस्यनिर्वाणंकिम
सत्कर्मभिर्भवेत् ११ एकएवेश्वरस्तुर्योभगवान्स्वाश्रयःपरः तमदृष्ट्वाभवंपुंसःकिम
सत्कर्मभिर्भवेत् १२ पुमान्नैवैतियद्गत्वाबिलस्वर्गंगतोयथा प्रत्यग्धामाविदइहकिम
सत्कर्मभिर्भवेत् १३ नानारूपात्मनोबुद्धिःस्वैरिणीवगुणान्विता तन्निष्ठामगतस्ये
हकिमसत्कर्मभिर्भवेत् १४ तत्संगभ्रंशितैश्वर्यंसंसरंतंकुभार्यवत् तद्गतीरबुधस्ये
हकिमसत्कर्मभिर्भवेत् १५ ॥

स्यार्थमाह पुमान् यद्गत्वा प्राप्य बिलस्वर्गं पातालं गत इव नैवैति नावर्तते
तत्प्रत्यक् धाम ज्योतीरूपं ब्रह्म अविदः अविदुषः असद्भिर्नश्वरस्वर्गादिसाधनैः कर्मभिः १३ बहुरूपां स्वैरिणीमित्य-
स्यार्थमाह नानारूपेति स्वैरिणी पुंश्चलीव विमोहिके रजआदिगुणैः अन्विताः तन्निष्ठां तस्या अवसानं विवेकं
अगतस्य अप्राप्तस्य असद्भिः अशांतैः १४ पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह तस्याः संगेन भ्रंशितमैश्वर्यं
स्वातंत्र्यं यस्य कुत्सिता भार्या यस्य तद्वत् तस्या गतीः सुखःदुःखलक्षणाः गच्छंतं संसरंतं जीवमबुधस्याजानतः

नदीमुभयतोवाहामित्यस्यार्थमाह सृष्ट्यप्ययकरीमिति उभयतः प्रवाहो दर्शितः वेलाकूलं प्रवाहपतितानां निर्गमस्थानं तपोविद्यादिः तस्य समीपे वेगितां निर्गमप्रतिबंधाय क्रोधाहंकारादिभिः कृतवेगां मत्तस्य तद्द्वारेण विवेकशून्यस्य अत एव तां तथाभूतामविज्ञस्य अविचारयतः असद्भिर्मायिकैः। यद्वा वेलाकूलं समुद्रस्य व्यवहारस्थानं तत्समीपे समुद्रवत् द्विह्रासाभ्यां यथा उभयतो निर्वहिः कृतवेगा नदी भवति एवं समुद्रतुल्यस्यात्मनो व्यवहारस्थाने देहे जन्ममरणादिभिः कृतवेगामित्यर्थः वेगितानामिति पाठे वेगवतीं १६ पंचपेशमित्यस्यार्थमाह पंचविंशतितत्वानां पुरुषो 'द्भुतदर्पणमाश्चर्यरूपमाश्रयः अध्यात्मं कारणसंघाताधिष्ठातारं तमबुधस्य असद्भिरित्यन्वयेन व्याख्यातं।

सृष्ट्यप्ययकरीं मायां वेलाकूलांतवेगितां मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् १६ पंचविंशतितत्वानां पुरुषोद्भुतदर्पणं अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् १७ ऐश्वरं शास्त्रमुत्सृज्य बंधमोक्षानुदर्शनं विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् १८। कालचक्रं भ्रमितीक्ष्णं सर्वं निष्कर्षयज्जगत् स्वतंत्रमबुधस्येह किमसत्कर्मभिर्भवेत् १९ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकं कथं तदनुरूपाय गुणविस्रंभ्युपक्रमेत् २० ॥

कृतेः १७ क्वचिद्धंसमित्यस्यार्थमाह ऐश्वरं ईश्वरप्रतिपादकं विविक्तं पदं विज्ञेयरूपं वस्तु येन तिष्ठति यद्वा ख्यानं बंधमोक्षावनुदर्शयतीति तथा अनेन चित्राः कथा यस्येति व्याख्यातं तदुत्सृज्य अनभ्यस्य अज्ञाय अविदुषः असद्भिः किमिति शेषः १८ क्षुरपव्यमित्यस्यार्थमाह कालचक्रमिति भ्रमि भ्रमणात्मकं तीक्ष्णमिति निःकर्षयदिति च क्षुरपव्यपदव्याख्यानं तदबुधस्य अत एव फलस्य नित्यत्वबुद्ध्या काम्यकर्माण्यनुष्ठानेन वेगुण्यपवादृत्वाद सद्भिः १९ स्वपितुरादेशमित्यस्यार्थमाह शास्त्रस्य पितुः द्वितीयजन्महेतोः तदनुरूपाय निवृत्त्यनुरूपाय निवर्तकमादेशं यो न वेद स कथं गुणविस्रंभी गुणमयप्रवृत्तिमार्गे विश्वासवान् सन् कर्म उपक्रमेत सृष्ट्यादौ प्रवर्तेत २० ॥ ॥

मोक्षशास्त्रस्य बुद्धीनां जीवमायांतरात्मनां प्रास्य कालोपदेशानां मत्वा नेकिमुकर्मभिः इति वाचः कूटसंग्रहश्लोकः २ ...
तिव्यवसिता एवं निश्चितवंतः एकचेतसः १० कमलयुक्ताः तेनारदं प्रदक्षिणीकृत्य अपुनरावृत्तिमार्गं प्रययुः २१ निर्भातः ...
साक्षात्कृतो यो हृषीकेशः तस्य पादांबुजे अनुचरन् अन्वचरदित्यर्थः २२ नाशमदर्शनं स्वधर्मे अशीलशीलत्वेन शालिनां

इतिव्यवसिताराजन्हर्यश्वाएकचेतसः प्रययुस्तंपरिक्रम्यपंथानमनिवर्तनं २१ स्व
रब्रह्मणिनिर्भातहृषीकेशपदांबुजे अखंडंचित्तमावेश्यलोकाननुचरन्मुनिः २२ ना
शंनिशम्यपुत्राणांनारदाच्छीलशालिनां अन्वतप्यतकःशोचन्सुप्रजस्त्वंशुचांपदं २३
सभूयःपांचजन्यायामजेनपरिसांत्वितः पुत्रानजनयद्दक्षःसवलाश्वान्सहस्रशः २४
तेपिपित्रासमादिष्टाःप्रजासर्गेधृतव्रताः नारायणसरोजग्मुर्यत्रसिद्धाःस्वपूर्वजाः २५
तदुपस्पर्शनादेवविनिर्धूतमलाशयाः जपंतोब्रह्मपरमंतेपुस्तत्रमहत्तपः २६ अब्भक्षाःक
तिचिन्मासान्कतिचिद्वायुभोजनाः आराधयन्मंत्रमिममभ्यस्यंतइडस्पतिं २७ ओंन
मोनारायणायपुरुषायमहात्मने विशुद्धसत्वधिष्ण्यायमहाहंसायधीमहि २८ इतितानपि
राजेंद्रप्रतिसर्गधियोमुनिः उपेत्यनारदःप्राहवाचःकूटानिपूर्ववत् २९ दाक्षायणाःसंशृणुत
गदतोनिगमंमम अन्विच्छतानुपदवींभ्रातॄणांभ्रातृवत्सलाः ३० भ्रातॄणांप्रायणंभ्राता
योनुतिष्ठतिधर्मवित् सपुण्यबंधुःपुरुषोमरुद्भिःसहमोदते ३१॥ तेइतिनप्रातेषांकः ददःसुप्रजस्त्वंसत्पुत्र

त्वं शुचां शोकानां स्थानं २३ अजेन ब्रह्मणा सहस्रशः सहस्रसंख्यान् २४ २५ पापं ब्रह्म प्रणवं वक्तमोपासमंत्र वा २६ इडस्पतिं वाचांपतिं ...
तिचिन्मासान् ... २७ शुद्धसत्वाश्रयाय परमहंसाय नमो धीमहि २८ प्रतिसर्गे धीर्येषां तान् वाचःकूटानि अहं ध्वांतमुवदंस्ता ...

श्री॰भा॰
ष॰ टी॰
१९

पा २

अमोघं दर्शनं यस्य हे मारिष आर्य ३२ सध्रीचीनं समीचीनं प्रतीचीनं प्रत्यग्वृत्तिलभ्यं अनुपथं अनुगुणं पन्थानं गताः पश्चिमा या-
मिनीर्गता रात्रय इव ३३।३४ पुत्राणां नाशं महदुत्पातनिमित्तमुपशृण्वन् दक्षोऽपि प्राक्पुत्रशोकविरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तस्मा-
र्थं गतः नारदमुपलभ्य दक्ष आह ३५ साधोरिव लिंगं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणां असाधु अकारि
कृतं तदेवाह साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ३६ ननु संन्यासिनो मार्गः साधुरेव मोक्षहेतुत्वात्

एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ३२
सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव ३३
एतस्मिन्काल उत्पातान्बहून्पश्यन्प्रजापतिः पूर्ववन्नारदकृतं पुत्रनाशमुपाशृ-
णोत् ३४ चुक्रोध नारदायासौ पुत्रशोकविमूर्छितः देवर्षिमुपलभ्याह रोषाद्विस्फुरि-
ताधरः ३५ दक्ष उवाच अहो असाधो साधूनां साधुलिंगेन नस्त्वया असाध्वका-
र्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ३६ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणां वि-
घातः श्रेयसः पाप लोकयोरुभयोः कृतः ३७ एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः
पार्षदमध्ये चरसि यशोहा निरपत्रपः ३८ ॥ त्यक्त ऋणत्रयापाकरणं विना तु महाननर्थः इत्याह ऋणैरिति
जायमानो वै ब्राह्मणस्त्रिभिः ऋणवान् जायते ब्रह्मचारी इत्यादिश्रुतेः ऋणैरमुक्तानाममीमांसितानि विचारिता-
नि कर्माणि यैस्तेषां नावबुद्ध्य ऋणविमोक्षो नास्ति तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदे-
वर्षि ऋणात् विमुक्तिर्नास्ति अतः हे पाप विषयभोगत्यागादिहलोके श्रेयसो विघातः कृतः मोक्षानधिकारित्वाच्च पर-
लोकेऽपि श्रेयसो विघातः कृत इत्यर्थः तथा च मनुः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् अनपाकृत्य मोक्षं तु सेवमा-

राम:
१९

निर्लज्जत्वमेवाह ननु त्वामृते भागवताः सर्वे भूतानुग्रहपरवशाः त्वं तु भूत्वा विप्रियं कुर्वन् कथं न लज्जसे इति भावः ३९
ननु वैराग्यादुपशमः उपशमाच्च भूतस्नेहपाशच्छेदनं भवति न च विरक्तस्य कर्मत्यागात्पापाकरणमात्रप्रत्यवायं यदहरेव वि
रजेत्तदहरेव प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेदिति श्रुतेः अतो वैराग्योपदेशेन तेषां मयानुग्रह एव कृत इति चे
त्तत्राह नेति यद्यपि त्वमेवं मन्यसे तथापि मृषा केवलिना ज्ञानं विनावधूतवेषेण त्वया इत्थं मतिचालनेन कृतेन पुंसां विरागो
नैव स्यादित्यत्र हेतुमाह न च विरागं विनोपशमः न च तेन विना स्नेहपाशनिकृंतनमित्यर्थः ४० इत्थं विरागो न स्यादित्य

ननु भागवता नित्यं भूतानुग्रहकातराः ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणां ३९ नेत्थं
पुंसां विरागः स्यात्त्वया केवलिना मृषा मन्यसे यद्युपशमं स्नेहपाशनिकृंतनं ४० नानुभूय
न जानाति पुमान्विषयतीक्ष्णतां निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ४१ यन्नस्त्वं
त४ कर्मसंधानां साधूनां गृहमेधिनां कृतवानसि दुर्मर्षं विप्रियं तव मर्षितं ४२ तंतुकृंतन यन्न
स्त्वमभद्रमचरः पुनः तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतः पदं ४३ श्रीशुक उवाच प्रतिज
ग्राह तद्बाढं नारदः साधुसंमतः एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वयं ४४ इति श्री
भागवते षष्ठस्कंधे दक्षनारदशापः पंचमोऽध्यायः ५ ॥

त्र हेतुमाह नानुभूयेति अननुभूय वि
षयाणां तीक्ष्णतां दुःखहेतुत्वं न जानाति तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात् ४१ अतस्त्वयास्माकमप्रियमेव कृतं तथा
प्यापि वचनकर्म क्षमेत्याह यदिति कर्मसंधानां कर्ममर्यादानां कर्तुं संधानामिति पाठे विप्रियकर्तुमजानतामित्यर्थः दुः
सहं यत्त्वं कृतवानसि तन्मर्षितं सोढं ४२ तथापि तवाभद्रं भविष्यत्येवेत्याह तंतुकृंतन संतानच्छेदक यद्यस्मादभद्रं पुत्रा
णां स्थानभ्रंशं परस्थानेन भवेदिति मूढ छलेन शापः ४३ बाढं तथेति स्वीकृतवान् ईश्वरोपि प्रतिशापसमर्थोपि तितिति

षष्ठेदक्षस्यषष्ठ्यांकन्यावंश्याप्रकीर्तिताः षष्ठ्यंवंशापतोजातोविश्वरूपोदितेःसुतान् १ नारदात्पुत्राणांनाशमाशंकमानोदुहितॄःजनयामास १ कायकश्यपाय द्विषट् द्विगुणाःषट्द्वादशयासताःत्रयोदशेत्यर्थः इंदोःसोमाय त्रिणवसप्तविंशतिंतार्क्ष्यायनामांतरंप्राप्तायकश्यपायैवअपराःअवशिष्टाश्चतस्रः २ सापत्यानामपत्य

श्रीशुकउवाच ततःप्राचेतसोसिक्न्यामनुनीतःस्वयंभुवा षष्टिंसंजनयामासदुहितॄःपितृवत्सलाः १ दशधर्मायकायेंदोर्द्विषट्त्रिणवदत्तवान् भूतांगिरःकृशाश्वेभ्योद्वेद्वेतार्क्ष्यायचापराः २ नामधेयान्यमूषांत्वंसापत्यानांचमेशृणु यासांप्रसूतिप्रसवैर्लोकाआपूरितास्त्रयः ३ भानुर्लंबाककुद्यामिःविश्वासाध्यामरुत्वती वसुर्मुहूर्तासंकल्पाधर्मपत्न्यःसुतांशृणु ४ भानोस्तुवेदऋषभइंद्रसेनस्ततोनृप विद्योतआसील्लंबायास्ततश्चस्तनयित्नवः ५ ककुभःसंकटस्तस्यकीकटस्तनयोयतः भुवोदुर्गाणिजामेयःस्वर्गोनंदिस्ततोभवत् ६ विश्वेदेवास्तुविश्वायाअप्रजांस्तान्प्रचक्षते साध्योगणस्तुसाध्यायाअर्थसिद्धिस्तुतत्सुतः ७ मरुत्वांश्चमरुत्वत्यांबभूवतुःजयंतोवासुदेवांशउपेंद्र इतियंविदुः ८ मौहूर्तिकादेवगणामुहूर्तायाश्चजज्ञिरे येवैफलंप्रयच्छंतिभूतानांस्वस्वकालजं ९ संकल्पायाश्चसंकल्पःकामःसंकल्पजःस्मृतः वसवोष्टौवसोःपुत्रास्तेषांनामानिमेशृणु १०॥

जयंतश्च ८

सहितानांमेमत्तःशृणु प्रसूतिप्रसवैःपुत्रपौत्रादिभिः ३ । ४ ततोवेदऋषभात् ५ यतःकीकटात् भुवोदुर्गाणिदुर्गाभिमानिनोदेवाःजामेयःजाम्याःपुत्रःस्वर्गः ६ तत्सुतःसाध्यानांसुतः ७ । ८ वसोर्वंशस्यभूयस्त्वाद्दत्ते

अभिमतिर्नाम पत्नी तस्यां हर्षादयः सुताः ११ सह आयुश्च पुरोजवश्च पुत्राः पुरः पुराणि १२।१३ स्कंदश्च कृत्तिकाः
सुतोग्नेः पुत्रः धारामातृस्तु इति अग्निभूरिति च प्रसिद्धस्ततः स्कंदात् १४ आकृतीपतिः शिल्पाचार्यः ततो विश्वकर्मणः
चाक्षुषो मनुरासीत् १५ उषा भार्या अथ आतपात् पंचयामो दिवसो जातः अतः एव त्रियामा रात्रिः प्रदोषप्रत्यूष।

द्रोणः प्राणो ध्रुवोर्कोग्निर्दोषो वस्तुर्विभावसुः द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः =
११ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवाः ध्रुवस्य भार्या धरणिरसूत विविधाः पुरः १२
अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः
१३ स्कंदश्च कृत्तिकापुत्रो ये विशाखादयस्ततः दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला
१४ वस्तोरांगिरसीपुत्रो विश्वकर्माकृतीपतिः ततो मनुश्चाक्षुषोभूद्विश्वे साध्या मनोः
सुताः १५ विभावसोरसूतोषा व्युष्टं रोचिषमातपं पंचयामोथ भूतानि येन जाग्रति कर्मसु
१६ सरूपासूत भूतस्य भार्या रुद्रांश्च कोटिशः रैवतोजो भवो भीमो वाम उग्रो वृषाकपिः
१७ अजैकपादहिर्बुध्नो बहुरूपो महानिति रुद्रस्य पार्षदाश्चान्ये घोराः प्रेतविनायकाः
१८ प्रजापतेरंगिरसः स्वधा पत्नी पितृनथ अथर्वांगिरसं वेदं पुत्रत्वे चाकरोत्सती १९ कृ
शाश्वोर्चिषि भार्यायां धूम्रकेशमजीजनत् धिषणायां वेदशिरो देवलं वयुनं मनुं २० =

योर्दिवसस्यावयवत्वात् १६ भूतस्य द्वे भार्ये तयोर्वंशमाह सरूपेति आ महानित्येवमेकादश रूपस्य रुद्रस्य पार्षदाः
प्रेतादयः अन्ये अन्यस्यां जाताः १७ अंगिरसः स्वधा सती चेति भार्ये तयोर्वंशमाह प्रजापतेरिति स्वधा नाम पत्नी पितॄन्
न पुत्रत्वेकरोत् अथ सती च अथर्वांगिरसं नाम वेदं १८ कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्वंशमाह कृशाश्व

२१ सुपर्णा विनता अनूरुं अरुणं २२ रोहिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणात् कुपितस्य दक्षस्य शापात्
यक्ष्मग्रहार्दितः क्षयरोगपीडितः सन् तास्वनपत्योऽभूत् तं दक्षं प्रसाद्य के. पक्षे कला एव लेभे न त्वपत्यानि क
क्षयं गताः क्षयेऽकृष्णपक्षे दिताः खंडिताः सतीः पाठांतरे क्षये सति कृष्णपक्षे एधिताः तेनैव वर्द्धिताः सतीः २३।२४।२५

तार्क्ष्यस्य विनता कद्रूः पतंगी यामिनीति च पतंग्यसूत पतगान् यामिनी शलभा
नथ २१ सुपर्णासूत गरुडं साक्षाद्यज्ञेशवाहनं सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः
२२ कृत्तिकादीनि नक्षत्राणींदोः पत्न्यस्तु भारत दक्षशापात्सोऽनपत्यस्तासु यक्ष्मग्रहा
र्दितः पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः २३ शृणु नामानि लोकानां मातॄणां
शंकराणि च अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् २४ अदितिर्दितिर्दनुः
काष्ठा अरिष्टा सुरसा इला मुनिः क्रोधवशा ताम्रा सुरभिः सरमा तिमिः २५ तिमे
र्यादोगणा आसन् श्वापदाः सरमासुताः सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप २६
ताम्रायाः श्येनगृध्राद्या मुनेरप्सरसां गणाः दंदशूकादयः सर्पा राजन् क्रोधवशात्म
जाः २७ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः अरिष्टायाश्च गंधर्वाः काष्ठाया द्वि
शफेतराः २८ सुता दनोरेकषष्टिस्तेषां प्राधानिकान् शृणु द्विमूर्द्धा शंबरोऽरिष्टो ह
यग्रीवो विभावसुः २९ अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः पुलोमा वृषपर्वा

ष्टयैधिताः पा-
ठांतरं २४

अन्यत्त्वेन सुगमत्वात् यथायथं व्युत्क्रमेण तासां वंशानाह तिमेरित्यादिना २६।२७ सौरसाः सुरसायाः पुत्राः २८
प्राधानिकान् मुख्यान् षोडश शृणु २९।। ३० ।। ।। ।। ।।।।

वैश्वानरो दनोः पुत्रस्तस्य सुताः ३२।३३। कः प्रजापतिः कश्यप उपयेमे दानवीपरिणयने हेतुः ब्रह्मणा चोदितः ३४ तयोः। षष्टिसहस्राणि निवातकवचाः पुत्रा जाताः ३५ तान् स्वर्गगतः सन् ते पितामहोऽर्जुनो जघान ३६ राहुर्ज्येष्ठो यस्य ३७।३८ अ

धूम्रकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः। स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ३१
वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली वैश्वानरसुता याश्च चतस्रश्चारुदर्शनाः ३२
उपदानवी हयशिरा पुलोमा कालका तथा उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ३३
पुलोमां कालकां च द्वे वैश्वानरसुते तु कः। उपयेमेऽथ भगवान् कश्यपो ब्रह्मचोदितः ३४ पौ
लोमाः कालकेयाश्च दानवा युद्धशालिनः तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ३५
जघान स्वर्गतो राजन् एक इन्द्रप्रियंकरः विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ३६ रा
हुज्येष्ठं केतुशतं ग्रहत्वं य उपागताः अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ३७ यत्र नारायणो
देवः स्वांशेनावतरद्विभुः विवस्वानर्यमा पूषा त्वष्टाथ सविता भगः ३८ धाता विधाता व
रुणो मित्रः शक्र उरुक्रमः विवस्वतः श्राद्धदेवं संज्ञासूयत वै मनुं ३९ मिथुनं च महाभा
गा यमं देवं यमीं तथा सैव भूत्वाथ वडवा नासत्यौ सुषुवे भुवि ४० छाया शनैश्चरं लेभे सा
वर्णिं च मनुं ततः कन्यां च तपतीं या वै वव्रे संवरणं पतिं ४१ अर्यम्णो मातृका पत्नी तयोश्च
र्षणयः सुताः यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ४२। पूषानपत्यः पिष्टादो भग्न
दन्तोऽभवत्पुरा यो सौ दक्षाय कुपितं जहास विवृतद्विजः ४३॥ स यत् अजीजनयत् सुविवर्तमाना ४०

ततः विवस्वतः ४१ चर्षणयः कृताकृतज्ञानवन्तः पश्यन्ति कर्मत्वेन निध्यानात् सुखे: यत्र येषु आत्मानुसंधानविशेषेण।

४४ यद्यद्वा विमतेन बृहस्पतिना परित्यक्ताः तदा द्विषतां शत्रूणां भागिनेयमपि विश्वरूपं पौरोहित्येन वव्रुः ४५
इति षष्ठे षष्ठोऽध्यायः ६ सप्तमे विश्वरूपो योऽसौ पौरोहित्ये कृतः सुरैः गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् १
कस्य हेतोः कस्माद्धेतोः आत्मनः शिष्याः सुराः परित्यक्ताः अक्रमम् अपराधं १ सदसि यदा संप्राप्तं वाचस्पतिं मानात्।

त्वष्टुर्दैत्यात्मजा भार्या रचना नाम कन्यका संनिवेशस्तयोर्यज्ञे विश्वरूपश्च वीर्यवान्
४४ तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि विमतेन परित्यक्ता गुरुणांगिरसेन यत्
इति श्रीभागवते महापुराणे षष्ठस्कंधे षष्ठोध्यायः ६ राजोवाच यस्य हेतोः परित्य
क्ता आचार्येणात्मनः सुराः एतदाचक्ष्व भगवन् शिष्याणामक्रमं गुरौ १ श्रीबादराय
णिरुवाच इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघितसत्पथः मरुद्भिर्वसुभी रुद्रैरादित्यैरृभुभि
र्नृप २ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः
३ विद्याधराप्सरोभिश्च किंनरैः पतगोरगैः निषेव्यमाणो भगवान् स्तूयमानश्च भारत ४
उपगीयमानो ललितमास्थानाध्यासनाश्रितः पांडुरेणातपत्रेण चंद्रमंडलचारुणा ५
युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः विराजमानः पौलोम्या सहार्धासनया भृशं ६
स यदा परमाचार्यं देवानामात्मनश्च ह नाभ्यनंदत संप्राप्तं प्रत्युत्थानासनादिभिः ७ ॥

भा० ५

नो ३

नाभ्यनंदत नादृतवान् तदा स आंगिरसः ततो निर्गत्य तूष्णीं स्वगृहमाययौ ७ इति पूर्वोक्तानामन्वयः अनादरे हेतुं मदं दर्श
यितुं तं विशिनष्टि त्रिभुवनैश्वर्यमदेनोल्लंघितः सतां पन्था येन सः २ परिश्रितः परिवृतः ३।४ आस्थानसभा तस्मिन्नध्या
सनं सिंहासनं तदाश्रितः पारमेष्ठ्यैर्महाराजचिह्नैः आसनस्यार्धं स्थितया पौलोम्या सह विराजमानः सन् ६

राम:

प्रत्युत्थानादिनानाभ्यनंदत ७ नचोच्चचाल आसन एव स्थितोपि किंचिन्नचलितवान् ८।९ श्रीमदेन याविक्रिया तां विद्वान्। जानन्प्रतिबुध्य अनुस्मृत्य १० मया कृतं कर्म अहो असाधु यद्दभ्रात् दभ्रबुद्धिना अल्पमतिना मया कात्कृतः तिरस्कृतः ११ विबुधानां सात्विकानां देवानामीशोप्यहं १२ ननु सिंहासनस्थो राजा प्रत्युत्थानं नकुर्यादिति वदन्तावदेतित त्राह यइति द्वाभ्यां।

वाचस्पतिं मुनिवरं सुरासुरनमस्कृतं नोच्चचालासनादिंद्रः पश्यन्नपि सभागतं ८ ततो निर्गत्य सहसा कविरांगिरसः प्रभुः आययौ स्वगृहं तूष्णीं विद्वान्श्रीमदविक्रियां ९ तर्ह्येव प्रतिबुद्ध्येंद्रो गुरुहेलनमात्मनः गर्हयामास सदसि स्वयमात्मानमात्मना १० अहो बत मयासाधु कृतं वै दभ्रबुद्धिना यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ११ को गृध्येत्पंडितो लक्ष्मीं त्रिविष्टपपतेरपि ययाहमासुरं भावं नीतोद्य विबुधेश्वरः १२ ये पारमेष्ठ्यं धिषणम धितिष्ठन्नकंचन प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः १३ तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ये श्रद्दध्युर्वचस्ते वै मज्जंत्यश्मप्लवा इव १४ अथाहममराचार्यमगाधधिषणं द्विजं प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् १५ शुक उवाच एवं चिंतयतस्तस्य मघोनो भगवान्गृहात् बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया १६ गुरोर्नाधिगतः संज्ञां परीक्षन्भगवान्स्वराट् ध्यायन्धिया सुरैर्युक्तः शर्म नालभतात्मनः १७ ततः श्रुत्वैवासुराः सर्व आश्रित्यौशनसं मतं देवान्प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः १८॥

धिषणं सिंहासनं १३ कुपथं दिशंतीति कुपथदेष्टारस्तेषां वचः अश्ममयः प्लवो येषां ते यथा मज्जंति तद्वदनु मज्जंतीत्यर्थः १४ अगाधा गंभीरा धिषणा यस्य तं निशठः शाठ्यहीनः सन् १५ अध्यात्ममायया १६ गुरोः संज्ञां ज्ञानोपायं परीक्षमाणोपि नाधिगतः अपि

निर्भिन्नान्यंगानि शिरांसि उरवो बाहवश्च येषां १९। २० वो युष्माकं कृतं करणं महदभद्रं तदाह ब्रह्मिष्ठमिति नाभ्यनं
दत नाभिनंदितवंतः २१ परेभ्यः शत्रुभ्यो वः पराभव इति यत् अयं तस्य अनयस्य अन्यायस्य सर्वं धीफलरूप आ
सीत् उक्तं च ब्राह्मणं कुलसंपन्नं भक्तं विष्णोर्महात्मनः आयांतं वीक्ष्य नोत्तिष्ठेत्स द्विजः ... इति स्वयंमे

तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ब्रह्माणं शरणं जग्मुः सहेंद्रा नतकंधराः
१९ तांस्तथाभ्यर्दितान्वीक्ष्य भगवानात्मभूरजः कृपया परया देव उवाच परिसांत्वयन् २०
ब्रह्मोवाच अहो बत सुरश्रेष्ठा ह्यभद्रं वः कृतं महत् ब्रह्मिष्ठं ब्राह्मणं दांतमैश्वर्यान्ना
भ्यनंदत २१ तस्यायमनयस्यासीत्परेभ्यो वः पराभवः प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां
च यत्सुराः २२ मघवन्द्विषतः पश्य प्रक्षीणान्गुर्वतिक्रमात् संप्रत्युपचितान्भूयः का
व्यमाराध्य भक्तितः आददीरन्निलयनं ममापि भृगुदेवताः २३ त्रिविष्टपं किं गणयंत्यभे
द्यमंत्रा भृगूणामनुशिक्षितार्थाः न विप्रगोविंदगवीश्वराणां भवंत्यभद्राणि नरेश्वराणां २४
तद्विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवंतं सभाजितोर्थान्स विधास्यते वो
यदि क्षमिष्यध्वमुतास्य कर्म २५ श्रीशुक उवाच त एवमुदिता राजन्ब्रह्मणा विगतज्व
राः ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् २६ ॥ वैरिभ्यो हेतोः येषां तेभ्यः २२ गुरुतिरस्कारसत्का
रावेवापचयोपचयकारणमित्यसुरदृष्टांतेनाह मघवन्निति द्विषतः शत्रून् काव्यं भार्गवं गुरुमेवासेव्योपचितान् उपचित
त्वमेवाह आददीरन् गृह्णीयुः २३ अभेद्यो मंत्रो येषां अनुशिक्षितार्थाः शिष्याः यतः विप्रा गोविंदो गावश्च ईश्वराः अनुग्रा
हका येषां तेषामेव अभद्राणि न भवंति अन्येषां भवंति २४ तत्तस्मादध्यानंतरमेव भजत अस्य कर्म अस्मद्रपत्यपातं

२७।२८ अतिथीनां पितॄणां च प्रशंसार्थमाह आचार्य उपनीय वेदाध्यापकः ब्रह्मणो वेदस्य मूर्तिः २९ धर्मस्यात्मा मूर्तिर
तिथिः स्वयं साक्षात् आत्मनः श्रीविष्णोर्यद्वा आत्मनः स्वस्य सर्वभूतेष्वात्मदृष्टेः कर्तव्यत्वर्थः ३० परेभ्यः पराभव एवा
र्तिस्ता ३१ वृणीमह इति ३२ न मत्याध्याय त्वं कनिष्ठस्य मम माभिवंदनं करिष्यत अत्र गर्हितं तत्राह नेति अर्थेषु प्रयोज
ननिमित्तं यविष्ठानामभिवादनं न निंदंति किं च छंदोभ्यो मंत्रेभ्योन्यत्र वयो ज्यैष्ठस्य कारणं न तु मंत्रेषु अतो स्मभ्यं मंत्रदाने

देवा ऊचुः वयं ते शिष्यपः प्राप्ता आश्रमं भद्रमस्तु ते कामः संपाद्यतां तात पितॄणां समयो
चितः २७ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सतां अपि पुत्रवतां ब्रह्मन् किं पुनर्ब्रह्मचारि
णां २८ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षिते
स्तनुः २९ दयाया भगिनी मूर्तिर्धर्मस्यात्मातिथिः स्वयं अग्नेरभ्यागतो मूर्तिः सर्वभूतानि
चात्मनः ३० तस्मात्पितॄणामार्तानामार्तिं परपराभवं तपसापनयंस्तात संदेशं कर्तुमर्ह
सि ३१ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुं यथांजसा विजेष्यामः सपत्नांस्तव तेज
सा ३२ न गर्हयंति स्वार्थेषु यविष्ठाभ्यभिवादनं छंदोभ्योन्यत्र न ब्रह्मन् वयो ज्यैष्ठस्य का
रणं ३३ ऋषिरुवाच अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः स विश्वरूपस्तानाह प्र
सन्नः श्लक्ष्णया गिरा विश्वरूप उवाच विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययं कथं नु म
द्विधो नाथा लोकेशैरभियाचितं प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ३५॥

त्वेन त्वमेव ज्येष्ठोसि विष्णासि यद्वा छंदोभ्योन्यत्र वेदान् विहाय वय एव ज्येष्ठस्य कारणं न भवति किं तु वेदा एव कारणं तस्मा
=द्भ्यो वयः वेदज्ञात्वाच्च त्वमेव ज्येष्ठ इत्यर्थः ३३।३४ निंदितमपीदं पुरोधा ज्वामंगपेन करिष्यामीत्याह सोहं न विगर्हि।
=तं पौरोहित्यं धर्मशीलैः अधर्महेतुत्वात् किं च ब्रह्मवर्चउपव्ययं पूर्वसिद्धस्य ब्रह्मवर्चसस्य व्ययकरं प्रत्याख्यानु च माह

स्ला२

ननु पौरोहित्येन धनलाभाद्धर्मः सिद्ध्येत् अन्यथा निर्धनस्य कुतो धर्मः अत एव तेन न लोको हृष्यति तत्राह अकिंच-
नानां शिलोंछनं हि धनं तेनेह स्वाश्रमविहितक... कणिशोपादानं शिलं हट्टादौ पतितव्रीह्यादेरुपादानमुंछनं इहा-
श्रमे तेनैव निर्वर्तिता साधुर्नाम सत्क्रिया येन ३६ किं यदेतत् प्रार्थितमल्पमेव अभ्यधिकमपि करिष्यामीत्याह भव

अकिंचनानां हि धनं शिलोंछनं तेनेह निर्वर्तितसाधुसत्क्रियः कथं विगर्ह्यं नु करो-
म्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ३६ तथापि न प्रतिब्रूयां गुरुभिः प्रार्थितं किय-
त् भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ३७ शुक उवाच तेभ्य एवं प्रतिश्रुत्य विश्व-
रूपो महातपाः पौरोहित्यं वृतश्चक्रे परमेण समाधिना ३८ सुरद्विषां श्रियं गुप्तामौश-
नस्यापि विद्यया आछिद्यादान्महेंद्राय वैष्णव्या विद्यया विभुः ययागुप्तः सहस्राक्षो जि-
ग्येसुरचमूर्विभुः तां प्राह स महेंद्राय विश्वरूप उदारधीः ४० इति श्री॰ महा॰ षष्ठस्कंधे
सप्तमोध्यायः ७ राजोवाच ययागुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् क्रीडन्निव
विनिर्जित्य त्रैलोक्या बुभुजे श्रियं १ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकं यथा-
ततायिनः शत्रून् येन गुप्तोजयन्मृधे २ शुक उवाच वृतः पुरोहितस्त्वाष्ट्रो महेंद्रा-
यानुपृच्छते नारायणाख्यं वर्माह तदिहैकमनाः शृणु ३ विश्वरूप उवाच धौतांघ्रिपा-
णिराचम्य सपवित्र उदङ्मुखः कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः नारायणपरं व-

तामिति ३९ समाधिना परमोद्यमेन ३८ वैष्णव्या श्रीनारायणकवचात्मिकया ३९ असुरचमूर्दैत्यसेनाः ४० इति ष-
ष्ठे सप्तमः ७ अष्टमे विश्वरूपस्तु वर्म नारायणात्मकं इंद्राय प्राह येनेंद्रो गुप्तो दैत्यानपाजयत् १ त्रैलोक्याः संबंधि श्रि-

तत्राष्टाक्षरेण पादाद्यष्टांगेषु न्यासमाह पादयोरिति सार्द्धेन प्रणवसंपुटितमोंकाराद्येकैकमक्षरं विन्यसेत् ५ विपर्ययं पश्चाद्भवं शिरआदिपादांतं वा विन्यसेत् उत्पत्तिन्यासं संहारन्यासं वा कुर्यात् इत्यर्थः ६ द्वादशाक्षरस्योद्धारः प्रणवादियकारांतमिति प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यंतमंगुलीषु परिशिष्टाक्षरचतुष्टयमंगुष्ठयोराद्यंतपर्वसु न्यसेत् मंत्रांतरन्यासमाह न्यसेदिति ७ षकारणकारयोर्विन्यासेषडुक्त

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ५ ॐ नमो नारायणायेति विपर्ययमथापि वा करन्यासं ततः कुर्यात् द्वादशाक्षरविद्यया ६ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु न्यसेद्धृदय ॐकारं विकारमनु मूर्द्धनि ७ षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् वकारं नेत्रयोर्युंज्यात् नकारं सर्वसंधिषु ८ मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद्बुधः सविसर्गं फडंतं तं सर्वदिक्षु विनिर्दिशेत् ९ ॐ विष्णवे नम इति आत्मानं परमं ध्यायेत् ध्येयं षट्शक्तिभिर्युतं विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत् १० ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ११ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः

रांगाणि हृदयादिषु न्यसेत् मकारमस्त्रमुद्दिश्य ध्यात्वा तन्मकारांतं मः अस्त्राय फडित्येवं दिग्बंधे विनिर्दिशेत् ९ ध्येयमीश्वररूपमात्मानं ध्यायेत् षट्शक्तिभिरैश्वर्यादिभिर्भगवच्छब्दवाच्याभिः विद्या च तेजश्च तपश्च मूर्तिर्यस्य तं मंत्रं वक्ष्यमाणं श्रीनारायणकवचाख्यं १० अष्टगुणः अणिमाद्यैश्वर्ययुक्तः ११ यादसां ग

अटवीनं आजिमुखं संग्रामोपग्रहश्च आदिर्येषां तेषु संकटस्थानेषु १३ असौ यज्ञमूर्त्ति वराहो मामामध्वनि रक्षतु यज्ञैरवयवैरूपैः कल्प्यते निरूप्यत इति तथा उन्नीता उद्धृता धरा येन सः अद्रिकूटेषु गिरिशिखरेषु रामो जामदग्न्यः १३ उग्रधर्माद् अभिचारादिलक्षणात् हासात् गर्वात् नरः पातु अवतु दत्तो दत्तात्रेयः अयोगात् योगभ्रंशात् १४ पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात् पुरुषार्चनस्यान्तरात् देवपूजाच्छिद्रात् द्वात्रिंशदपराधरूपान्तरादः १५

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः विमुंचतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः १३ रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् १४ मामुग्रधर्माद् अखिलात्प्रमादान्नारायणः पातु नरश्च हासात् दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबंधात् १५ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् १६ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा यज्ञश्च लोकादवताज्जनांतात् बलो गणात्क्रोधवशादहीन्द्रः १७ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाखंडगणात्प्रमादात् कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः १८ मां केशवो गदया प्रातरव्याद्गोविन्द आसंगवमात्तवेणुः नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररीन्द्रपाणिः १९ ॥

लोकाज्जनापवादाद्यज्ञः जननिमित्तो योऽन्तउपघातः तस्मात् बलभद्रः अवतात् कृतान्तादिति पाठे कृतान्तात् कालात् क्रोधवशात्सर्पाणां गणात् अहीन्द्रः शेषः १७ कालमलभूतात् कलेः कल्किः धर्मावनाय धर्मरक्षणाय उरु महान् कृतोऽवतारो येन १८ दिनस्य षड्भागेषु प्रातरादिसंज्ञेषु रात्रेश्च प्रदोषादिसंज्ञेषु रक्षां प्रार्थयन् मां केशव

त्रिधामा ब्रह्मादिमूर्तिः श्रीमाधवः दोषे प्रदोषे अर्द्धरात्रे अर्द्धरात्रिपर्यंतकाले निशीथे च एक एव पद्मनाभोवतु १९ अपररात्रे
ईशः श्रीवत्सधामावतु प्रत्यूषे ईशः श्रीजनार्दनः श्रीदामोदरः प्रभाते श्रीविश्वेश्वरो नुसंध्यं प्रतिसंध्यं २० युगांतानलवत् ति
ग्मा तीव्रा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सत् अरिसैन्यं दंदग्धि अतिशयेन दहति तस्यापि स्वभाव एव न तु तस्मात्प्रार्थनीय
मित्यर्थः यद्वा दंदग्धीति लोएमध्यमपुरुषः अत्र त्वमेवंभूतं च क्रमिति स्वरूपत्का संबोध्य प्रार्थ्यते अतिशयेन दहेति कक्षं स्तृ

देवोपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो मां दोषे हृषीकेश उतार्द्धरात्रे निशीथ एको
वतु पद्मनाभः १९ श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोसिधरो जनार्दनः दामोदरोव्यादनु
संध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः २० चक्रं युगांतानलतिग्मनेमि भ्रमत्समंता
द्भगवत्प्रयुक्तं दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः २१ गदेशनिस्पर्श
नविस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियासि कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चू
र्णय चूर्णयारीन् २२ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् दरेंद्र विद्रा
वय कृष्णपू॰ रितो भीमस्वनोरेर्हृदयानि कंपयन् २३ त्वं तिग्मधारासिवरारिसैन्यमीश
प्रयुक्तो मम छिंधि छिंधि चर्मं छतचंद्र छादय द्विषामघोनां हर पापचक्षुषां २४

क्षं तृणं २१ अशनिवत् स्पर्शो येषां ते विस्फुलिंगाः यस्याः तस्याः संबोधने हे गदे त्वमजितस्य प्रियासि अहं अच्युतस्य
दासः अतः कूष्मांडादीन् निःष्पिंडि निष्पिंडि संचूर्णय संचूर्णय अरींश्च चूर्णय चूर्णय सर्वत्र वीप्सा अतिशीघ्रत्वाय
२२ हे दरेंद्र शंखपाञ्चजन्य त्वं यातुधानादीन् विद्रावय विप्रग्रहाः ब्रह्मराक्षसाः ये च घोरदृष्टयस्तान् २३ तिग्मा धारा यस्य
हे तिग्मधार असिवर खड्गश्रेष्ठ त्वं मम अरिसैन्यं छिंधि शतं चंद्राकाराणि मंडलानि यस्मिन् हे शतचंद्र चर्मन् अघो

यत्नयेभ्योभयं अंहोभ्यः २५ श्रेयःप्रतीपकाः श्रेयोव्याघातकाः २६ स्तोत्राणि बृहद्रथन्तरादिसामानि तैः स्तोभ्यते स्तूयत इति स्तोत्रस्तोभः छन्दोमयो वेदमूर्तिः सुपर्णोसि गरुत्मानित्यादिश्रुतेः एकेपट्ठपाठे स्तोभाः गीतिपूरकाक्षराणि स्तोभेति पाठे सामाधारभूतात्मकः स्तोभः २७ नामानि च रूपाणि च यानानि च वाहनानि च आयुधानि च नो बुद्ध्यादीन् पान्तु पार्षदभूषणाः पार्षदभूषणाः २८ सच्च असच्च भूतं मूर्तं अमूर्तं यत् तत्सर्वं जगत् २९ ऐकात्म्यस्यानुभावो नुध्यानं ये-

यन्नोभयंग्रहेभ्योभूत्केतुभ्योनृभ्यएववा सरीसृपेभ्योदंष्ट्रिभ्योभूतेभ्योंहोभ्यएववा २५
सर्वाण्येतानिभगवन्नामरूपास्त्रकीर्तनात् प्रयान्तुसंक्षयंसद्योयेनःश्रेयःप्रतीपकाः
२६ गरुडोभ गवान्स्तोत्रस्तोभःछन्दोमयःप्रभुः रक्षत्वशेषकृच्छ्रेभ्योविष्वक्सेनःस्व
नामभिः २७ सर्वापद्भ्योहरेर्नामरूपयानायुधानिनः बुद्धीन्द्रियमनःप्राणान्पान्तुपार्ष
दभूषणाः २८ यथाहिभगवानेववस्तुतःसदसच्चयत् सत्येनानेननःसर्वेयान्तुनाशमु
पद्रवाः २९ यथैकात्म्यानुभावानांविकल्परहितःस्वयं भूषणायुधलिंगाख्याधत्तेश
क्तीःस्वमायया ३० तेनैवसत्यमानेनसर्वज्ञोभगवान्हरिः पातुसर्वैःस्वरूपैर्नःसदास
म२ र्वत्रसर्वगः ३१ विदिक्षुदिक्षूर्ध्वमधःसमन्तादन्तर्बहिर्भगवान्नारसिंहः प्रहापयन्लोकभ
यंस्वनेनस्वतेजसाग्रस्तसमस्ततेजाः ३२ मघवन्निदमाख्यातंवर्मनारायणात्मकं वि
जेष्यस्यञ्जसायेनदंशितोसुरयूथपान् ३३ एतद्धारयमाणस्तुयंयंपश्यतिचक्षुषा पदावा

षां तेषां विकल्पो भेदस्तद्रहितोपि ३० सत्यमानेन सत्यभूतेन प्रमाणेन ३१ पुनरपि श्रीनृसिंह एव प्रार्थ्यते विदिक्ष्वि
ति यावत्समनुबन्धः यद्वा नारसिंहः प्रह्लादः स्वनेन श्रीनृसिंहनामगर्जनेन स्वतेजसा स्वप्रभावेन ग्रस्तानि समस्तानि
दिग्गजविषशस्त्रजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः ३२ दंशितः कवचितः ३३ सोपि साध्वसात् भयाद्विमुच्य

तस्य तु भयं न भवेदेव ३५ एतद्विद्याप्रभावमितिहासेनाह इमामिति सार्द्धैस्त्रिभिः मरुधन्वनि निरुदके देशे अनेन विद्यायाः ॥
क्षेत्रत्वेन तीर्थत्वेन प्रत्यक्षं दर्शितं ३६ यत्र द्विजस्य तत्क्षयो देहत्यागः तस्योपरि ३७ सद्यस्तत्क्षणमेव गगनान्न्यपतत् पाठांत
रे अंगनाभिः सह वालखिल्योपदेशात्तस्यास्थीनि प्रास्य प्रक्षिप्य विस्मितः सन् स्वधाम गंधर्वलोकं जगाम ३८ अ ॥

न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचि
त् ३५ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः योगधारणया स्वांगं जहौ स मरुधन्व
नि ३६ तस्योपरि विमानेन गंधर्वपतिरेकदा ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ३७ गग
नान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः स वालखिल्यवचनादस्थीन्यादाय विस्मितः
प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ३८ शुक उवाच य इदं शृणुयात्काले यो
धारयति चादृतः तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ३९ एतां विद्यामधिगतो विश्व
रूपाच्छतक्रतुः त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ४० इति श्रीभागवते महा
पु० षष्ठस्कंधे नारायणवर्मनामाष्टमोऽध्यायः ८ शुक उवाच तस्यासन्विश्वरूपस्य शि
रांसि त्रीणि भारत सोमपीथं सुरापीथमन्नादमिति शुश्रुम १ स वै बर्हिषि देवेभ्यो भागं प्र
त्यक्षमुच्चकैः अवदद्यस्य पितरो देवाः सप्रश्रयं नृप २

अंगनाभिरिति पाठांतरं १

धिगतः प्राप्तः सन् ४० इति षष्ठेऽष्टमः ८ नव
मे विश्वरूपे तु हते शक्रेणाकोपतः त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः १ सोमपीथं पानं यस्मिन् एवं सुरापीथं अन्न
मत्तीत्यन्नादं अत्र विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदित्यादि श्रुतिरनुसंधेया १ तस्यासुरपक्षपातमाह स वा
इति द्वाभ्यां प्रत्यक्षं प्रकटं यथा भवति तथा स विनये देवेभ्यो हविर्भागं इंद्राय इदं अग्नये इदमित्युच्चैरवदत् अत्र हेतुः यस्य।

असुरेभ्यस्तु परोक्षं गुप्तं भागं ददौ तदेवाह यजमानोसावसुरान् प्रतिभागमवहत् ३।४। तां वारयितुं समर्थः तथाप्यजग्राह
५ संवत्सरं तथैव स्थित्वा संवत्सरान्ते भूतात्क्रोशभीतः सन् भूतानामध्ये विशुद्धये लोकापवादपरिहाराय स हरिरिन्द्रोभूत्।
भूम्यादिभ्यस्तदघं विभज्य ददौ ६ तुरीयं चतुर्थभागं खातस्य गर्तस्य पूरः पूरणं तेन वरेण यदि खातपूरणं स्वत एव भविष्य
ति तर्हि गृहीष्यामीत्येव भाषावेधनं जग्राहेत्यर्थः ईरिणमूषरं अत एवोषरे अध्ययनादि निषिध्यते ७ छेदे सति पुन
विरोहः प्ररोहो भवत्विति वरेण निर्यासरूपेण ब्रह्महत्यापापस्य दृष्टत्वात् निर्यासो न भक्ष्यः ८ शश्वत्कामवरेण आप्रसवकाभो

स एव हि ददौ भागं परोक्षमसुरान्प्रति यजमानोवहद्भागं मातृस्नेहवशानुगः ३ तद्देवहे
लनं तस्य धर्मालीकं सुरेश्वरः आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ४ सोमपी
थं तु यत्तस्य शिर आसीत्कपिंजलः कलविंकः सुरापीतमन्नादं यत्स तित्तिरिः ५ ब्रह्मह
त्यामंजलिना जग्राह यदपीश्वरः संवत्सरान्ते तदघं भूतानां स विशुद्धये भूम्यम्बुद्रुमयो
षिद्भ्यश्चतुर्धा व्यभजद्धरिः ६ भूमिस्तुरीयं जग्राह खातपूरवरेण वै ईरिणं ब्रह्महत्याया
रूपं भूमौ प्रदृश्यते ७ तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः तेषां निर्यासरूपेण ब्रह्महत्या
प्रदृश्यते ८ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः रजोरूपेण तास्वंहो मासि मासि
प्रदृश्यते ९ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलं तासु बुद्बुद-फेनाभ्यां दृष्टं तद्धरति

नुपघातेनैव संभोगवरेण अत एव रजोदर्शनेन तत्संगादि न कार्यं ९ द्रव्यभूयोवरेणापस्मिन्द्रव्ये क्षीरादावापो मिश्रा
भवेयुः तस्य भूयस्त्वमाधिक्यं स्यादिति वरेण यद्वा स्वस्यैव निर्झरोद्गमादिना भूयस्त्ववरेण द्रवभूय इति पाठेप्ययमेवार्थः य
द्रवभूयस्त्वं मांसासिद्धिकृत्त्वं तेन वरेण अस्य विभागस्य विश्वरूपो वै त्वाष्ट्र इत्यस्यां श्रुतावनुक्तेः तद्विभागफलमा
ह तत्पापं हरति निराकरोति कः क्षिपन् बुद्बु ... दादिजलाद्बहिः प्रक्षिपन्नित्यर्थः यद्वा क्षिपन् जलं पापं हरेति आहरति
गृह्णातीत्यर्थः अयं च तस्मादापो न परिचक्ष्या इत्यादिश्रुत्यर्थ उक्तः पाठान्तरे हरिः किल्बिषं इदं पापं १० ॥ ॥

गुंद॥

राम:
२१

ग्रहेपणीया:१

ग्रस्तं तेजो येषां ग्रस्ततेजसः प्रत्यंचमन्तर्यामिनं त्रिभुवनस्य तेन व्याप्तत्वात् क्वापि गमनासंभवात् तत्रैव स्थित्वा तं तुष्टुवुरित्यर्थः । महाभये परित्राणं मत्स्यत्तो न भवेदिति हरिमेव प्रपद्यन्ते सुराः शरणमातुराः २० वाय्वादीनि पंच महाभूतानि तैर्निर्मितास्त्रयो लोकाः स्वर्गमर्त्यपाताला ब्रह्मादयश्च ततो वाचीनाः वयं च सर्वे यस्मै अत[illegible]कापा उद्विजन्तः सन्तो बलिं हराम अन्तकोऽसावपि यस्माद्बिभेति ततः परमेश्वरादेव नोऽस्माकं अरणं शरणं त्राणमस्तु २१ तत एवेत्यवधारणे हेतुमाहुः अविस्मितं निरहंकारं कुतः स्वलाभेनैव कुतः प्रशान्तं रागादिशून्यं तेच्च कुतः स्वेनैव लाभेन परिपू-

ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः । प्रत्यंचमादिपुरुषमुपतस्थुः समाहिताः २०
देवा ऊचुः । वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजन्तः । हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नस्तु २१ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तं । विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुं २२ यस्योरुशृंगे जगतीं स्वनावं मनुर्यथाबध्य ततार दुर्गं । स एव नस्त्वाष्ट्रभयाद्दुरन्तात् त्राताश्रितान् वारिचरोऽपि नूनं २३ पुरा स्वयंभूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले । एकोऽरविंदात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः २४॥

र्णकामं तच्च कुतः समं द्वयाधिपक्षेद शून्यमेवं-भूतं परमेश्वरं विना अपरं यः शरणार्थमुपसर्पति स हि बालिशो ज्ञः यतो सोऽश्वनो लांगूलेन पुच्छेन समुद्रमतितर्ति अतितर्तुमिच्छतीत्यर्थः यथा तेन समुद्रस्य तरणं न भवति तथा निरीश्वराश्रयणेन व्यसनार्णवतरणं न भवतीति भावः २२ महाभये स एव रक्षक इति दृष्टान्तमाह यस्येति द्वाभ्यां यस्य महाशृंगे जगतीं पृथ्वीमेव स्वनावं बद्ध्वा मनुः सत्यव्रतो यथावत् दुर्गं संकटं ततार स एव वारिचरो मत्स्यमूर्तिः नोऽस्मान् त्वाष्ट्रभयात् आश्रितान् सतः नूनं त्राता रक्षिष्यति २३ संयमाम्भसि प्रलयोदके उदीर्णैः उद्धतैः वातैर्य ऊर्मयस्तेषां रवैः कराले भयंकरे अरविंदान्नाभिकमलात्पतितप्रायः एकः अ-

इंद्राय इंद्रं हंतुं शत्रवे शत्रुत्वेन तदाह इंद्रशत्रो विवर्द्धस्वेति अत्र चेंद्रशत्रुपदस्याद्युदात्तत्वाद्बहुव्रीहौ प्रकृत्या पूर्वप
दमिति स्मृतेः बहुव्रीहिलक्षणायत्वादिंद्र एव तस्य शत्रुरभूत् तदुक्तं श्रुत्या यदब्रवीत्स्वाहेंद्रशत्रो वर्द्धस्वेति तस्मादस्ये
द्रशत्रुरभवदिति तथा च शिक्षायां मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह स वाग्वज्रो यजमानं
हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् इति ११ अन्वाहार्यपचनाद्दक्षिणाग्नेः १२ तमीक्ष्य वित्रस्ता लोका दश दिशो
विदुद्रुवुरिति पंचमेनान्वयः कथंभूतं विष्वक् समंततः इषुविक्षेपमात्रं प्रतिदिनं वर्द्धमानं दग्धशैलप्रतीकाशं कृष्णवर्णं ॥

**हतपुत्रस्ततस्त्वष्टा जुहावेंद्राय शत्रवे इंद्रशत्रो विवर्द्धस्व माचिरं जहि विद्विषं ११**
**अथान्वाहार्यपचनादुत्थितो घोरदर्शनः कृतांत इव लोकानां युगांतसमये यथा १२**
**विष्वग्विवर्द्धमानं तमिषुमात्रं दिने दिने दग्धशैलप्रतीकाशं संध्याभ्रानीकवर्चसं त**
**प्तताम्रशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनं देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी**
**नृत्यंतमुन्नदंतं च चालयंतं पदा महीं १५ दरीगंभीरवक्त्रेण पिबता च नभस्तलं लिह**
**ता जिह्वयार्क्षाणि ग्रसता भुवनत्रयं १६ महता रौद्रदंष्ट्रेण जृंभमाणं मुहुर्मुहुः वित्रस्ता**
**दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश १७ येनावृता इमे लोकास्तपसा त्वाष्ट्रमूर्त्तिना स वै वृ**
**त्र इति प्रोक्तः पापः परमदारुणः १८ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः स्वैः स्वैर्दिव्या**
**स्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः १९॥**

संध्याभ्रानीकवद्वर्चो दीप्तिर्यस्य तं १३ तप्तताम्रवत् शिखाः
श्मश्रूणि च यस्य मध्याह्नार्कवदुग्रे लोचने यस्य १४ रोदसी आरोप्येवेत्यर्थः १५ दरीवद्गंभीरेण वक्त्रेण मुहुर्मुहुर्जृंभमाण
मित्यन्वयः कथंभूतेन नभस्तलं पिबता ऋक्षाणि च जिह्वया लिहता भुवनत्रयं ग्रसता १६ महता विस्तीर्णेन रौद्रदंष्ट्रेणोप
स्मिन् १७ वृत्रनामनिर्वक्ति येनावृता इति त्वाष्ट्री मूर्तिर्यस्य तपसः तेन तथा च श्रुतिः स इमांल्लोकानावृणोत्तद्वृ

किंच वयं भगवते बलिं हरन्तो लोकपालिनाश्च बहुशः अतस्तमेव शरणं व्रजामेत्याह यएक इति त्रिभिः येनानुगृहीताः सन्तो विश्वं सृजामः ननु यूयमेव स्रष्टारः नान्यो युष्माकमनुग्राहकोस्ति तस्यादर्शनात्तत्राह अस्मत्तः पुरः पूर्वमेवोत्पद्यमि तया समीहमानस्यापि यस्य लिंगं रूपं न पश्यामस्तत्र हेतुः पृथक् पृथगीशाः स्म इत्यभिमानिनः २५ देवादिषु ऊर्ध्वं पर सुरा ममत्स्यरामादितनुभिः कृतावतारः सन् आत्मसात्कृत्वा पाति च २६ आत्मनः तद्दैवतं कुतः विश्वं विश्वात्मकं तथापि विकारं वारयति अन्यं विश्वात्मकत्वे हेतुः परं कारणं ननु प्रधानं पुरुषं चान्यं विश्वस्याकारणं तत्राह प्रधानं

यएकईशो निजमायया नः ससर्ज येनानुसृजाम विश्वं वयं न यस्यापि पुरः समीहतः पश्याम लिंगं पृथगीशमानिनः २५ योनः सपत्नैर्भृशमर्द्यमानान् देवर्षितिर्यङ्नृषु नित्य एव कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगे युगे च २६ तमेव देवं वयमात्मदैवतं परं प्रधानं पुरुषं विश्वमन्यं व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा २७ शुक उवाच इति तेषां महाराज सुराणामुपतिष्ठतां प्रतीच्यां दिश्यभूदाविः शंखचक्रगदाधरः २८ आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभैः पर्युपासितमुन्निद्रशरदंबुरुहेक्षणं दृष्ट्वा तमवनौ सर्वे ईक्षणाह्लादविक्लवाः दंडवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः ३०॥

अन्यञ्च विश्वस्याकारणं तत्राह प्रधानं पुरुषं च तदात्मकोपि सर्वतोव्यपेतः स एव नः शं विधास्यति २७ प्रतीच्यां दिशि हृदि प्रथममाविरभूत् पुनश्च तत्पुरो दृष्ट्वा ईक्षणाह्लादेन विवशाः अवनौ दंडवत्पतिताः शनैरुत्थाय तुष्टुवुरित्यन्वयः २८ कथंभूतं श्रीवत्सकौस्तुभौ विना स्वतुल्यैः षोडशभिः सुनंदादिभिः परितः सेवितं उन्निद्रशरदंबुरुहवदीक्षणे यस्य तं २९॥ ३०॥

यज्ञो वीर्यं स्वर्गादिफलं जननाय सामर्थ्यं यस्य तस्मै नमः। वयसे कालात्मने उत तस्मै तत्फलपरिच्छेदककालात्मने
नमः। तद्विघातकेषु अस्त्रं प्रहितं येन एवंभूतैः प्रभावैः सुदुरहूतयेशोभनवहलनाम्ने ३१ ननु मम गुणातीतस्य विहा-
यगुणोपाधिकं यज्ञवीर्यत्वादि किमिति वर्ण्यते तत्राहुः यत्र वगुणात्रयस्येशितुर्नियंतुस्त्रिगुणात्मकानां तिसृ-
णां गतीनां परमं पदं निर्गुणस्वरूपं तत्र विसर्गस्य अर्वाचीनैरस्माभिस्ततः हे धातः वेदितुं नार्हतीत्यतः केवलं त-
स्मै ते नमोस्तु ३२ मिताक्षराणि पद्यानि नमीयंते हरेर्गुणाः इति पद्यैरतुष्यंतः सद्योगद्येन तुष्टुवुः १ भक्त्युद्रेके
णावधारितं बोधयंतो दुर्ज्ञेयत्वं सप्रपं वयंति भगवन्नित्यादिना परमं मंगलं श्रोधोधमीयस्मिन् आत्मयोगेनाष्टांगे

देवा ऊचुः। नमस्ते यज्ञवीर्याय वयसे उत ते नमः। नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ३१ यत्ते गतीनां तिसृणामीशितुः परमं पदं। नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ३२ ॐ नमस्तेस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममंगल परमकल्याण परमकारुणिक केवल जगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमः कपाटद्वारे चित्तेपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् १ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि २॥

नवः समाधिः चित्तैकाग्र्यं तेन।
परिभावितः सुशीलितः परिस्फुटो यः पारमहंस्यधर्मो भगवद्भजनं तेन उद्घाटितं तमोरूपं कपाटं यस्मिन् तस्मिन् द्वारभूते चि-
त्तेऽपावृते प्रकटे आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तं यन्निजं सुखं तदनुभवरूपो भवान् १ ननु केवला-
नुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथं तत्राहुः दुरवबोध इव तवायं विहारयोगः क्रीडोपायः यद्यस्मादशरणोनि-

णमगु २

दुर्घटत्वं तर्ह्याहुः अथ तत्रेति यद्यपीह देवदत्तो गृहादिनिर्माणे तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवानत्र स्व
रूपेण गुणविसर्गपतितः सन्नुपादत्ते इति यद्वा समंजसं अप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवानुदास्ते उदासीनः साक्षि
तयावर्तत इति ३ नन्वेवं विरोधेन दुर्घटत्वमुक्तं तत्परिहारेण ज्ञानप्रकारमाहुः नहीति विरुध्यत इति विरोधः उभयं न विरु
द्धमित्यर्थः नत्वन्यद्दृष्टं तेन नत्वपि विकल्पो युज्यते अतर्क्यत्वादित्याहुः भगवतीति अपरिमिता गुणगणा यस्य तस्मि
न् ईश्वरे अवतंत्रेन अनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् विकल्प एवं वा एवं वेति वितर्कः किमत्र युक्तमिति विचार।
इत्थमेवेति तत्र प्रमाणाभासाः तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्तेषु यच्छास्त्रं तेषु तैः

**अथ तत्र भवान् किं देवदत्तवदिह गुणविसर्गपतितः पारतंत्र्येण स्वकृतकुशलाकुशलं फ
लमुपादत्ते आहोस्विदात्माराम उपशमशीलः समंजसदर्शन उदास्त इति ह वाव न विदामः
३ नहि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीन
विकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादि
नां विवादानवसर उपरतसमस्तमायामये केवल एवात्ममायामन्तर्धाय को न्वर्थो दुर्घट इव भ
वति स्वरूपद्वयाभावात् ४ समविषममतीनां मतमनुसरसि यथा रज्जुखंडः सर्पादिधियां ५**

कलिलं व्याकुलमंतःकरणमाश्रयो यस्य दुरवग्रहस्य तेन वादिनां विवादस्यानवसरे अगोचरे न नु श्रद्धामात्रमेतत् यु
क्तिरुच्यतां तत्राहुः उपरतो मायामयः संसारो यस्मिन् तस्मिन् केवले आत्ममायामध्ये निधाय को न्वर्थः कर्तृत्वादि न स
म्भवति यद्वि वस्तुतः कर्तृत्वादि भवेत् हि विरोधः स्यात् न तु तदस्तीत्याहुः स्वरूपद्वयाभावादिति ४ अनुग्रहनिग्रहा
दिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः समा विषमा च मतिर्येषां तेषां मतमभिप्रायं सर्पादि विषयधी
र्येषां तेषां यथा रज्जुखंडस्तथा भातीति यद्वा तमेवाविरोधं स्फुटं मतिभेदेन दर्शयंति समविषमेति ५ ॥ राम

घर

तदेवं विरोधं परिहृत्य निष्कृष्टं परमार्थमाहुः स एव हि नानारूपेण प्रतीतवस्तुस्वरूपः सद्रूपः सर्वेषां गुणानां विषयाणा
माभासैः प्रकाशैरुपलक्षितः ननु तैर्जीव एवोपलक्ष्यते तेन सर्वप्रत्यगात्मत्वात् सर्वजीवानां तेषामितत्वात् जडत्वादात्माध्या
सेव जीवस्यापि जडप्रायत्वात् न तेन विना प्रकाश इति भावः पर्यवशेषितः नेति नेत्यादिश्रुतिभिः ६ अतस्त्वद्भक्तिरे
व परमपुरुषार्थ इत्याहुः कथं हेति पर्यावर्त इत्यंतेन यस्मादेवंभूतस्त्वं परमेश्वरः अथ ह वाव अतएव हि हे मधुमथन
परमभागवता एते त्वत्पदांभोजानुसेवां कथं मुहुर्मुहुर्विसृजेतीत्यन्वयः हि यस्मात्त्वय्येव कुशलाः निपुणा अतएव आ
त्मा त्वमेव प्रियः सुहृच्च येषां ते साधवो रागादिरहिताः तत्र हेतुः तव महिमेवामृतरससमुद्रस्तस्य विप्रुषा बिंदुमात्रेण सकृद

स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः परमेश्वरः सकलजगत्कारणकारणभूतः सर्व
प्रत्यगात्मत्वात् सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ६ अथ ह वाव तव महिमामृत
रससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविष
यसुखलेशाभासाः परमभागवता एकांतिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निर
न्तरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्व
च्चरणाम्बुजानुसेवां विसृजंति न यत्र पुनरयं संसारपर्यावर्तः ७ त्रिभुवनात्मभवन त्रिवि क्रम
त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रम
समयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रित जलचराकृतिभिर्यथापराधं दंडं दंडधर दधर्थ

विलीढया आस्वादितया स्वमनसि निष्यन्दमानमतिशयेन स्रवत् निरंतरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशा
भासा येषां ते अत एव भगवति त्वयि निर्वृतं नितरां निर्वृतं मनो येषां ते यत्र यस्यामनुसेवायां सत्यां ७ प्रस्तुतं विज्ञापयंति त्रिभुवने
त्यादिना यावत्समाप्ति त्रिभुवनमात्मा स्वरूपं भवनं च यस्य त्रिभुवनस्यात्मा भवनं चेति वा त्रयो विक्रमा यस्य त्रीन् लोकान्नयती
ति तथा त्रयाणां लोकानां मनोहरोऽनुभावो यस्य एवंभूतस्य तवैव सर्वे ह्याद्याः तेषामनुक्रमसमयः उद्यमकालो येन न भवतीति
मत्वा हे दंडधर एवं यथापराधं दंडं दधर्थ धृतवानसि एवमेव त्वाष्ट्रमपि जहि यदि मन्यसे हंतुं यदीच्छसि ८ ॥

व२

ध१

प्रथमं तावत्त्वदीयानामस्माकं स्वेनस्नापं शमयितुं अर्हसि तावकानामित्यत्र हेतुः हे तत हे पितः हे पितामह तव चरणनलिन
युगलध्यानेनैवानुबद्धो हृदये निगडः संखला येषां स्वलिंगविवरणेन निजमूर्तिप्रकटनेन स्वीकृतानां केन अनुकंपयानु
रंजितं सारागं च तत्क्षिप्रांबुरुचिरं च शिशिरं च स्मितं तत्सहितेन तावल्लोकेन तथ्यानुकंपयैव विगलितो मधुरो मुखरसः प्र
यवाक् सैवामृतकलातया च ॥ किं चास्मदभिप्रायस्त्वया ज्ञापनत एव किमस्माभिर्विज्ञापनीयमित्याह अथ हे भगवन्
तवास्माभिरिह कियान् वाथ विशेषो विज्ञापनीयः स्यादित्यन्वयः यथा हिरण्यरेतसोऽग्नेस्तेदृशा भूतैर्विस्फुलिंगादिभिः प्र

अस्माकं तावकानां तव ननु तनानां तत पितामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडा ॥
नां स्वलिंगविवरणेनात्मसात्कृतानामनुकंपानुरंजितविशदरुचिशिशिरस्मितावलोके ॥
न विगलितमधुरमुखरसामृतकलया चांतस्तापमनघार्हसि शमयितुं ९ अथ भगवंस्तवा ॥
स्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिका १०
यानामंतर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथादेशकालदेहाव
स्थानविशेषं तदुपादानोपलंभकतयानुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात्
परब्रह्मणः परमात्मनः कियानिह वाथ विशेषो विज्ञापनीयः स्याद्विस्फुलिंगादिभिरिव हिरण्यरेते

काशो न क्रियते तथा तवास्माभिः कार्यप्रकाशनं न कार्यमित्यर्थः तत्र हेतुगर्भाणि विशेषणानि अखिलजगदुत्प
त्यादिषु निमित्तायमानया दिव्यमायया विनोदाय अत एव सर्वजीवनिकायानामंतर्हृदयेषु ब्रह्मस्वरूपेण प्रत्यगात्मांतर्या
मीतद्रूपेण च बहिरपि प्रधानरूपेण देशकालदेहावस्थानविशेषाननुलंघ्यानुभवतः कथं तेषामुपादानतया उपलंभ
कतया उपादानस्योपलंभकतयेति वा अत एव सर्वेषां प्रत्ययानां बुद्ध्यादीनामपि साक्षिणः साक्षित्वे हेतुः आकाशवदश
लिप्तं शरीरं स्वरूपं यस्य अलिप्तत्वे हेतुः ब्रह्मणो निरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेरित्यर्थः १० ॥ ॥

अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापिताः तदस्माकं कार्यं स्वयमेवोपकल्पय संपादयेति चरणमेव शतपलाशं कमलं तस्य छायां विविधैर्वृजिनैर्यः संसारपरिश्रमः तस्योपशमकरीं उपसृतानां प्राप्तानां ११ पूर्वमस्मत्कृते क्षीणे स्तत्कामप्यकामान् दितिस्वमेकप्यर्यति अथो अनंतरमेव १२ शीघ्रतद्धायपुनः अणाम् । नितिहंसाय शुद्धाय हृदये आर्तिहराय ते नमः अद्भुत्वै हेतवः दहरनिलयाय दहराकाशाभिव्यक्ताय निरीक्षकाय बुद्ध्यादिसाक्षिणे कृष्णाय सदानंदरूपाय कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते

अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरो तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ११ अथो ईश जहि त्वाष्ट्रं ग्रसन्तं भुवनत्रयं ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च १२ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय सत्संग्रहाय भवपान्थनिजाश्रमाप्तावन्ते परीष्टगतये हरये नमस्ते १३ श्रीशुक उवाच अथैवमीडितो राजन् सादरं त्रिदशैर्हरिः स्वमुपस्थानमाकर्ण्य प्राह तानभिनन्दितः १४ श्रीभगवानुवाच प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि १५ किं दुरापं मयि प्रीते तथापि विबुधर्षभाः मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति तत्त्ववित् १६ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः १७॥

इति निरुक्ते आर्तिहरत्वे हेतवः सर्वैः रुचिरं यशो यस्य निरुपक्रमाय आदिमध्यान्तरहिताय सद्भिः संगृह्यत इति तस्मै तथा भवपान्थाः भवपथि वर्तमानाः तस्य जनस्य निजाश्रमप्राप्तौ शरणभूताय परीष्टा सर्वतः पूजिता उत्तमा गतिः फलं यस्मात् तस्मै १३ अभिनन्दितः संतोषितः मदीयमुपस्थानं स्तोत्रं तत्सहितया विद्यया ज्ञानेन आत्मन ऐश्वर्यस्य स्मृतिः तत्त्वस्य स्मृतिर्यया न हि विरोधः स्वमभिमानादिनाऽकर्तृत्वभोक्तृत्वादेर्मायिकत्वेन भक्तिश्च यया भवति १५ अथापि हे भगवन्निःस्पृहा हि नाम भक्ताः सर्वात्मक्षयाः किं नाम भिन्नदति किमिति १६ यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्र स्वयं अदत्तं कृपालोर्ममानुचितमित्याशयेनाह न वेदेति द्वाभ्यां

रामः

तेजश्च अस्त्राणि च आयुधानि च संपदश्च भूयः प्राप्स्यथ महाकायस्त्रिभुवनग्रासी स एवास्मान् हन्यादिति शंकाकु।
लचित्तान् प्रत्याह मत्परानस्मद्भक्तान् ते न हिंसन्ति अतो युष्माकं भद्रमेवेति २३ इति षष्ठे नवमः ९ दशमे केशवादिष्टदध्य।
ध्यङ्ङस्थिवज्रधृक् इंद्रो युध्यन् वृत्रेण सासुरेण सनिर्जरः १ मोदमानः स्वतनुरवाधर्मकौतुकात् प्रहासाच।
हारणः स्वोवाच अपीति हे वृंदारकाः अपि किं संस्थायां मृत्यौ योऽभिद्रोहो दुःखं तन्न जानीथ ३ आत्मा

तस्मिन् विनिहते यूयं तेजोऽस्त्रायुधसंपदः भूयः प्राप्स्यथ भद्रं वो न हिंसंति च मत्परान्
२३ इति श्रीभागवते महापुराणे षष्ठस्कंधे नवमोऽध्यायः ९ श्रीबादरायणिरुवाच
इंद्रमेवं समादिश्य भगवान् विश्वभावनः पश्यतामनिमेषाणां तत्रैवांतर्दधे हरिः १
तथाभियाचितो देवैरृषिराथर्वणो महान् मोदमान उवाचेदं प्रहसन्निव भारत २
दध्यङ् उवाच अपि वृंदारका यूयं न जानीथ शरीरिणां संस्थायां यस्त्वभिद्रोहो दुःस
हश्चेतनापहः ३ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः क उत्सहेत तं दातुं भि
क्षमाणाय विष्णवे ४ देवा ऊचुः किं नु तद्दुस्त्यजं ब्रह्मन् पुंसां भूतानुकंपिनां भव
द्विधानां महतां पुण्यश्लोकेड्यकर्मणां ५ ननु स्वार्थपरो लोको न वेद परसंकटं य
दि वेद न याचेत नेति नाह यदीश्वरः ६॥ देहः वयं जानीम एव किं तु श्रीविष्णुरस्मन्मुखेन याचत

इति चेत्तत्राह याचमानाय विष्णवे पि दातुं क उत्सहेत ॥ पुण्यश्लोकैरीड्यानि कर्माणि येषां ५ याचकोऽय
दि वेद तर्हि न याचेत् यदीश्वरः दानसमर्थश्च तर्हि सोऽपि नेति नाह अतो यथा न वसंकटं वयं स्वार्थपरा
न जानीम एवं प्रत्याचक्षाणस्त्वमस्मत्संकटं न जानासीति भावः ६ ॥ ॥ ॥

मेमया प्रत्युदाहृताः प्रत्युक्ताः मां त्यजंतं त्यक्ताः यांतमात्मानं देहं ७ अध्रुवेणात्मना देहेन हे नाथाः ८ भूतशोकेन शो-
चति हर्षेण हृष्यति य आत्मा स्वभावस्तस्य यो धर्मः एतावानेवाव्ययः स्थिरः ९ पारक्यैः श्वशृगालादिभक्ष्यैः स्वार्थैः अ-
नुपयोगिभिः स्वविनश्वरैः ज्ञातयः पुत्रादयो विग्रहो देहः तैर्नोपकुर्यादिति यत् १० कृतं व्यवसितं निश्चयो येन सः।

ऋषिरुवाच धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः एष वः प्रियमात्मानं त्यजं-
तं संत्यजाम्यहं ७ यो ध्रुवेनात्मना नाथा न धर्मं न यशः पुमान् ईहेत भूतदयया स शो-
च्यः स्थावरैरपि ८ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः यो भूतशोकहर्षाभ्यामा-
त्मा शोचति हृष्यति अहो दैन्यमहो कष्टं पारक्यैः क्षणभंगुरैः यन्नोपकुर्यादस्वार्थैर्मर्त्यः
स्वज्ञातिविग्रहैः श्रीशुक उवाच एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुं परे भगवति
ब्रह्मण्यात्मानं संनयन् जहौ ११ यताक्षासुमनोबुद्धिस्तत्त्वदृक् ध्वस्तबंधनः आस्थि-
तः परमं योगं न देहं बुबुधे गतं अथेंद्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा मुनेः शक्ति-
भिरुत्सिक्तो भगवत्तेजसान्वितः वृतो देवगणैः सर्वैर्गजेंद्रोपर्यशोभत स्तूयमानो मु-
निगणैस्त्रैलोक्यं हर्षयन्निव १४ वृत्रमभ्यद्रवच्छत्रुमसुरानीकयूथपैः पर्यस्तमो-
जसा राजन् क्रुद्धो रुद्रमिवांतकं १५॥

नं चात्र संनयन् एकीकुर्वन् तनुं जहौ ११ यता अक्षादयो येन
तत्त्वं पश्यतीति तत्त्वदृक् ध्वस्तानि गतानि बंधनानि यस्य १२ अथेंद्र अशोभतेत्युत्तरेणान्वयः मुनेः शक्तिभिः
अस्थिभिर्निर्मितं उत्सिक्तः ऊर्जितः मुनिशक्तिभिरिति वा पाठः १३।१४ असुरानीकानां यूथपैः प-
र्यस्तं परिवृतं १५ ॥ ॥ ॥

रणः संग्रामः प्रथमे चतुर्युगे त्रेतायुगस्य मुखे आरंभे १६।१७ नामृष्यन्नासहंत १८।२२ शतघ्नी च चतुर्हस्ता लोह
कण्टकसंचिता भुशुंडी सर्वतो लोहकण्टकानुक्रमी अतत्प्रमिधाने २३ पुंखो मूलप्रदेशः एकस्य मूलदेशमनुत
स्य लग्नो परस्य पुंखो यथा भवति तथा नभस्येर्घनज्योतींषीवेत्यनेन तेषां तत्प्राप्तिः सूचिताः २४ तामेवाहन

ततः सुराणामसुरै रणः परमदारुणः त्रेतामुखे नर्मदायामभवत्प्रथमे युगे १६ रुद्रैर्वसु
भिरादित्यैरश्विभ्यां पितृवह्निभिः मरुद्भिरृभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिं दृष्ट्वा वज्रध
रं शक्रं रोचमानं श्रिया स्वया नामृष्यन्नसुरा राजन्मृधे वृत्रपुरःसराः १८ नमुचिः श
बरो नर्बो द्विमूर्धा ऋषभोऽम्बरः हयग्रीवः शंकुशिरा विप्रचित्तिरयोमुखः १९ पुलोमा वृष
पर्वा च प्रहेतिर्हेतिरुत्कलः दैतेया दानवा यक्षा रक्षांसि च सहस्रशः २० सुमालिमालि
प्रमुखाः कार्तस्वरपरिच्छदाः प्रतिषिध्येंद्रसेनाग्रं मृत्योरपि दुरासदं २१ अभ्यर्दयन्न
संभ्रान्ताः सिंहनादेन दुर्मदाः गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः २२ शूलैः परश्वधैः ख
ड्गैः शतघ्नीभिर्भुशुंडिभिः सर्वतोऽवाकिरन्शस्त्रैरस्त्रैश्च विबुधर्षभान् न तेऽदृश्यंत संछन्नाः
शरजालैः समंततः पुंखानुपुंखपतितैर्ज्योतींषीव नभोघनैः २४ न ते शस्त्रास्त्रवर्षौघाः
ह्यासेदुः सुरसैनिकान् छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा २५ अथ क्षीणा
स्त्रशस्त्रौघा गिरिशृंगद्रुमोपलैः अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् २६

तेति शस्त्राणामस्त्राणां च यानि वर्षाणि तेषामोघाः न सेदुः न प्रापुः सिद्धपथे आकाशे २५ क्षीणा अस्त्राणां
च शस्त्राणां च ओघाः येषां गिरिशृंगोद्रुपलैश्च २६ ॥ ॥ ॥ ॥

तानिन्द्रसैनिकान् शस्त्रास्त्राणां च पूगैः समूहैर्दानवान् तान् अभ्यन्यान् स्वस्तिमतः सुखिनः द्रुमादिभिश्चाविक्षतान् नि-
शाम्य वृत्रो नाथो येषां ते सुभीताः बभूवुः २७ कृता कृताः पुनः पुनः कृताः कृष्णानुकूला येषां ते सुदेवगणेषु रुषतीः पुरुष-
त्वः अकल्याणपरुषाः परुषा वाचो यथा महत्सु तथा भक्ता अभवन्निति तद्वत् २८ हतो युद्धदर्पो येषां ते आत्तः परैर्गृहीतः
सारो धैर्यं येषां ते अतिप्रसिद्धा आपन्ने देशाः एवं स्थिते पानरं तं आजिमुखे युद्धारम्भे पतिं विसृज्य पलायनाय

आसन्

तान् दानवान् स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः द्रुमैः दृषद्भिर्विविधाद्रिशृं-
गैरविद्धतांस्तत्रसुरेन्द्रसैनिकान् २७ सर्वे प्रयासा अभवन् विमोघाः कृताः कृता देवगणेषु
दैत्यैः कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुषती रूक्षवाचः २८ ते स्वप्रयासं वितथं नि-
रीक्ष्य हरावभक्ता हतयुद्धदर्पाः पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः २९ वृ-
त्रोऽसुरांस्ताननुगान् मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् पलायितं प्रेक्ष्य बलं च भग्नं भयेन ती-
व्रेण विहस्य वीरः ३० कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः हे विप्रचि-
त्ते नमुचे पुलोमन् मयानर्वञ्छम्बर मे शृणुध्वं ३१ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रि-
या यस्य न चेह क्लृप्ता लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तं ३२ द्वौ
सम्मताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः कलेवरं योगरतो विजह्यात् यदग्रणी
वीरशये निवृत्तः ३३ इति श्रीभा० षष्ठ० दशमोऽध्यायः १०॥

मनो दधुः यतो हरावभक्ताः २९ प्रधावतः
पलायमानान् प्रेक्ष्य आदावेव तीव्रेण भयेन पलायितं भग्नं च सद्बलं सैन्यं तच्च प्रेक्ष्य एतद् वक्ष्यमाणं बभाषे ३० तदेवावि-
ष्करोति कालोपपन्नामवसरोचितां मनस्विनां रोचिकां हे मयादे अनर्वन् मे वाचं शृणुत ३१ ततो मृत्योः इह यशः लोकः स्वर्गः
यदि स्यात्तर्हि अमुं मृत्युं युक्तं समीचीनं न वृणीत वा ३२ ब्रह्मसंधारणया कलेवरं योगरतो विजह्यादिति यत् स एको मृत्युः वीरश-
यने रणे मृत्यौ अनिवृत्तः अपराङ्मुखः सन् जह्यात् इति यत् स च एकः तौ द्वाविह शास्त्रसम्मतौ मृत्यू च तथा च स्मृतिः

एकादशेनुवृत्रस्यवध्यमानस्यवज्रिणा भक्तिज्ञानबलोदर्कास्त्रिभिर्वाचोनुवर्णिताः १ तेसमतः कम्पयतः प्रत्युवाच १ कालानुकूलैः कालानुवर्तिभिः काल्यमानां विद्राव्यमाणां २ असहमानाः तान् त्रिदशान् निवार्य निर्भर्त्स्य चेदंवक्ष्यमाणमुवाच ३ तदाहद्वाभ्यां मातुरुच्चारितैः पुरीषप्रायैः प्रष्ठमात्रपाठे देवानां संबोधनं पृष्ठतो हतैर्युष्माभिः किं न किंचित् यशो नाशो नोपि धर्मः तदेवाह न हीति ४ प्रधने संग्रामे सारं धैर्यं हे क्षुल्लकाः तुच्छाः मात्रं क्षणमात्रं अग्रे

शुकउवाच तएवंशंसतोधर्मंवचःपत्युरचेतसः नैवागृह्णन्भयत्रस्ताःपलायनपरान्नृप १ विशीर्यमाणांपृतनामासुरीमसुरर्षभः कालानुकूलैस्त्रिदशैःकाल्यमानामनाथवत् २ दृष्ट्वातप्यत संक्रुद्ध इंद्रशत्रुरमर्षितः तान्निवार्यौजसाराजन्निर्भर्त्स्येदमुवाच ह ३ किंवउच्चरितैर्मातुर्धावद्भिःपृष्ठतोहतैः नहिभीतवधःश्लाघ्योनस्वर्ग्यःशूरमानिनां ४ यदिवःप्रधनेश्रद्धासारंवाक्षुल्लकाहृदि अग्रेतिष्ठतमात्रंमेनचेद्ग्राम्यसुखेस्पृहा ५

ग एवंसुरगणान्क्रुद्धोभीषयन्वपुषारिपून् व्यनदत्सुमहाप्राणोयेनलोकाविचेतसः ६ तेनदेवगणाःसर्वेवृत्रविस्फोटनेनवै निपेतुर्मूर्छिताभूमौयथैवाशनिनाहताः ७ ममर्दपद्भ्यांसुरसैन्यमातुरंनिमीलिताक्षंरणरंगदुर्मदः गांकंपयन्नुद्यतशूलओजसानालंवनंयूथपतिर्यथोन्मदः ८ विलोक्यतंवज्रधरोत्यमर्षितःस्वशत्रवेभिद्रवतेमहागदां चिक्षेपतामापततींसुदुःसहांजग्राहवामेनकरेणलीलया ९॥ रामायनमः ॥

तिष्ठत न चेदिह लोकभोगेस्पृहास्ति ५ सुरगणान्रिपून् सुमहान् प्राणोबलंयस्ययेनविचेतसोबभूवुः ६ वृत्रस्यविस्फोटेननादेन ७ उद्यतशूलः येननालं नलानांवनं उद्धतोयस्य सयूथपतिर्गजोयथामर्दयति ८ ९।

१० सप्तधनुः प्रमाणं देशं क्रोशमात्रं ११ सन्नो वृत्रनो वाहो यस्य तस्मै न प्रायुंक्त अमृतस्यंदी अमृतस्रावीयः स्वकरः तेनाभि
मर्शः स्पर्शः तेन वीता व्यथा गता दुःखं क्षतो वाहो यस्य पुरुस्मृत प्राप्त तावत् अवतस्थे १२ स वृत्रः हे नृपेंद्र आहवकाम्यया युद्धे
च्छयावस्थितं भ्रातृहणं विश्वरूपहंतारं च शंसन् क्रूरं तद्देवाहः पापं तस्य कर्म स्मरन् १३ यो ब्रह्महा ब्राह्मणहंता वान्
विशेषतः अस्माकं गुरुः मम च भ्रातरं हत्वा गतः स मवस्थितः एतद्दिष्ट्या भद्रं जातं दिष्ट्येत्यस्य अयमानंदार्थे हे असत्त

सइंद्रशत्रुःकुपितोभृशंतयामहेंद्रवाहंगदयोरुविक्रमः जघानकुंभस्थलउन्नदन्मृधेत
त्कर्मसर्वेसमपूजयन्नृप १० ऐरावतोवृत्रगदाभिमृष्टोविघूर्णितोद्रिःकुलिशाहतोय
था अपासरद्भिन्नमुखः सहेंद्रोमुंचन्नसृक्सप्तधनुर्भृशार्त्तः ११ नसन्नवाहायवि
षण्णचेतसेप्रायुंक्तभूयःसगदांमहात्मा इंद्रोमृतस्यंदिकराभिमर्शवीतव्यथक्षतवाहोव
तस्थे १२ सतंनृपेंद्राहवकाम्ययारिपुंवज्रायुधंभ्रातृहणंविलोक्यस्मरंश्चतत्कर्मनृशं
समंहःशोकेनमोहेनहसन्जगाद १३ वृत्रउवाच दिष्ट्याभवान्मेसमवस्थितोरिपुर्यो
ब्रह्महागुरुहाभ्रातृहाच दिष्ट्यानृणोद्याहमसत्तमत्वयामच्छूलनिर्भिन्नदृषद्धृदाचि
रात् १४ योनोग्रजस्यात्मविदोद्विजातेर्गुरोरपापस्यचदीक्षितस्यच विश्रभ्यखड्गेनशिरां
स्यवृश्चत्पशोरिवाकरुणःस्वर्गकामः १५ ह्रीश्रीदयाकीर्तिभिरुज्झितंत्वांस्वकर्मणापुरु
षादैश्चगर्ह्यंकृच्छ्रेणमच्छूलविभिन्नदेहमस्पृष्टवह्निंसमदंतिगृध्राः १६॥ मम शूलेन भिन्नं दृ

षतुल्यं हृतं हृदयं यस्य तेन त्वया निमित्तभूतेन अद्य अचिरादेव भ्रातुरनृणो हं स्यामित्त च दिष्ट्या १४ स्वर्गकामो यो भवा
न् कृतः स्वर्गकामो याज्ञिकः पशोरिवेति वा १५ त्वां अस्पृष्टवह्निं दग्धदेहं समदंति खादंति वर्तमानसामीप्ये वर्तमा
नवन्निर्देशः १६ अस्मायपि अजाः हत्वा त्वां नृशंसमनुमन्यमपि ये नाम्नाः संतो यदि प्रहरंति तेभ्ये तन्नापान्भैरवादीन्

अथो अथवा हे हरे भो इंद्र यदि भवानेव मम शिरो हर्ता हरिष्यति तत्र तथा सति अनृणो विमुक्तकर्मबंधनः सन् तेभ्यो बलिं देहं निविधाय मनस्विनां पादरजः प्रपत्स्ये धीराणां पदं प्राप्स्यामि १८ जीवितार्थिभिः सुरैर्वा मम मामिमत इत्याशयेनाह सुरेशेति न हिनोषि न क्षिपसि गदेव निःफलो भविष्यतीति संशयं मा कार्षीः कृपणार्थः प्रयोजनं यस्याः सा यच्ञा याचानिःफला तथा न स्यात् १९ अमोघत्वे हेतुं वदन् तं प्रोत्साहयति नन्विति तेजितस्तीक्ष्णीकृतः शत्रुं मां जहि विष्णु

अस्य टीकाए वे भागे १॥॥

अन्ये तु ये त्वेह नृशंसमज्ञा यदुद्धताः स्युः प्रहरंति मह्यं तैर्भूतनाथान्सगणान्निशात त्रिशूलनिर्भिन्नगलैर्यजामि १७ अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये १८ सुरेश कस्मान्न हिनोषि वज्रं पुरः स्थिते वैरिणि मय्यमोघं मा संशयिष्ठा न गदेव वज्रः स्यान्निष्फलः कृपणार्थेव याच्ञा १९ नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचस्तपसा च तेजितः तेनैव शत्रुं जहि विष्णुयंत्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः २० अहं समाधाय मनो यथाह संकर्षणस्तच्चरणारविंदे त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः २१ पुंसां किलैकांतधियां स्वकानां याः संपदो दिवि भूमौ रसायां न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः २२॥

ज.३

नायंत्रितः प्रेरितः २० हननेन मम पीडा स्यादिति त्वया विषादो न कार्य इत्याह अहमिति संकर्षणो मम स्पतिर्यथाह तथा तदीयचरणारविंदे मनः समाधाय मुनेर्योगिनो गतिं मह्यं यास्यामि त्वद्वज्रस्य रंहसा लुलितः छिन्नो ग्राम्यपाशो विषयभोगलक्षणो यस्य अपविद्धलोकः त्यक्तदेहः २१ तर्हि भगवान् संकर्षणः स्वभक्तानाम् ऐश्वर्यमेव कस्मान्न ददाति स्वपदं दास्यतीत्याशंक्य विषादः संशयविषादः इत्याह पुंसामिति स्वर्गे भूमौ रसातले च याः संपदस्ताः किल निश्चयेन न राति न ददाति तत्र हेतुः यत् याभ्यः द्वेषादयो भवंति २२॥ रामाय नमः रामाय नमः

ह

तर्हि त्वद्भक्तस्य किं विधत्ते तत्राह त्रैवर्गिकेति धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते ततः आयासाभावादे
वानुमेयः तत्त्वैश्वर्यादिना अतः सम्यक् भगवत्प्रसादाभावात्तव मत्पदे भविष्यतीति भावः २३ एवमभिप्रायस्वाभिप्रायं नि
वेद्य भगवंतं प्रार्थयते अहमिति तव पादावेव एकं मूलमाश्रयो येषां तेषां दासानामनुदासः भूयो भवितास्मि भविष्या
मि भवेयं असुपतेः प्राणनाथस्य तव गुणान्मम मनः स्मरतु वाग्गृणातु तानेव कीर्तयतु कायस्त्वेव कर्म करोतु २४ ना

त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ततोनुमेयो भगवत्प्रसादो यो दुर्लभो
किंचनगोचरोन्यैः २३ अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः मनः स्मरे
तासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः २४ न नाकपृष्ठं न च पारमेष्ठ्यं न रसाधिप
त्यं न योगसिद्धीरपुनर्भवं वा समंजसत्वा विरहय्य कांक्षे २५ अजातपक्षा इव मातरं खगा
स्तन्यं यथा वत्सतराः क्षुधार्ताः प्रियं प्रियेव व्युषितं विषण्णा मनोरविंदाक्ष दिदृक्षते त्वां २६
ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः त्वन्माययात्मात्मजदारगे
हेष्वासक्तचित्तस्य न नाथ भूयात् २७ इति श्रीभागवते महापुराणे षष्ठस्कंधे एका
दशोध्यायः ११॥

सार्वभौमं न २३

नु किं मम दास्येन तुभ्यं महाफलानि दास्यामि तत्राह नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च
हे समंजस निखिलसौभाग्यनिधे त्वा त्वां विरहय्य परित्यज्य किंचन कांक्षे नेच्छामि २५ तर्हि किमिति तदाह अजात
पक्षाः खगा वकादिभिः पीडिताः यथा मातरं यथा च दाम्ना बद्धा वत्सतराः स्तन्यं च यथा च व्युषितं दूरदेशगतं प्रियं
कामेन विषण्णा प्रिया तथा मे मनस्तव पत्रपीडितं कर्मभिर्बद्धं च कामादिभिर्विषण्णं च त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः
२६ उत्तमश्लोकस्य तव जनेषु भक्तेष्वेव सख्यं भूयात् त्वन्माययात्मदेहादिष्वासक्तस्य मे भूयोऽपि तेष्वासक्तिर्न भूयात् २७
इति षष्ठे एकादशः ११ ॥ ॥

द्वादशेति विवृत्रस्तेन स्वयमुक्त्वा हितेन तु महेन्द्रेण महापुंडेवृत्रस्य वधः ईर्यते १ महापुरुषं प्रति कैटभः अप्सु प्रलयोदके ॥ यु
गान्ताग्निवत् कठोरा जिह्वा शिखा यस्य तत् आविध्य भ्रामयित्वा २ ततः खे आपतत् आगच्छत् विचलन्तः परिभ्रमन्तः
ग्रहा उल्काश्च यस्मिन् तत् दुःप्रेक्ष्यं शतपर्वणा यस्य तेन उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारं ३ हनौ।

ऋषिरुवाच एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः शूलं प्रगृह्याभ्यपत
त्सुरेन्द्रं यथा महापुरुषं कैटभोऽप्सु १ ततो युगान्ताग्निकठोरजिह्वमाविध्य शूलं तरसासुरे
न्द्रः क्षिप्त्वा महेन्द्राय विनद्य वीरो हतोऽसि पापेति रुषा जगाद २ ख आपतत्तद्विचलद्ग्रहोल्क
वन्निरीक्ष्य दुःप्रेक्ष्यमजातविक्लवः वज्रेण वज्री शतपर्वणाच्छिनत् भुजं च तस्योरगरा
जभोगं ३ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रं हनौ तताडेन्द्रमथाम
रेभं वज्रं च हस्तान्न्यपतन्मघोनः ४ वृत्रस्य कर्मातिमहाद्भुतं तत्सुरासुराश्चारणसिद्धसंघाः
अपूजयंस्तत्पुरुहूतसंकटं निरीक्ष्य हा हेति विचुक्रुशुर्भृशं ५ इन्द्रो न वज्रं जगृहे विलज्जि
तश्च्युतं स्वहस्तादरिसन्निधौ पुनः तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादका
लः ६ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनां विनैकमुत्पत्तिलयस्थि
तीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनं ७ लोकाः सपाला यस्येमे श्वसन्ति विवशा वशे द्विजा इव शि
चा बद्धाः स काल इह कारणं ८ ॥ कपोलप्रान्ते अमरेभमैरावतं च ४।५ तन् अग्ने तमाह वृत्रो हे हरे इन्द्र ६ सदा ज
यो नैव किंतु कुत्रचिज्जयः एकत्र कुत्रचिन्नैव परत्र कुत्रचिदपि युयुत्सतां सदा जयो नैव किं त्वेकत्रैव कदाचिदेवेत्य
र्थः परात्मनां आत्मा येषां पराधीनात्मनामिति वा आद्यमनादिं सनातनं नित्यं ७ पराधीनतामेवाह लोका इति सपा
लाः यस्य वशे स्थिताः स्वयं विवशाः सन्तः श्वसन्ति चेष्टन्ते द्विजाः पक्षिणः शिचा जालेन कालः कलयतीति सग

ओज आदिरूपं कालं तं हेतुमज्ञाय अविज्ञाय जडं स तमात्मानं देहं हेतुं मन्यते ९ ननु स्वारंभकप्रधानेश्वरादितं आणीति युक्तं
तत्राह पुरुष इति व्यक्तं महत्वं आत्मा अहंकारः ११ ननु स्वकर्मद्वारा जीव एव सृष्ट्यादिहेतुरिति मीमांसका मन्यन्ते तत्राह एवम्
विद्वान् अनीशमेवात्मानमीश्वरं स्वतंत्रं मन्यते ननु पित्रादयः स्रष्टारो दृश्यन्ते व्याघ्रादयस्तु हंतारस्तत्राह भूतैरिति स्वयं
ईश्वरः १२ ननु त्वयापराजितस्य मम जयादिशंकैव नास्ति किमिति मां बलात् युद्धे प्रवर्तयसि तत्राह आयुरिति तत्काले

ओजः सहो बलं प्राणममृतं मृत्युमेव च तमज्ञाय जनो हेतुमात्मानं मन्यते जडं ९ यथा दारुमयी नारी यथा पत्रमयो मृगः एवं भूतानि मघवन् ईशतन्त्राणि विद्धि मो १० पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेन्द्रियाशयाः शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहात् ११ अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरं भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयं १२ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः भवन्त्येव हि तत्काले यथानिच्छोर्विपर्ययाः तस्मादकीर्तियशसोर्जयापजययोरपि समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः तत्र साक्षिणमात्मानं यो वेद स न बध्यते १५ पश्य मां निर्जितं शत्रु वृक्णायुधभुजं मृधे घटमानं यथाशक्ति तव प्राणजिहीर्षया १६ प्राणग्लहोऽयं समर इष्वक्षो वाहनासनः अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः १७॥

जयादिकाले विपर्ययाः कीर्त्यादयः १३ यस्मादेवं सर्वमीश्वराधीनं तस्मात्समः। स्यात् हर्षविषादहीनो भवेत् १४ समदृष्टावुपायमाह सत्त्वमिति हर्षादिभिर्न बध्यते १५ हर्षविषादनिवृत्तो न वाहमेव गु रुरित्याह पश्येति वृक्णायुधं भुजं यस्य १६ अनियतत्वं द्यूतरूपकेणोपसंहरति प्राणा एव ग्लहः पणो यस्मि न् इषवः बाणा एवाक्षाः यस्मिन् वाहनान्येव ततस्तत्स्थानसमानानि आसनानि फलकानि यस्मिन् १७॥

गतालीकं निःकपटं १८ भक्तः सेवितवानसि १९।२१ तस्य नवखातकोदकैः गर्तादिजलोपमैः स्वर्गादिभिः किं २२ यु
धानां संग्रामाणां पती मुख्यौ २३ हे मारिष क्षत्रिय राजन् २४।२५ उत्कृत्तम् लं ययोस्ताभ्यां रक्तं स्रवतीति तथा गोत्रः प।

श्रीशुक उवाच इंद्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत् गृहीतवज्रः प्रहसंस्तमाह गत
विस्मयः १८ अहो दानव सिद्धोसि यस्य ते मतिरीदृशी भक्तः सर्वात्मनात्मानं सुहृदं जग
दीश्वरं १९ भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीं यद्विहायासुरं भावं महापुरुषतां
गतः २० खल्विदं महदाश्चर्यं यद्रजः प्रकृतेस्तव वासुदेवे भगवति सत्वात्मनि दृढा मतिः य
स्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे विक्रीडतोमृतांभोधौ किं क्षुद्रैः खातकोदकैः २२ शुक
उवाच इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप युयुधाते महावीर्याविंद्रवृत्रौ युधांपती २३
आविध्य परिघं वृत्रः कार्ष्णायसमरिंदम इंद्राय प्राहिणोद्घोरं वामहस्तेन मारिष २४ स तु वृ
त्रस्य परिघं करं च करभोपमं चिच्छेद युगपद्देवो वज्रेण शतपर्वणा २५ दोर्भ्यामुत्कृत्तमूला
भ्यां बभौ रक्तस्रवोसुरः छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः कृत्वाधरां हनुं भूमौ
दैत्यो दिव्युत्तरां हनुं नभोगंभीरवक्त्रेण लेलिहोल्बणजिह्वया २७ दंष्ट्राभिः कालकल्पा
भिर्ग्रसन्निव जगत्त्रयं अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन् २८ गिरिराट् पादचा
रीव पद्भ्यां निर्जरयन्महीं जग्रास स समासाद्य वज्रिणं सहवाहनं २९॥

र्वतः २६ कृत्वाधरां हनुंभूमित्या
देर्जग्रासेति तृतीयेनान्वयः नभोवद्गंभीरेण वक्त्रेण लेलिहः सर्पः तद्वदुल्बणया जिह्वया २७ कालकल्पाभिः काल
तुल्याभिः ग्रसन्निव अतिमात्रोऽत्युच्छ्रितो महान्कायो यस्य आक्षिपन् चालयन् २८ निर्जरयन् चूर्णयन् २९॥

२।३ तस्य हरेरिंद्रस्य दुःखहेतुं वक्तुं प्रस्तावकथामाह वृत्रविक्रमेत्यादिना आर्थयन् प्रार्थयंतः वृत्रवधात् ब्राह्मणवधात् भीतः सन् ४ एनः पापं विभक्तं विभज्य गृहीतं मार्ज्मि शोधयामि ५। ७ वृषाकपिमिंद्रं १० तया देवादिभिः

देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयं प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेंद्रादयस्ततः २ राजोवाच इंद्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने येनासन् सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ३ शुक उवाच वृत्रविक्रमसंविग्नाः सर्वे देवा महर्षिभिः तद्वधायार्थयन्निंद्रं नेच्छद्भीतो बृहद्वधात् ४ इंद्र उवाच स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवं विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क्व मार्ज्म्यहं ५ शुक उवाच ऋषयस्तदुपाकर्ण्य महेंद्रमिदमब्रुवन् याजयिष्याम भद्रं ते हयमेधेन मा स्म भैः ६ हयमेधेन पुरुषं परमात्मानमीश्वरं इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ७ ब्रह्महा पितृहा गोघ्नो मातृहाचार्यहाघवान् श्वादः पुल्कसको वापि शुध्येरन् यस्य कीर्तनात् ८ तमश्वमेधेन महामखेन श्रद्धान्वितोऽस्माभिरनुष्ठितेन हत्वापि सब्रह्मचराचरं त्वं न लिप्यसे किं खलनिग्रहेण ९ शुक उवाच एवं संचोदितो विप्रैर्मरुत्वानहनद्रिपुं ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिं १० तयेंद्रः स्मासहत्तापं निर्वृतिर्नामुमाविशत् ह्रीमंतं वाच्यतां प्राप्तं सुखयंत्यपि नो गुणाः ११ तां ददर्शानुधावंतीं चांडालीमिव रूपिणीं जरया वेपमानांगीं यक्ष्मग्रस्तामसृक्पटां १२

कारितयास्येस्य वधारतो इंद्र एव तापमसहत नान्यः अमुमिंद्रं निर्वृतिर्नाविशत् ननु धैर्यादिगुणयुक्तस्य कुतो निर्वृतिस्तत्राह ह्रीमंतं वाच्यतां निंद्यतां ११ यक्ष्मग्रस्तां क्षयरोगव्याप्तां १२॥

मीनस्येव गंधो यस्य स मीनगंधिः सत्यवत्याः सुगंध्याश्वासवायुस्तस्य गंधेन १३ प्रागुदीचीं दिशं गतः सन् तत् गौमानसं
सरः प्रविष्टः १४ स इंद्रः सहस्रं वर्षाणि पुष्करनालतंतुनावसत् कथंभूतः न लब्धो भोगो येन सः कुतः यतः य
स्मादिह जले वसत् अग्निदूतस्य त्वपं अग्नेर्भागस्य दूतस्य हविर्भागान्नेतुं जले प्रवेशासंभवात् अलब्धभोगः तस्य एषः
पादांतरेन लब्धो यज्ञभागो येन सः १५ त्रिणाकं नकेदुः त्रिणाकमिति नाकः श्रणं लोकः तृतीयकं स्वर्गं नहु
मनुष्यस्य कुतः स्वर्गराज्यं तत्राह विद्यादिभिरनुभावः स्वर्गपालनसामर्थ्यं यस्य सः तर्हि तस्मिन् सति कथमिंद्रा।

विकीर्यपलितान्केशांस्तिष्ठ तिष्ठेति भाषिणी मीनगंधसुगंधेन कुर्वती मार्गदूषणं १३ नभोगतो दिशः सर्वाः सहस्राक्षो विशांपते प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप मानसं १४ स आवसत्पुष्करनालतंतून् अलब्धभोगो यदिहाग्निदूतः वर्षाणि साहस्रमलक्षितोंतः सचिंतयन्ब्रह्मवधाद्विमोक्षं १५ तावत्त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः स संपदैश्वर्यमदांधबुद्धिर्नीतस्तिरश्चां गतिमिंद्रपत्न्या १६ ॥ ततो गतो ब्रह्मगिरोपहूतः ऋतंभरध्याननिवारिताघः पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या १७ ॥

स पुनः स्वर्गप्राप्तिस्तत्राह सन्नहुषः संपदैश्वर्याभ्यां यो मदस्तेनांधा बुद्धिर्यस्य सः इंद्रपत्न्या शच्या।
च्या तिरश्चां गतिं सर्पयोनिं नीतः उपायेन प्रापितः एवं ह्याख्यायते नहुषः किल कदाचिदिंद्राणीमुवाच इंद्रस्त्वां वहते अ
नत्त्वं मां भजेति तया चावेदितं वृत्तांतं बृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिविकामारुह्यागतं त्वां भजिष्यामीति ब्रूहि ततो
सौ ब्राह्मणपापाप्यतिधावितन्याचितः तथोक्तो नहुषोगस्त्यादीन् शिबिकावाहयामास तदा च शीघ्रं सर्पसर्पेत्यगस्त्यं पदा
पस्पर्श तेन सर्पो भवेति शप्तो महासर्पः अजगरः अभूदिति १६ ततः इंद्रः स्वर्गं गतः प्राप्तः कथंभूतः ब्रह्मगिरा ब्राह्मणवाक्येनोपहू
तः सन् ऋतंभरः सत्यपालको हरिस्तस्य ध्यानेन निवारितं अघं येन ब्राह्मणपि तु पापो ब्रह्मवधस्तमिंद्रं नाभ्यभूत् तस्यापि
भवं नाकरोत् कुतः दिग्देवतया प्रागुदीच्यां दिशि स्थितया आभ्यां रुद्रेण वितरदिति संतं विष्णुपत्निर्देवता यस्या विष्णुपत्नीत्या १७

पुरुषस्य हरेराराधनं यस्मिंस्तेन १८ सर्वदेवमय आत्मा मूर्तिर्यस्य तस्मिन् सर्वदेवमयात्मनीति वा पाठः ब्रह्मवादिभि
र्विततेऽनुष्ठिते अश्वमेधे महेंद्रेणाध्वज्यमाने पुरुषे सति १९ तेनैव पुरुषेणोत्वाष्ट्रवधः शून्याय नीतः नाशित इत्यर्थः २० अधि
कृताय यज्ञायेन तं २१ पादाशिविधातुमाख्याने स्तौति इदमिति प्रक्षाल्यते नैव प्रति प्रक्षालनं तीर्थपदस्यानुकीर्तनं यस्य

तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत यथावद्दीक्षयांचक्रुः पुरुषाराधनेन ह १८ अथेज्यमाने
पुरुषे सर्वदेवमयात्मनि अश्वमेधे महेंद्रेण वितते ब्रह्मवादिभिः १९ स वै त्वाष्ट्रवधो भूयान
पि पापचयो नृप नीतस्तेनैव शून्याय नीहार इव भानुना २० स वाजिमेधेन यथोदितेन विता
यमानेन मरीचिमिश्रैः इष्ट्वाधियज्ञं पुरुषं पुराणमिंद्रो महानास विधूतपापः २१ इदं महा
ख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनं भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेंद्रमो
क्षं विजयं मरुत्वतः २२ पठेयुराख्यानमिदं सदा बुधाः शृण्वंत्यथो पर्वणि पर्वणींद्रियं धन्यं
यशस्यं निखिलाघमोचनं रिपुंजयं स्वस्त्ययनं तथायुषं २३ इति श्रीभागवते महापुराणे ष
ष्ठस्कंधे इंद्रविजयो नाम त्रयोदशोऽध्यायः १३ राजोवाच रजस्तमःस्वभावस्य ब्रह्मन्वृत्र
स्य पाप्मनः नारायणे भगवति कथमासीद्दृढा मतिः १ देवानां शुद्धसत्वानामृषीणां चामला
त्मनां भक्तिर्मुकुंदचरणे न प्रायेणोपजायते २ ॥ स्मिन् भक्ते उच्छ्रयो यस्मिन् भक्तजनानामनुवर्णनं यस्मि

न् महेंद्रस्य मोक्षो यस्मिन् मरुत्वतो विशेषेण जयो यस्मिन् २२ इंद्रियं तस्माद् बलकरं इदं सेवधीति वा आयुष्यं आयुष्य
२३ षष्ठे त्रयोदशः १३ वृत्रस्य ज्ञानभक्त्यादि श्रुत्वा पृष्टः परीक्षिता हेतुमाह चतुर्भिस्तत्र प्राक्जन्मचरितोक्तिभिः १ ॥
चतुर्दशे तु सहसा कृच्छ्रलब्धे सुते मृते चित्रकेतोरतिस्नेहाद्दातिशोको निरूप्यते २ रजस्तमःस्वभावो यस्य १।२

भक्तेर्दुर्लभत्वं प्रपंचयति त्रिभिः पार्थिवै रजोभिः परमाणुभिः समाः संख्याता अनंता इत्यर्थः जंतवो जीवाः तेषां मध्ये ये केच
नकिल ये श्रेयो धर्ममीहंते कुर्वंति ३ मुच्येत गृहादिसंगाद्विमुच्यते सिध्यति तत्त्वं जानाति ४ न चेंद्रभिया कृष्णमस्मार ५

रजोभिः समसंख्याताः पार्थिवैरिह जंतवः तेषां ये केचनेहंते श्रेयो वै मनुजादयः ३ प्रायो
मुमुक्षवस्तेषां केचनैव द्विजोत्तम मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ४ मुक्ताना
मपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशांतात्मा कोटिष्वपि महामुने ५ वृत्रस्तु स कथं
पापः सर्वलोकोपतापनः इत्थं दृढमतिः कृष्ण आसीत्संग्राम उल्बणे ६ अत्र नः संशयो भू
यान् श्रोतुं कौतूहलं विभो यः पौरुषेण समरे सहस्राक्षमतोषयत् ७ सूत उवाच परीक्षितो
थ संप्रश्नं भगवान्बादरायणिः निशम्य श्रद्दधानस्य प्रतिनंद्य वचोऽब्रवीत् ८ शुक उवाच
शृणुष्वावहितो राजन्नितिहासमिमं यथा श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि ९ आसी
द्राजा सार्वभौमः शूरसेनेषु वै नृप चित्रकेतुरिति ख्यातो यस्यासीत्कामधुङ्मही १० त
स्य भार्यासहस्राणां सहस्राणि दशाभवन् सांतानिकश्चापि नृपो न लेभे तासु संततिं ११ रू
पौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः संपन्नस्य गुणैः सर्वैश्चिंता वंध्यापतेरभूत् १२
न तस्य संपदः सर्वा महिष्यो वामलोचनाः सार्वभौमस्य भूश्चेयमभवन्प्रीतिहेतवः १३ तस्यै
कदा तु भवनमंगिरा भगवानृषिः लोकाननुचरन्नेतानुपागच्छद्यदृच्छया १४ ॥ लंगत इत्याहयः।

पौरुषेणेति ७ यथा यथावत् श्रुतं ९।१० भार्यासहस्राणां दशसहस्राणि कोटिरित्यर्थः सांतानिकः स्वयं संताना
र्होपि पुत्रोत्पादनसमर्थोपि तासु संततिं न लेभे सर्वास्ता वंध्या एव दैवयोगेन मिलिता इति भावः ११ तदेवाह वंध्यापतेरिति

उपासीदत्तस्य समीपमुपविवेश सहितः संयतः १५ अपि किं अनामयमारोग्यं स्वाङ्गेषु शुभं प्रकृत्यधीनमेव हि।
राज्यमिति सदृष्टान्तमाह यथा महदादिभिः सप्तभिः प्रकृतिभिः पुमान् जीवो नित्यं गुप्तो भवति न तु तद्व्यतिरेकेण
त्राणमपि तिष्ठति तथा राजापि सप्तभिः स्वाम्यमात्यो जनपद दुर्गं द्रविणसंचयाः दण्डो मित्रं च तैस्ताः सप्तप्रकृ।
तयोर्मतास्त्युक्तलक्षणाभिर्निस्संग्रः सन्न स्वामी गुरुः स्वयं वा मन्त्रसहायो मित्रं कर्मसहायो अमात्य इत्ययं इति भेदः १७

तं पूजयित्वा विधिवत्स्तुत्यान्नार्हणादिभिः कृताञ्जलिपुटमुपासीदत्सुखासीनं समाहितः म
हर्षिस्तमुपासीनं प्रश्रयावनतं स्थितो प्रतिपूज्य महाराज समाभाष्येदमब्रवीत् १६ अपि रा
उवाच अपि त्वनामयं स्वस्ति प्रकृतीनां तथात्मनः यथा प्रकृतिभिर्गुप्तः पुमान् राजा च सप्तभिः
१७ आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् राज्ञा तथा प्रकृतयो नरदेवाहिताधयः
१८ अपि दाराः प्रजामात्या भृत्याः श्रेण्योऽथ मन्त्रिणः पौरा जानपदा भूपा आत्मजा वशवर्तिनः
१९ यस्यात्मानुवशश्चेत्स्यात्सर्वे तद्वशगा इमे लोकाः सपाला यच्छन्ति सर्वे बलिमतन्द्रिताः २०।

आत्मानं प्रकृतिष्वद्धा साक्षान्निधाय तदनुवर्तित्वं कृत्वा श्रेयः राज्यसुखं प्राप्नुयादित्यर्थः प्रकृतीनां च सुखं राजा।
धीनमेवेत्याह हे नरदेव तथा प्रकृतयो विराज्ञा आहिताधयः निहितनिक्षेपाः धनैः समृद्धा भवन्ति पाठान्तरे आसमे
ततो हताधयो निरस्तमनोदुःखा भवन्तीत्यर्थः १८ अमात्याश्च श्रेण्यश्च समया विशेषेण संघशो वर्तमाना वर्गीकृ
प्रभृतयः मन्त्रिणः मन्त्रसहायाः पौराः पुरवासिनः जानपदा भूपास्तत्तद्देशाधिकारिणः १९ तममनः स्ववशवा
नवेत्यर्थः यच्छन्ति यस्यात्मा मनः अनुवशः अनुवर्ती अधीनः स्यात्तस्य वशगा इमे सर्वे भवन्ति किं च लोकाश्च
तस्य बलिं यच्छन्ति २०॥

रामः रामः रामः

जातकं जन्मकर्म ३३ अर्बुदं दशकोटयः वेदेतु कोटिरेवार्बुदं नियुतं प्रयुतं चार्बुदं चेति प्रयुतानां तत्र निर्देशात् ३४ ॥
धन्यं धनकरं आयुष्यं आयुःकरं कामानां समाप्तिशेषः ३५ मोहस्य समुद्भवो यस्मिन् प्रजाकामरूपो ज्वरस्तापः ३७ ॥

हृष्टो राजा कुमारस्य स्नातः शुचिरलंकृतः वाचयित्वाशिषो विप्रैः कारयामास जातकं ॥
३३ तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च ग्रामान्गजान्हयान्प्रादात्धेनूनामर्बुदा
निषट् ३४ ववर्ष कामानन्येषां पर्जन्य इव देहिनां धन्यं यशस्यमायुष्यं कुमारस्य महा
मनाः ३५ कृच्छ्रलब्धेथ राजर्षेस्तनयेनुदिनं पितुः यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहो ॥
न्ववर्द्धत ३६ मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः कृतद्युतेः सपत्नीनां प्रजाकामज्व
रोभवत् ३७ चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति न तथान्येषु संजज्ञे बालं लालयतो।
न्वहं ३८ ताः पर्यतपन्नात्मानं गर्हयन्त्योभ्यसूयया आनपत्येन दुःखेन राज्ञो नादरेण
न च ३९ धिगप्रजां स्त्रियं पापां पत्युश्चागृहसंमतां सुप्रजाभिः सपत्नीभिर्दासीमिव ति
रस्कृतां ४० दासीनां को नु संतापः स्वामिनः परिचर्यया अभीक्ष्णं लब्धमानानां दास्या
दासीव दुर्भगाः ४१ एवं संदह्यमानानां सपत्न्याः पुत्रसंपदा राज्ञोसंमतवृत्तीनां विद्वेषो
बलवानभूत् ४२ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः गरं ददुः कुमाराय दुर्मर्षा नृपतिं

दारे इत्येकवचनमार्षं आनपत्येन अपुत्रत्वनिमित्तेन ३९ अगृहे संमतां न बहुमतां यद्वा गृहे एव गृहं न भार्येति सं
मतामित्यर्थः ४० दास्या दासीव यथा तत् आवयं दुर्भगाः ४१ न संमता वृत्तिर्जीवनं यासां ४२ विद्वेषेण नष्टा मति

ननु जीवकर्मानुसारेण जन्मादि कुर्वतो मम कोऽपराध इति तत्राह न हीति पुत्रे जीवत्येव पिता म्रियते पितरि जीवत्येव पुत्रो जा
यत इति क्रमो नास्ति कर्माधीनत्वादिति चेत् तर्ह्यात्मकर्मभिरेव तज्जन्मादिकमस्तु किं त्वया कृत्यं न तु मयेश्वरेण विना ज
न्तुः कर्मभिरिदं कर्त्तुं सिद्धमिति भवतु नाम तथापि निजसर्गवृद्धये त्वया यः स्नेहपाशः कृतस्तमिमं स्वयमेव विवृश्चसि।

न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः यः स्नेहपाशो निजसर्गवृ
द्धये स्वयं कृतस्ते तमिमं विवृश्चसि ५५ त्वं तात नार्हसि च मां कृपणामनाथां त्यक्तुं विचक्ष्व पि
तरं तव शोकतप्तं अञ्जस्तरेम भवताप्रजदुस्तरं यद्ध्वान्तं न याह्यकरुणेन यमेन दूरं ५६ उ
त्तिष्ठ तात त इमे शिशवो वयस्यास्त्वामाह्वयन्ति नृपनन्दन संविहर्तुं सुप्तश्चिरं ह्यशनया च भवा
न्परीतो भुंक्ष्व स्तनं पिब शुचो हर नः स्वकानां ५७ नाहं तनूज ददृशे हतमंगला ते मुग्धस्मि
तं मुदितवीक्षणमाननाब्जं किं वा गतोऽस्यपुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि क
ला गिरस्ते ५८ श्रीशुक उवाच विलपंत्या मृतं पुत्रमिति चित्रविलापनैः चित्रकेतुर्भृशं तप्तो
मुक्तकंठो रुरोद ह ५९ तयोर्विलपतोः सर्वे दंपत्योस्तदनुव्रताः रुरुदुः स्म नरा नार्यः सर्वमा
सीदचेतनं ६० एवं कश्मलमापन्नं नष्टसंज्ञमनायकं ज्ञात्वाङ्गिरा नाम मुनिराजगाम स
नारदः ६१ इति श्रीभाग० षष्ठस्कंधे चतुर्दशोऽध्यायः १४ ॥

छिनत्सि इत्यादि क्रोशन्तीति न स्यैवंविधं
दुःखं हन्त्वा शोकश्चिरं पितृभ्रात्रादिषु स्नेहं करिष्यतीति भावः ५५ अप्रजदुस्तरं अप्रजानां दुस्तरं अकरुणेन सह ५६
अशनया क्षुधा ५७ तनूजहे पुत्र नाहं प्रपश्यामि त्वया स्वमागता सती तव मुग्धस्मितं वक्त्रं ददृशे न च वत्स्यसि इदानीम
पि गिरो न शृणोमि तर्हि किं अपुनरन्वयं पुनरागमनं यथा न भवति तथा गतोऽसि ५८।६१ इति षष्ठे चतुर्दशः १४

ततःपंचदशेऽस्मिंस्त्रिकेतोःशोकापनोऽस्नंकृतंतत्वोपदेशेननारदेनांगिरोपुत्रा १ मृतकोपांतेशवसमीपेत्वंचास्यवंध
नोकतमःसृष्टोपुत्रात्रपायांअपंपुत्रःअहंचास्यपितेतिचेतत्राहतुपुरेतिपंचवेजन्मनिपित्रादिरूपेणासंपुक्ताआसन्
नएवमरणेनततोविपुक्ताःसंतोवर्तमानजन्मनिकदाचित्तस्यैवान्यस्यवापुत्रादयोभवंतितेजन्मांतरेतस्यवान्यस्य
वाकलत्रादयःशत्रुमित्रादयोभवंतिअतोनायंनियमइतिभावः२ तमेवार्थप्रायंप्रकटयतःयथेतिस्रोतसःप्रवाह
स्यवेगेनयथाप्रयांतिविपुज्यंतेसंयांतिसंयुज्यंतेतथाकालवेगेनदेहिनोजीवाअपि३ तथाप्येतावंतकालममपुत्रो।

श्रीशुकउवाच ऊचतुर्मृतकोपांतेपतितंमृतकोपमं शोकाभिभूतंराजानंबोधयंतोस
दुक्तिभिः १ कोयंस्यात्तवराजेंद्रभवान्यमनुशोचति त्वंचास्यकतमःसृष्टौपुरेदानीम
तःपरं २ यथाप्रयांतिसंयांतिस्रोतोवेगेनवालुकाः संयुज्यंतेवियुज्यंतेतथाकालेनदेहि
नः ३ यथाधानासुवैधानाभवंतिनभवंतिच एवंभूतेषुभूतानिचोदितानीशमायया ४॥
वयंचत्वंचयेचेमेतुल्यकालाश्चराचराः जन्ममृत्योर्यथापश्चात्प्राङ्नैवमधुनापिभो ५।

नाभूतवाईकेजातोमृतइतिदुःखइतिचेत्तत्राहतुःयथाधानासुवीजेषुधानाःवीजांतराणिभवंतिकासुचित्कदा॥
चिन्नभवंतितेनास्यघ्नंतेनश्यंतिचनतुभवंत्येवतिष्ठंत्येवेतिवानियमःएवमेवभूतानिपुत्रादिरूपाणिभूतेषुपित्रादिषु
अतोधानानांजन्यजनकत्वेपियथापितृपुत्रादिभावोनास्तिएवमत्रापीतिनशोकःकार्यःइतिभावः४ईशमाययाप्रे
भवनाभवन स्य३ रितानामेवभवनमभवनंचनवस्तुतः४ तस्यचसर्वसाधारणत्वान्नपुत्रएवशोचनीयइत्याहतुर्वयंचेतितुल्यकाला
वर्तमानकालीनाजन्मनःप्राकमृत्योःपश्चाच्चयथानसंतिएवमधुनापिनसंतिभोराजन्आद्यंतयोरस
त्वात्त्वमवदित्यर्थः५॥ ॥ ॥ ॥

असत्वे कथं प्रतीतिः कथं वाहमस्य जनक इत्याद्यभिमानस्तत्राह भूतैरिति ईश्वरेण मायया सृष्टत्वात् प्रतीतिः निमित्तमात्रत्वेनैव भूतानामयमभिमान इति भावः ननु ईश्वरस्य सृष्ट्यादिभिः साध्यमस्ति चेत् अपूर्णकामता अथ नास्ति चेत् कुतः प्रवृत्तिस्तत्राह अनपेक्षोपि बालवत् लीलया करोतीति ६ अपि च जन्मादिव्यवहारो देहानामेव न त्वात्मन इत्याह देहिनः पितुर्देहेन पुत्रस्य देहो मातुर्देहादभिजायते यथा बीजादेव बीजं जायते देही तु शाश्वत एव अ

भूतैर्भूतानि भूतेशः सृजत्यवति हंत्यजः आत्मसृष्टैरस्वतंत्रै रनपेक्षोपि बालवत् ६ देहेन देहिनो राजन् देहाद्देहोभिजायते बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ७ देहदेहिविभागोयमविवेककृतः पुरा जातिव्यक्तिविभागोयं यथा वस्तुनि कल्पितः ८ श्रीशुक उवाच एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः प्रमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ९ राजोवाच कौ युवां ज्ञानसंपन्नौ महिष्ठौ च महीयसां अवधूतेन वेषेण गूढाविह समागतौ १० चरंति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिंगिनः ११ कुमारो नारद ऋभुरंगिरा देवलोसितः अपांतरतमो व्यासो मार्कंडेयोथ गौतमः १२ वसिष्ठो भगवान् रामः कपिलो बादरायणिः दुर्वासा याज्ञवल्क्यश्च जातुकर्णस्तथारुणिः १३ लोमशश्च्यवनो दत्त आसुरिः सपतंजलिः ऋषिर्वेदशिरा धौम्यो मुनिः पंचशिखस्तथा १४ हिरण्यनाभः कौशल्यः श्रुतदेव ऋतध्वजः एते परे च सिद्धेशाश्चरंति ज्ञानहेतवः १५ ॥

येभ्यस्यादिर्यथा तद्वत् ननु नश्वरदेहप्रतियोगित्वाद्देह्यपि न शाश्वतः स्यात्तत्राह देहदेहिनोरयं परस्परप्रतियोगिविभागः पुरा अनादिः अविवेककृतः अज्ञानकल्पितः जातिः सामान्यं व्यक्तिर्विशेषस्तयोर्विभागो यथा वस्तुनि सन्मात्रे कल्पितः परस्परापेक्षसिद्धित्वेनानिरूप्यत्वात्तद्वत् ८ आधिना म्लानं वक्त्रं ९।१० उन्मत्तस्येव लिंगं येषां ते ११।१४।१५

रामः

ममग्राम्यस्तत्कोवाधेसमर्थ्यविनिवा अतोयुवाभ्यां ज्ञानदीपः प्रवर्त्यतां १६। १७ महापुरुषगोचरं त्वां हरिभक्तं १८। १९ त
दैवयदा एवमागतोस्मि २०।२१ अर्था: २१ चला अनित्याः किंच महीति २२ हे शूरसेन इमे सर्वेपि शोकादिप्रदाः किंच आ
गमापायित्वेन गंधर्वनगरतुल्याः गंधर्वनगरं हि अकस्मादेव कदाचिद्दृश्यते चापयाति चेति प्रसिद्धं तद्वदेव मनिस्वत्व

तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू । अंधे तमसि मग्नस्य ज्ञानदीप उदीर्यतां १६ अंगि
रा उवाच अहं ते पुत्रकामस्य पुत्रदोस्म्यंगिरा नृप । एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः
१७ इदानीं पुत्रशोकेन मग्नं तमसि दुस्तरे । अतदर्हमनुस्मृत्य महापुरुषगोचरं १८ अनुग्रहा
य भवतः प्राप्तावावामिह प्रभो । ब्रह्मण्यो भगवद्भक्तो नावसादितुमर्हति १९ तदैव ते परं ज्ञानं
ददामि गृहमागतः । ज्ञात्वान्याभिनिवेशं ते पुत्रमेव ददाम्यहं २० अधुना पुत्रिणां तापो भवतैवा
नुभूयते । एवं दारा गृहा रायो विविधैश्वर्यसंपदः २१ शब्दादयश्च विषयाश्चला राज्यविभूत
यः । मही राज्यं बलं कोशो भृत्यामात्यसुहृज्जनाः २२ सर्वेपि शूरसेनेमे शोकमोहभयार्तिदाः ।
गंधर्वनगरप्रख्याः स्वप्नमायामनोरथाः २३ दृश्यमाना विनार्थेन न दृश्यंते मनोभवाः । क
र्मभिर्ध्यायतो नानाकर्माणि मनसोभवन् २४॥ शोकादिहेतुत्वं चागमापायित्वं चोक्तं मिथ्यात्वमप्याह स्व

स्वप्नश्च माया च मनोरथश्च तत्तुल्याः २३ मनोभवाः मनोमात्रविजृंभिताः अत्र हेतुः अर्थेन तात्विकस्वरूपेण विनैव
दृश्यमानाः ततः कुतः यस्मात्तत्क्षणांतरे न दृश्यंते तात्विकत्वे हि क्षणांतरे बाधो न स्यात् अतो मनोमात्रविजृंभितत्वेन स्व
प्नादिवन्मिथ्याभूता इत्यर्थः ननु देहपुत्राद्युत्पत्तिः कर्मकृतेति मीमांसकाः प्राहुस्तत्कुतो मनोभवत्वं तत्राह कर्मभिः कर्मवास
नाभिः अर्थान् ध्यायतः पुंसो मनस एव निमित्तात् कर्माण्यभवन् पाठांतरे कर्मइच्छितं तमभिध्यायत इत्यर्थः कर्मणो
पि मनोभवत्वात् तत्साध्या अर्था अपि मनोभवा एवेति भावः २४ कर्मभिर्ध्यायत इति पाठांतरं ॥

तदेवकलेवरंप्रविश्योत्थितोजीवउवाच यद्यप्यनन्तकालेऽनेनशरीरेणस्थित्वैवतिष्ठेयं ३ मयिमृतेतत्रहर्षशोकस्तत्
शत्रुहर्षश्चाहर्षः किंनक्रियतइत्याशयेनसंबंधस्यानियतत्वमाह बंधवोविवाहादिभिः संबंधिनः ज्ञातयः सपिंडाः अर
योघातकाः मित्राणिरक्षकाः मध्यमस्थाउभयव्यतिरिक्ताः साधारणाः विद्वेषादयश्चादिनिमित्तेनद्वेषिणः उदासीना
स्तद्व्यतिरिक्ताइतिभेदः ५ कर्मभिर्भ्राम्यमाणत्वेदृष्टांतः यथावस्तूनिपण्यानिक्रयविक्रयाभ्यांहेमादीनिकर्तृषुव्यवह
र्तृषुपरिभ्रमंतिएवंजीवोविविधयोनिषुजनकेषु ६ एकस्मिन्नपिजन्मनिसंबंधस्यानियतत्वंसदृष्टांतमाहद्वाभ्यांनित्य

नि२

जीवउवाच कस्मिन्जन्मन्यमीमह्यंपितरोमातरोऽभवन् कर्मभिर्भ्राम्यमाणस्यदेव
तिर्य ङ्नृयोनिषु ४ बंधुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः सर्वएवहिसर्वेषांभवंतिक्र=
मशोमिथः ५ यथावस्तूनिपण्यानिहेमादीनिततस्ततः पर्यटंतिनरेष्वेवंजीवोयोनिषु
कर्तृषु ६ नित्यस्यार्थस्यसंबंधोह्यनित्योदृश्यतेनृषु यावद्यस्यहिसंबंधोममत्वंताव
देवहि ७ एवंयोनिगतोजीवः सनित्योनिरहंकृतः यावद्यत्रोपलभ्येततावत्स्वत्वंहितस्य

स्यजीवतोऽपि अर्थस्यपश्वादेः अनित्य अनियतः विक्रियादिनासंबंधनिवृत्तेः ७ एवंयोनिगतः पित्रादिसंबं
धंप्राप्तोऽपिसजीवोनित्यः देहजन्मादिना तस्यजन्माद्यभावात् अतएववस्तुतोनिरहंकृतः अहमस्यपुत्रइत्यभिमा
नशून्यः पुत्रपित्रादेःसंबंधिनियावद्यत्र लभ्येतकर्मवशेनवर्तेततावदेवतस्यपित्रादेः तत्तस्मिन्स्वत्वंनतुवि
क्रियाद्युत्तरकालमपि अप्यवैवंसंबंधः यदुक्तंकलेवरंसमाविश्येति तत्रतस्मिन्कलेवरेममेदानींस्वत्वंनिवृ
त्तमितिसदृष्टांतमाह नित्यस्यचिरकालावस्थायिनः सुवर्णादेः योनिगतोदेहंप्रविष्टः यत्रदेहेयोजीवउपलभ्ये
ततस्यजीवस्यतत्तस्मिन्देहेस्वत्वंनतुमरणोत्तरकालमपीत्यर्थः श्लोकार्धसमाप्तं ८ राम: राम:

जीवस्य नित्यत्वं साधयति एष इति नित्यत्वे हेतुः अव्ययः अपचयशून्यः तत्र कुतः सूक्ष्मः जन्मादिशून्यः तच्च कुतः स
र्वाश्रयः जन्मादिमतो देहादेराश्रयः नतु देहादिरूपः यतः स्वदृक् स्वप्रकाशः सर्वाश्रयत्वमुपपादयति आत्ममा
यागुणैरात्मानमेव विश्वं विश्वात्मकं सृजति तदात्मानं स्वयमकुरुतेति श्रुतेः उपादानकारणत्वात्सर्वाश्रय इ
त्यर्थः जीवस्य वस्तुतो ब्रह्मत्वात् ब्रह्मण एव चिच्छक्तिविशिष्टस्येश्वरत्वेन स्रष्टृत्वाज्जीवः सृजतीति वाचो
युक्तिः यद्वा स्वकर्मद्वारा सृष्टिनिमित्तेन स्रष्टृत्वं भोग्यस्य च सर्वस्य भोक्त्राश्रयत्वात् सर्वाश्रयत्वं चोक्त

एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक् आत्ममायागुणैर्विश्वमात्मानं सृजते
प्रभुः ९ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा एकः सर्वधियां द्रष्टा कर्तॄणां
गुणदोषयोः १० नादत्त आत्मा हि गुणं न दोषं न क्रियाफलं उदासीनवदासीनः परा
वरदृगीश्वरः ११ श्रीशुक उवाच इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा विस्मिता मुमु
चुः शोकं छित्त्वात्मस्नेहशृंखलां १२ निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः त
त्यजुर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदं १३॥ मिति द्रष्टव्यं ९ यदुक्तं सुहृद्धत इति सुहृदो बांधवास्त्वा
त्वानिति च तत्राह नह्यस्येति तत्र हेतुः एकः सुहृदादिसंगरहितः गुणदोषयोर्हिताहितयोः कर्तॄणां मित्रादीनां याः
सर्वाधियः विचित्रा बुद्धयः तासां द्रष्टा साक्षी १० यच्चोक्तं भुंक्ष्व भोगानित्यादि तत्राप्याह नादत्त इति गुणं सुखं दोषं
दुःखं क्रियाफलं च राज्यादिकं उदासीनत्वे हेतुः परावरदृक् कारणस्य कार्यस्य च साक्षी न तु भोक्ता यतः ईश्वरः राम:
देहादिपारतंत्र्यशून्यः अत एवं मृतस्य मम च युष्माकं च संबंधाभावाच्छोकं मा कुरुतेति वाक्यार्थः ११।१२
१३॥ ॥ ॥ ॥

द्विजभाषितं अंगिरसा प्रोक्तं पुत्रादीनां दुःखहेतुत्वं स्मरंतः पुत्रकामनाभ्यस्यानिर्मत्सराः सत्य इति भावः १४ निविडपंकतुल्यं गृहं विहाय निःक्रमणमतिधीरस्य तस्यैव योग्यं नान्यस्येति सदृष्टांतमाह सरसः पंकात् द्विपो गज इवेति १५ कृता पुण्यजलक्रिया पितृतर्पणाद्या येन संयतप्राणो नियतेंद्रियः १६।१७ नमो धीमहि ध्यायेम मनसा॥

बालघ्नो व्रीडितास्तत्र बालहत्याहतप्रभाः बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितं यमुनायां महाराज स्मरंतो द्विजभाषितं स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः गृहांधकूपान्निःक्रांतः सरःपंकादिव द्विपः १५ कालिंद्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः मौनेन संयतप्राणो ब्रह्मपुत्राववंदत १६ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने भगवान्नारदः प्रीतो विद्यामेतामुवाच ह १७ नमस्तुभ्यं भगवते वासुदेवाय धीमहि प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च १८ नमो विज्ञानमात्राय परमानंदमूर्तये आत्मारामाय शांताय निवृत्तद्वैतदृष्टये १९ आत्मानंदानुभूत्यैव न्यस्तशक्त्यूर्मये नमः हृषीकेशाय महते नमस्ते विश्वमूर्तये २० वचस्युपरतेऽप्राप्य य एको मनसा सह अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः २१ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः २२॥

नमस्याम इत्यर्थः १८ निवृत्ता द्वैतदृष्टिर्यस्मात् १९ न्यस्ता निरस्ताः शक्त्यूर्मयः मायानिमित्ता रागद्वेषादयो येन २० मनसा सह वचसि अप्राप्य उपरते सति य एक एव प्रकाशते वचसीति सर्वेंद्रियोपलक्षणं सोऽस्मान्पातु सदसत्परः कार्यकारणयोः कारणं २१ तदेवाह यस्मिन्निदं कार्यं कारणं तिष्ठति अप्येति च यतश्च जायते मृन्मयेषु घटादिषु मृज्जातिर्मृन्मात्रमिव सर्वानुस्यूतं यत् तस्मै २२॥

॥२

नतु सर्वानुस्यूतं तं चेत् जानाति वक्ष्यतीयते कथं मनो वचसोरप्राप्तिस्तत्राह यद्वद्धन्व्योमवद्बहुतैतत्समपि असवः। प्राणाः क्रियाशक्त्यान स्पृशंति मन आदीनि च ज्ञानशक्त्या न विदुः तद्ब्रह्म नतोस्मि २३ तेषां तद्ज्ञाने हेतुमाह देहेन्द्रियादयो मीय दंशाविद्धाः यच्चैतन्यांशेनाविष्टाः संतः कर्मसु स्वस्वविषयेषु प्रचरंति जाग्रत्स्वप्नयोः अन्यदा सुषुप्ति मूर्छादौ नैव प्रचरंति यथा अप्रतप्तं लोहं न दहति अतो यथा लोहमग्निशक्त्यैव दाहकं सदग्निं विनान दहति एवं ब्रह्मसंगता ज्ञानक्रियाशक्त्या प्रवर्तमाना देहादयः तन्न स्पृशंति न विदुरित्यभिप्रायः जीवस्तर्हि द्रष्टृत्वाज्जानातु

यन्न स्पृशंति न विदुर्मनोबुद्धींद्रियासवः अंतर्बहिश्च विततं व्योमवत्तन्नतोस्म्यहं २३
देहेंद्रियप्राणमनोधियोमी यदंशविद्धाः प्रचरंति कर्मसु नैवान्यदा लोहमिवाप्रतप्तं स्था
नेषु तद्द्रष्टृपदेशमेति २४ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिप
तये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविंदयुग
लपरमपरमेष्ठिन्नमस्ते २५ शुक उवाच भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः
ययावंगिरसा साकं धाम स्वायंभुवं प्रभो २६॥ नेत्याह स्थानेषु जाग्रदादिषु द्रष्टृपदेशं द्रष्टृः संज्ञां तदे

देवैति प्राप्नोति नान्यो जीवो नाम अस्ति नान्योतोस्ति द्रष्टेत्यादि श्रुतेः यद्वा द्रष्टृपदेशं द्रष्टृसंज्ञं जीवमपि तदेव एति जानाति न तु जीवस्तत् जानातीत्यर्थः तदुक्तं हंसगुह्यस्तोत्रे देहोसवोक्षा इत्यादि २४ सकलाये सात्वतपरिवृढास्तेषां निकरः समूहस्तस्य करकमलानां कुड्मलैर्मुकुलैरुपलालितं चरणारविंदयुगलं यस्य तस्य संबोधनं परम उत्कृष्ट परमेष्ठिन् सर्वेश्वर २५ पूर्वसनारदोमिरा आजगामेत्यंगिराः प्राधान्येनोक्तः चित्रकेतोः पुत्रत्वेन तस्य यथायुक्तत्वात् इह तु नारदोगिरसा साकं ययाविति नारदस्य प्राधान्यनिर्देशः तदुपदेशेन तस्य वैराग्यात्स्यतः

यथा यथावद्धारयामास २७ विद्याधराधिपत्यं चावांतरफलं लेभे अप्रतिहतमस्खलितं २८ कतिपयैरहोभिः विद्य =
या इद्धेन दीप्तेन मनसा गतिर्यस्य २९ मृणालगौरं शितिवाससं नीलांबरं स्फुरंति किरीटादीनि यस्य कटित्रं कटि-
सूत्रं प्रसन्नानि वक्त्राणि यस्य अरुणानि लोचनानि यस्य तं वृतं च ३० इत्थंभूतमादिपुरुषं अभ्ययात् अरुणा =
गतः अनमन्ननाम कंपेन तस्य दर्शनेन ध्वस्तं समस्तं किल्बिषं यस्य स्वच्छममलं चांतःकरणं यस्य प्रणये.

चित्रकेतुस्तु विद्यां तां यथा नारदभाषितां धारयामास सप्ताहमब्भक्षः सुसमाहितः २७
ततस्स सप्तरात्रांते विद्यया धार्यमाणया विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप २८ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः जगाम देवदेवस्य शेषस्य चरणांतिकं २९ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकंकणं प्रसन्नवक्त्रारुणलोचनं वृतं ददर्श सिद्धेश्वरमंडलैः प्रभुं ३० तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छामलांतःकरणोऽभ्ययान्मुनिः प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमानमदादिपुरुषं ३१ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं समीडितुं चिरं ३२ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ नियम्य सर्वेंद्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहं ३३॥

नाश्रूणि लोचने यस्य प्रहृष्टानि रोमाणि यस्य
सः ३१ तं प्रसमीडितुं स्तोतुं चिरं नैवाशकत् न शशाक तत्र हेतुः उत्तमश्लोकस्य पदाब्जयोर्विष्टरमासनं उपमेहयन् अभि-
षिंचन् प्रेम्णा उपरुद्धः अखिलानां वर्णानां निर्गम उच्चारणं यस्य सः ३२ मनीषया बुद्ध्या मनः समाधाय एतद्बभाषे।
प्रतिलब्धा वाक् येन सात्वतशास्त्राणां विग्रहो यस्य तं ३३ अन्योन्यप्रेमजा नद्य निम्नतात स्वामिसेव

हे अजित अन्यैः अजितोपि भवान् साधुभिर्भक्तैर्जितः स्वाधीनः एव कृतः यतो भवानतिकरुणः ते पि च निःकामा अपि भवता विजिताः यो भवान् अकामात्मनामात्मानमेव ददाति ३४ ननु भक्तैरेव जित इति कथं स्पर्द्धमानैरपि स्रष्टादिकर्तृभिरस्मैरीश्वरैर्जयसंभवात्तत्राह तवेति जगदुदयादीनि तवैव विभवः विभवनं महिमा लीलेति यावत् आदिशब्देन प्रवेशनियमादीनि विश्वसृजस्तु ब्रह्मादयो नेश्वराः किंतु ते तवांशो यः पुरुषस्तस्यांशाः तत्र एवं स्थितेपि पृथक् पृथगीश्वरा वयमित्यभिमानेन मृषैव स्पर्द्धन्ते ३५ त्वमेव स्रष्ट्रादिकर्तृत्वेन तदुपपादयति परमाणुः

चित्रकेतुरुवाच अजित जितः सममतिभिः साधुभिर्भवान् जितात्मभिर्भवता विजितास्तेपि च भजतामकामात्मनां य आत्मदोतिकरुणः ३४ तव विभवः खलु भगवन् जगदुदयस्थितिलयादीनि विश्वसृजस्तेंशांशास्तत्र मृषा स्पर्द्धन्ति पृथगभिमत्या ३५ परमाणुपरममहतोस्त्वमाद्यंतांतरवर्ती त्रयविधुरः आदावंते च सत्वानां यत् ध्रुवं तदेवांतरालेपि ३६ क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैरांडकोशः यत्र पतत्यणुकल्पः सहांडकोटिभिस्तदनंतः ३७ ॥ ॥

सूक्ष्मं मूलकारणं परममहत् अंतिमकार्यं तयोस्त्वमेवाद्यंतांतःवर्ती आदावंते च अंतरे मध्ये च वर्तितुं शीलं यस्य सः अत एव त्रयविधुरः आद्यंतमध्यशून्यो ध्रुवः ते च त्रयाः स्वरूपेण न तु ध्रुवाः कुतः इत्याह सत्वानामिति सत्वेन प्रतीतानां कार्याणामादावंते च यत् ध्रुवं वर्तमानं अंतरालेपि तदेव ध्रुवं मृत्सुवर्णादिवत् ३६ एवं ध्रुवत्वेन कालतः परिच्छेदो नास्तीत्युक्तं देशतोप्यपरिच्छेदमाह क्षित्यादिभिरिति पूर्वस्मात्पूर्वस्माद्दशगुणामुत्तरैरधिकैरावृतो यत्र च त्वयि अण्डकल्पः अणुतुल्यः पतति परिभ्रमति तस्मादनंतस्त्वं ३७ ॥ ॥

यस्मादेवं परमेश्वरस्त्वमेवान्ये देवास्तु विभूतयः अतस्त्वां विहाय विषयकामनयान्योपासका अतिमन्दा इत्याह विषये
तृट् तृष्णा येषां ते नराकाराः पशवः कुतये विभूतीरिन्द्राद्या उपासते न तु परं त्वां ततः किं तत्राह तेषामिति तदुपास्य
नाशानन्तरं यथा राजकुलं अनु राजकुलनाशानन्तरं यथा तत्सेवकानां आशिषो नश्यन्ति तद्वत् अयं च परमो वि।
धिः मध्येऽपि नश्यन्त्येव ३८ विषयकामेनापि कृता त्वत्सेवा मोक्षफलैवेत्याह कामधिय इति विषयकामना अपि हे परम
त्वयि रचिताः कृताः ज्ञानात्मनि न रोहन्तीति देहान्तरोत्पत्तये न भवन्ति करम्भबीजानि भर्जितबीजानि यथा यतोऽस्य जीवस्य गुणग

विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वां तेषामाशिष ईश तदनु विनश्यन्ति —
यथा राजकुलं ३८ कामधियस्त्वयि रचिता न परम रोहन्ति यथा करम्भबीजानि ज्ञानात्म
न्यगुणमये गुणगणतोऽस्य द्वन्द्वजालानि ३९ जितमजित तदा भवता यदाह भागवतं धर्म
मनवद्यं निःकिंचना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ४० विषममतिर्न यत्र नृ
णां त्वमहमिति मम तवेति च यदन्यत्र विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः

हा१ णात् द्वन्द्वजालं सर्वं भवति अतः कामेनापि निर्गुणस्य तव भजनात् नैर्गुण्यं भवतीत्यर्थः ३९ फलकामनयापि त्व
दीयधर्मः परमो मोक्षहेतुः तदा किं वक्तव्यं भागवद्धर्ममाहात्म्यमिति वक्तुं तत्संप्रदायप्रवर्तकत्वेन भगवन्तं स्तौति जितमिति
यदा भवान् भागवतं धर्ममाह तदा हे भगवन् त्वया जितं सर्वो लोको वशीकृतस्तत्र हेतुः ये निःकिंचनाः सनत्कुमाराद्यो
मुनयस्तेऽपि भवन्तमपवर्गाय सेवन्ते तेन भवता जितं यं धर्ममिति वा ४० अनवद्यतामाह विषममतिर्यत्र यस्मिन् भा।
गवते धर्मे नास्ति यदन्यत्र यथा अन्यस्मिन् काम्यधर्मे न तु सोऽपि विवेकत्वात् अनवद्य एव तत्राह विषमधिया शत्रुमरणा
दिकामनया रचितो विहितः कृतो यः स ह्यविशुद्धः रागद्वेषादिमत्त्वात् क्षयिष्णुर्नश्वरफलत्वात् अधर्मबहु
लश्च हिंसादिबाहुल्यात् तदुक्तं शंकरस्वामिभिः उभयमिह चोदनायां लक्ष्यते अर्थोऽनर्थश्चेत्यादि ४१॥

एतत्प्रपंचयति कः क्षेमः किं कुशलेन किंचित् निजपरयोः स्वस्य परस्य च स्वपरद्रुहा स्वस्मै परस्मै च द्रुह्यतीति स्वप
रध्रुक् तेन यतः स्वद्रोहात् स्वस्थतत्कोपलेशात् तव कोपः पीडा संभवति तदुक्तं गीतासु कर्षयंतः शरीरस्थं भूतग्रा
ममचेतसः मां चैवांतः शरीरस्थं तान्विद्ध्यासुरनिश्चयानिति तथा परसंपीडया ऽधर्मः चशब्दात्तव कोपश्च अ
तस्त्वया रागिणां धर्मादिकं अचिद्रूपमार्गे प्रवर्तयितुं काम्यधर्मोऽभिहितो न तत्त्वदृष्ट्या ६२ भागवतधर्मेण तु न द्रो
ह इत्याह न व्यभिचरति न परमार्थं जहाति तव ईक्षा दृष्टिः अव्यभिचारे हेतुः स्थिरेति स्थावरजंगमप्राणिसमू

कः क्षेमो निजपरयोः कियान्वार्थः स्वपरद्रुहा धर्मेण स्वद्रोहात्तव कोपः परसंपीडया च
तथाधर्मः ६२ न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः स्थिरचरसत्व
कदंबेष्वपृथग्धियो यमुपासते त्वार्याः ६३ न हि भगवन्नघटितमिदं त्वद्दर्शना
न्नृणामखिलपापक्षयः यन्नामसकृच्छ्रवणात् पुक्कसकोऽपि विमुच्यते संसारसाग
रात् ६४ अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः सुरऋषिणा
यदुदितं तावकेन कथमन्यथा भवति ६५ विदितमनंत समस्तं तव जगदात्मनो जनैरि
हाचरितं विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः ६६॥ हेतुः समदृष्ट्यो भागवताः यं ध
र्मं सेवंते ६३ एवंभूतस्य भागवतधर्मप्रवर्तकस्य तव दर्शनात् सर्वपापक्षयो भवतीति किं चित्रमित्याह न हीति ६४।
अतो हे कृतार्थोऽस्मीत्याह अथेति अतो हेतोः तवावलोकनेन परिमृष्टा निरस्ता आशये चित्ते मला येषां ते त्वद्दर्शनं
च मम नारदोपदेशेन ज्ञातमित्याह सुरर्षिणेति ६५ यथा वाहं एवंमतिर्दृष्ट आसं यथा नारदेनानुगृहीतोऽस्मि त
त्सर्वांतर्यामिणः तव मया किं प्रकाशनीयमित्याह विदितमिति विशेषेण विज्ञाप्यं प्रकाशनीयं किं यदि व नकि

रामः

उक्तलक्षणं भगवंतं प्रणमति नम इति द्वाभ्यां सकलस्य जगतः स्थित्यादीनामीशाय समर्थाय दुरवसिता अविज्ञाता आ
त्मगतिर्निजतत्त्वं यस्य तस्मै केषां कुयोगिनां केन भिदा भेददृष्ट्या ४७ श्वसंति चेष्टंते चेकितानं पश्यंतमनु चित्तयः ज्ञा
नेंद्रियाणि उच्चकंति सारूढं पश्यंति ४८।४९ मेनुशासनं मदीयमुपदेशः तेन च तया च विद्यया अस्माच्च दर्शना
त् संसिद्धोसि ५० तद्बोधयन्नात्मीयं स्वरूपं स्वयमेवोपदिशति अहमित्यादिना सर्वभूतान्यहमेव भूतानामात्मा भोक्ताप्यहमे

नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय दुरवसितात्मगतये कुयोगिनां भि
दा परमहंसाय ४७ यं वै श्वसंतमनुविश्वसृजः श्वसंति यं चेकितानमनुचित्तय उच्चकंति
भूमंडलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेस्तु सहस्रमूर्ध्ने ४८ श्रीशुक उवाच
संस्तुतो भगवानेवमनंतस्तमभाषत विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ४९ श्रीभगवानु
वाच यन्नारदांगिरोभ्यां ते व्याहृतं मेनुशासनं संसिद्धोसि तया राजन् विद्यया दर्शनाच्च मे
५० अहं वै सर्वभूतानि भूतात्मा भूतभावनः शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू ५१
लोके विततमात्मानं लोकं चात्मनि संततं उभयं च मया व्याप्तं मयि चैवोभयं कृतं ५२ यथा सुषु
प्तः पुरुषो विश्वं पश्यति चात्मनि आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ५३ ॥ व भोक्तृभोग्यात्मकं

विश्वं मद्व्यतिरिक्तं नास्तीत्यर्थः अतोहं भूतभावनः भूतानां प्रकाशकः कारणं च ननु शब्दब्रह्म प्रकाशकं परं ब्रह्म कारणं
प्रकाशकं चेष्यते उभे ममैव रूपे इत्याह शब्दब्रह्मेति शाश्वती शाश्वत्यौ ५१ अतः स्वमेव पश्येत्याह लोके भोग्ये प्रपंचे भोक्तृत्वे
न विततमनुगतमात्मानं लोकं चात्मनि भोग्यत्वेन संततं व्याप्तं तदुभयं च मया कारणात्मना व्याप्तं मयि चैवोभयं कृतं कल्पितमस्म
देहितिस्त्रीयेनान्वयः पश्येदित्याध्याहारो वा ५२ ननु जाग्रदाद्यवस्थाभेदेन भोक्तृभोग्यात्मकं विश्वस्फुरं प्रतीयमानं कथमेकं।
त्मकं स्यादित्याशंक्य स्वप्नगतजाग्रदादिदृष्टांतेन संभावयन्नाह यथेति द्वाभ्यां यथा स्वप्ने सुप्तः पुरुषो विश्वं गिरिवनादिरूपं देशा
न्तरस्थमात्मन्येव पश्यति स्वप्नमध्ये सुषुप्तिं स्वं च पश्यतीत्यर्थः तथा स्वप्न एवोत्थितः सन् आत्मानमेकदेशस्थं शयनदेश

एवं प्र[illegible]पि जागरणादीनि जीवस्थानानि जीवोपाधेर्बुद्धेरवस्था आत्मनो मायामात्राणीत्येवं विज्ञाय तेषां द्रष्टारं
अत एव परं तदवस्थारहितमात्मानं स्मरेत् ५४ ननु तेषां द्रष्टारमिति कथमुच्यते स्वापे दृश्याभावेन द्रष्टृत्वाभावात्
अत आह येनेति प्रसुप्तः पुरुषो जीवः येन रूपेण तदा स्वापकाले आत्मनः स्वापं निर्गुणं अतीन्द्रियं सुखं च वेद तमात्मानं
ब्रह्म मामेवेहि स्वापसुखयोः साक्षात्संवेदने हेतुमाह तदेति तदा स्वापसुखयोरसंवेदने सुखमहमस्वाप्समिति स्मृतेरसं
भवात् ५५ ननु स्वापसाक्षिणा द्रष्ट्रा कथं जागरदवस्थः स्मरेत् न ह्यन्येन दृष्टमन्यः स्मरति तत्राह उभयं प्रस्वापप्रतिबो।

एवं जागरणादीनि जीवस्थानानि चात्मनः मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ५४
येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि मां ५५ उ।
भयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत्परं ५६ यदेत
द्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ततः संसार एतस्य देहाद्देहो मृते र्मृतिः ५७ लब्ध्वेह
मानुषीं योनिं ज्ञानविज्ञानसंभवां आत्मानं यो न बुद्ध्येत न क्वचित् क्षेममाप्नुयात् ५८
स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययं अभयं चाप्यनीहायां संकल्पाद्विरमेत्कविः ५९

नोभयं पाठांतरं २

धं च स्मरतोऽनुसंदधतः तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेन यदन्वेति ताभ्यां व्यतिरिच्येत च एकैकापायेप्यनपा
यात् तत् ज्ञानं परं ब्रह्म तदेव न तु भिन्नमित्यर्थः अतो बाल्ये दृष्टस्य यौवने स्मृतिवदवस्थांतरत्वेपि स्वापानंदयोः स्मरणं घ
टत इति भावः तदेवं स्वतत्त्वं ब्रह्मात्मानमवेहीत्यनुषंगः ५६ विप[illegible]दोषमाह यत् यदि एतन्मद्भावं मत्स्वरूपं ब्रह्म
येन पुंसा २ विस्मृतं तत् तदात्मनः सकाशात् भिन्नं भवति तत एतस्य पुंसः संसारो भवति संसारस्वरूपमाह देहाद्देहं जन्मांतरं [illegible]
रनंतरं पुनर्मृतिश्च ५७ योन्यंतरेपि भोगादिसंपादनं शक्यं ज्ञानार्थत्वं त्वत्रैव पतितस्यासिद्ध्याह लब्ध्वेति ज्ञानं शास्त्रोक्तं
विज्ञानमपरोक्षं तयोः संभवो यस्यां तां ५८ वैराग्यार्थमाह ईहायां प्रवृत्तिमार्गे ततः ईहातः अनीहायां निवृत्तिमार्गे तु
अभयं मोक्षो भवतीति च स्मृत्वा फलसंकल्पाद्विरमेत् पाठांतरे नोभयं परिक्लेशः फलविपर्ययश्च नास्तीत्येवं स्मृ

तस्य स्वरूपं ८

रामः

एतद्विवृणोति सुखायेति त्रिभिः दुःखस्यानिवृत्तिः सुखस्याप्राप्तिः ६० विज्ञाः पंडिता वयमित्यभिमानवतां स्थानत्रयविल-
क्षणां तुरीयां बुद्ध्वा ६१ दृष्टश्रुताभिर्मात्राभिरिहामुत्रिकैर्विषयैः स्वेन तेजसा विवेकबलेन ६२ न चातः परः पुरुषार्थोस्तीत्याह
एतावानिति योगे नैपुण्ये युक्ता बुद्धिर्येषां परस्यात्मनः एकत्वदर्शनमिति यत् एतावानेव ६३।६४ इति षष्ठे षोडशोऽध्यायः १६
ततः सप्तदशे मायामहाद्रिप्राप्त्या खेचरन् विहस्य गिरिशं शापात् उमाया आसुरतां गतः १ यतः यस्मात् तस्यै दिशे नमः नमनं कृ- ॥

सुखाय दुःखमोक्षाय कुर्वाते दंपती क्रियाः ततोऽनिवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ६० एवं विपर्ययं बुद्ध्वा नृणां विज्ञाभिमानिनां आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणां ६१ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ज्ञानविज्ञानसंतृप्तो मद्भक्तः पुरुषो भवेत् ६२ एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः स्वार्थः सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनं ६३ त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि ६४ शुक उवाच आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ६५ इति श्रीभागवते महापुराणे षष्ठे षोडशोऽध्यायः १६ श्रीशुक उवाच यतश्चान्तर्हितोऽनन्तस्तस्यै कृत्वा दिशे नमः विद्याधरश्चित्रकेतुश्चचार गगनेचरः १ स लक्षं वर्षलक्षाणामव्याहतबलेन्द्रियः स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः २ कुलाचलेन्द्रद्रोणीषु नानासंकल्पसिद्धिषु रेमे विद्याधरस्त्रीभिर्गापयन् हरिमीश्वरं ३ एकदा स विमानेन विष्णुदत्तेन भास्वता गिरिशं ददृशे गच्छन् परीतं सिद्धचारणैः ४ ॥ ॥

स ४

त्वा १ स विद्याधरस्त्रीभिः हरिं गापयन् रेमे इति द्वयोरन्वयः अव्याहतं बलमिन्द्रियपाटवं च यस्य नाना विधाः संकल्पैः सि-
द्धयो यासु तासु ३ अकस्माद्दृष्टे स्वधर्म्ये गर्वात् प्राचीनकर्मतः आसुरीं योनिमापन्नो भवानीशापतः स तु तदाह एकेति ४

अंकीकृतांउत्संगेनैवांकीकृतांदेवींबाहुनाआलिंग्यस्थितंउवाचजहासचतस्यांतिकेस्थितःसन् ५ धर्मंवक्तावदति
शरीरिणांमध्येमुख्यश्चभार्ययामिथुनीभूयचास्ते ६।७ अगाधागंभीराधीर्यस्यसः ९ नतस्यवीर्यप्रभावंविद्वान्।
अतद्वीर्यविद्वान्तस्मिन् निर्जितात्माभिमानिनेजितेंद्रियोहमित्यभिमानवते अतिरुषाक्रोधेनाह १० विप्रकृत्अपकर्ष
णकरोतीतिविप्रकृत् ११ अतिवर्तिनंशास्त्रमतिक्रम्यवर्तनशीलंयेनोनिषेधंतिनवारयंति १२ एषांब्रह्मादीनामनुध्ये

आलिंग्यांकीकृतांदेवींबाहुनामुनिसंसदि उवाचदेव्याःशृण्वंत्याजहासोच्चैस्तदंतिके ५
चित्रकेतुरुवाच एषलोकगुरुःसाक्षाद्धर्मंवक्ताशरीरिणां आस्तेमुख्यःसभायांवैमिथुनीभू
यभार्यया ६ जटाधरस्तीव्रतपाब्रह्मवादिसभापतिः अंकीकृत्यस्त्रियंचास्तेगतह्रीःप्राकृतो
यथा प्रायशःप्राकृताश्चापिस्त्रियंरहसिबिभ्रति अयंमहाव्रतधरोबिभर्तिसदसिस्त्रियं ८
शुकउवाच भगवानपितच्छ्रुत्वाप्रहस्यागाधधीर्नृप तूष्णींबभूवसदसिसभ्याश्चतद
नुव्रताः ९ इत्यतद्वीर्यविदुषिब्रुवाणेबह्वशोभनं रुषाहदेवीधृष्टायनिर्जितात्माभिमानिने
१० पार्वत्युवाच अयंकिमधुनालोकेशास्तादंडधरःप्रभुः अस्मद्विधानांदुष्टानांनिर्लज्जा
नांचविप्रकृत् ११ नवेदधर्मंकिलपद्मयोनिर्नब्रह्मपुत्राभृगुनारदाद्याः नवैकुमारःकपि
लोमनुश्चयेनोनिषेधंत्यतिवर्तिनंहरं १२ एषामनुध्येयपदाब्जयुग्मंजगद्गुरुंमंगलमं
गलंस्वयं यःक्षत्रबंधुःपरिभूयसूरीन्प्रशास्तिधृष्टस्तदयंहिदंड्यः १३ ॥

यंपदाब्जयुग्मंयस्यतंमंगलमंगलंपरमधर्मम् निःसूरीन्परिभूयअज्ञान्कृत्वाजगद्गुरुंयःप्रशास्तितत्तस्माद्दंड्यः

ननु हरिभक्तोयं न दंडार्ह इति चेत्तत्राह नायमिति साधुभिः परिसेवितं वैकुंठस्य पादमूलोपसर्पणमर्हति यतः संभाविता अहमधि क इति कृता मतिर्येन अत एव स्तब्धोऽनम्रः १४ ननु देवं स्वपदं स्वयं निर्भर्त्स्यत इत्यत आह अत इति हेतुत्रये पापाभूयो महतां किल्बिषमपराधं न कर्त्ता न करिष्यसि तथा याहीत्यर्थः १५ । १६ पूर्वदिष्टं प्राचीनकर्मप्राप्तमेव १७ अयं च संसारचक्रस्वभाव एव न चित्रमित्याह संसारचक्र इति १८ अत एवात्र मम च तव च न कोपि दोष इत्याह नैवेति १९ एवं तावत्सुखदुःखादिकं भोगी

नायमर्हति वैकुंठपादमूलोपसर्पणं संभावितमतिः स्तब्धः साधुभिः पर्युपासितं १४ अतः पा पीयसीं योनिमासुरीं याहि दुर्मते यथेहं भूयो महतां न कर्ता पुत्र किल्बिषं १५ शुक उवाच एवं शप्त श्चित्रकेतुर्विमानादवरुह्य सः प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत १६ चित्रकेतुरुवाच प्र तिगृह्णामि ते शापमात्मनोंजलिनांबिके देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् १७ संसारचक्र एतस्मिन् जंतुरज्ञानमोहितः भ्राम्यन् सुखं च दुःखं च भुंक्ते सर्वत्र सर्वदा १८ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा २० एकः सृजति भू तानि भगवानात्ममायया एषां बंधं च मोक्षं च सुखं दुःखं च निःकलः २१ न तस्य कश्चिद्दयि तः प्रतीपो न ज्ञातिर्बंधुर्न परो न च स्वः समस्य सर्वत्र निरंजनस्य सुखे न रागः कुत एव रोषः २२

कृतोक्तं इदानीं तदपि वस्तुतो नास्तीत्याह गुणानां मायामयानां प्रवाहे संसारे २० ननु मायागुणानां चेदयं प्रवाहस्तर्हि तेषां ज डत्वात् बंधमोक्षाद्यनुभवो न स्यात्तत्राह एकः परमेश्वरो मायया निमित्तभूतया भूतानि प्राणिनः सृजति एषां बंधादिकं च सृज ति निःकलः स्वयं बंधादिशून्यः २१ नन्वेवंभूत विषयस्य ईश्वरस्य किं कारणोऽप्रियादि वैषम्याभावादित्याशंक्य यद्यप्यप्रियाद। यो न संति तथापि तत्तत्कर्मवशात् सर्वं घटत इत्याह न तस्येति दयितः प्रतीपः अप्रियः न ज्ञातिर्बंधुर्मित्रमित्यर्थः तत्र हेतुः सर्वत्र समस्य तत्कुतः निरंजनस्य निःसंगस्य अत एव तन्निमित्तं सुखे रागो नास्ति रागानुबंधो रोषः कुतः स्यात् २२॥

कर्तारं मन्यतेऽत्राज्ञ आत्मानं परमेव च १९ गुणप्रवाह एतस्मिन् कः शापः को न्वनुग्रहः ॥३

यद्यप्येवं तथापि तस्य शक्त्या मायया यो विसर्गः पुण्यपापादिलक्षणं कर्म एषां शरीरिणां सुखाद्यर्थमेव कल्पते समर्थो भवति
यथोक्तं गीतासु भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित इति २३ अथ तस्मात् हे भामिनि कोपेन त्वां केवलं प्रसादयामि न तु शापमो
क्षाय तर्हि किं प्रसादनेनात आह ममोक्तं साध्वपि असाधु यन्मन्यसे तत्त्वया क्षम्यतां २४ गिरिशौ भवानीशंकरौ प्रसाद्य स्मा

तथापि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय बंधाय मोक्षाय च मृत्युजन्मनोः श
रीरिणां संसृतये च कल्पते २३ अथ प्रसादये न त्वां शापमोक्षाय भामिनि यन्मन्यसे ह्यसाधूक्तं
मम तत्क्षम्यतां सति २४ शुक उवाच इति प्रसाद्य गिरिशौ चित्रकेतुररिंदम जगाम स्वविमानेन
पश्यतोः स्मयतोस्तयोः २५ ततस्तु भगवान् रुद्रो रुद्राणीमिदमब्रवीत् देवर्षिदैत्यसिद्धानां पार्ष
दानां च शृण्वतां २६ रुद्र उवाच दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः माहात्म्यं भृत्यभृत्यानां
निस्पृहाणां महात्मनां २७ नारायणपराः सर्वे न कुतश्चन बिभ्यति स्वर्गापवर्गनरकेष्वपि
तुल्यार्थदर्शिनः २८ देहिनां देहसंयोगात् द्वंद्वानीश्वरलीलया सुखं दुःखं मृतिर्जन्म शापोनु
ग्रह एव च २९ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि गुणदोषविकल्पश्च भिदेव स्रजिवत् कृतः ३०
वासुदेवे भगवति भक्तिमुद्वहतां नृणां ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ३१ ॥ यतोर्विस्मयं कु

र्वतोः स्मतोः २५। २७ स्वर्गादावपि तुल्योर्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते तथा २८ तत्र तदुक्तमेव हेतुद्वयमाह द्वाभ्यां देहिनामसु
खं दुःखमित्यादि द्वंद्वमीश्वरस्य लीलया मायया भवति २९ तेषु च गुणदोषविकल्पः भेदभ्रमः इत्यादिना भेदद्वयः स्फुरति
स आत्मन्यर्थभेदः पुंसः स्वप्ने यथा अविवेककृतो भवति स्रजिवत् सर्पमालादिभिदा यथा तथैव कृतः कल्पितः स्रग्वदिति वत् स्र
जिवदित्यार्षपाठांतरे तु सुगमं ३० अतो भागवतानां निस्पृहत्वमुचितमेवेत्याह वासुदेव इति ज्ञानवैराग्ययोर्वीर्यं बलं येषां ते

स्रजिवत्कृतोपा
ठांतरं २

रामः

अस्य च हरिदासत्वेन तत्स्वभावत्वान्नैतच्चित्रमिति वक्तुं हरेर्माहात्म्यमाह नाहमिति द्वाभ्यां ईहितमभिप्रायं लीलां वा यदा।
वयं न विद्मः तदा तस्य स्वरूपमंशांशकाः अपि सन्तः पृथगीशमानिनो न विदुरेव ३२ सर्वभूतात्मत्वादेव अतः एव हरिरेव
सर्वेषां भूतानां प्रियः ३३ अहं चैवाच्युतस्य प्रियः तस्मान्मम अस्मिन् क्रोधो नास्ति इति भावः ३४।३५।३६ प्रतिशापं दातुमलं

नाहं विरिंचो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः विदाम यस्येहितमंशकांशका न तत्स्व
रूपं पृथगीशमानिनः ३२ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोपि वा आत्मत्वात्सर्वभूता
नां सर्वभूतप्रियो हरिः ३३ तस्य चायं महाभागश्चित्रकेतुः प्रियोनुगः सर्वत्र समदृक् शान्तो ह्यहं चै
वाच्युतप्रियः ३४ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु महापुरुषभक्तेषु शान्तेषु समदर्शिषु ३५
शुक उवाच इति श्रुत्वा भगवतः शिवस्योमाभिभाषितं बभूव शांतधी राजन् देवी विगतविस्म
या ३६ इति भागवतो देव्याः प्रतिशप्तुमलंतमः मूर्ध्ना स जगृहे शापमेतावत्साधुलक्षणं यज्ञे त्व
ष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ३८ एतत्ते सर्वमा
ख्यातं यन्मां त्वं परिपृच्छसि वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः इतिहासमिमं पुण्यं चित्रकेतो
र्महात्मनः माहात्म्यं विष्णुभक्तानां श्रुत्वा बंधाद्विमुच्यते य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठे
त् इतिहासं हरिं स्मृत्वा स याति परमां गतिं ४१ इति श्रीभागवते म० षष्ठ० सप्तदशोध्यायः १७

तमः समर्थतमोपि ३७।३८ असुरजातेः असुरस्वभावेनोत्पत्तेः भगवति मतेश्च ३९।४०।एतत्त एतं ४१ इति षष्ठे सप्तदशः॥१७
आदित्यानां चतुर्थ्यास्तु त्वष्टुर्वंशप्रसंगतः प्रोक्तमिन्द्रकृतं विश्वरूपवृत्रवधादि १ अदितेः पञ्चमादीनां पुत्राणामन्वयोक्ति
भिः अष्टादशे दितेर्गर्भे शक्रेणामरतां भिदा २ त्वष्टुर्वंशमनुक्रम्य सप्रसंगं यथाक्रमं आदित्यानामथोन्येषां वंशा
नाह मुनीश्वरः ३॥ रामः रामः रामः रामः

श्री० भा०
ष० टी०
५२



दत्तकन्यान्वयानुकथने अदित्या द्वादश पुत्राः प्रोक्ताः विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः धाता विधाता वरुणो मित्रः शक्र उरुक्रम इति तत्राद्यानां धातृमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैः त्वष्टृवंशमनुवर्ण्य इदानीं सवितुर्वंशमाह पृ-श्निस्त्विति सावित्रीमित्यादि त्रय प्रासूतेत्युत्तरस्यानुषंगः पशुं पशुयागं महामखान् पंचयज्ञान् ।१२ धातुर्भार्याः कुहूः सा।

श्रीशुक उवाच पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीं अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् १ सिद्धिर्भगस्य भार्यांग महिमानं विभुं प्रभुं आशिषं च वरारोहां कन्यां प्रासूत सुव्रतां २ धातुः कुहूः सिनीवाली राका चानुमतिस्तथा सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् अग्नीन्पुरीष्यानाधत्त क्रियायां समनंतरः ३ चर्षणी वरुणस्यासीत् यस्यां जातो भृगुः पुनः वाल्मीकिश्च महायोगी वल्मीकादभवत् किल ४ अगस्त्यश्च वसिष्ठश्च मित्रावरुणयोर्ऋषी रेतः सिषिचतुः कुंभे उर्वश्याः संनिधौ द्रुतं ५ रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ६ पौलोम्यामिंद्र आधत्त त्रीन्पुत्रानिति नः श्रुतं जयंतमृषभं तात तृतीयं मीढुषं प्रभुः ७ उरुक्रमस्य देवस्य मायावामनरूपिणः कीर्तौ पत्न्यां बृहच्छ्लोकः तस्यासन्सौभगादयः ८ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ९ अथ कश्यपदायादान् दैतेयान्कीर्तयामि ते यत्र भागवतः श्रीमान् प्रह्लादो बलिरेव च १०॥

पंच पुत्रान् प्रासूत एवं सिनीवाली दर्शमित्यनुक्रमात् समनंतरो विधाता क्रियायां स्वभार्यायां पुरीष्यान् अग्नीन् पंच चितान् पुरीष्यासो अग्नय इति पंच वा एते अग्नयो पाञ्चित यदिति श्रुतेः ३ चर्षणी वरुणस्य भार्यासीत् पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः वाल्मीकिर्वरुणस्यैव पुत्रोऽभवत् एतौ वरुणस्यासाधारणौ पुत्रौ ४ तयोत्सर्गादयो मित्रस्यासाधारणाः तयोरेव साधारणौ द्वौ पुत्रौ चाह अगस्त्यश्च वसिष्ठश्च ऋषी।। मित्रावरुणयोरभवतां यत उभावपि कुंभे रेतः सिषिचतुः अत्रैहे जाता विषिता मनोभिः कुंभे रेतः सिषिचतुः समानमिति श्रुतेः। द्रुतं स्कन्नं ५।६।७। ८ पश्चात् अष्टमस्कंधे ९ अथेति कश्यपस्यादितेः पुत्राणां द्वादशादित्यानां संततिमुक्त्वा दितेः पुत्रान्

दि२

राम:
५२

हिरण्यकशिपुर्हिरण्याक्षश्चेति प्रथमं द्वावेव तौ च कीर्तितौ। तौ यस्कंधे ११।१२।१३ विप्रचित्तो दानवात् भर्तुः सकाशात् रा।
हुं पुत्रमग्रहीत् १३ ततः संह्रादात् कृत १४ यो मेषरूपं वातापिं वेचेतमिल्वलं पं पचे तं वातापिं चागस्त्येत्यन्वयः १५।
१६ ततो बलेः सकाशात् अभवत् तस्य बलेरनुभावः अनुभवनं सुश्लोक्यः गुणकीर्त्यर्हः यद्वा अनुभाव्यते सद्भिः स्तूय।

दितेर्द्वावेव दायादौ दैत्यदानववंदितौ हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ११
हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी जंभस्य तनया सा तु सुषुवे चतुरः सुतान् १२ सं
ह्रादं प्रागनुह्रादं ह्रादं प्रह्रादमेव च तत्स्वसा सिंहिका नाम राहुं विप्रचितोऽग्रहीत् १३ शिरो
हरद्यस्य हरिश्चक्रेण पिवतोऽमृतं संह्रादस्य कृतिर्भार्यासूत पंचजनं ततः १४ ह्रादस्य ध
मनीर्भार्यासूत वातापिमिल्वलं योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलः अनुह्रादस्य सू
र्म्यां बाष्कलो महिषस्तथा विरोचनस्तु प्राह्रादिर्देव्यां तस्याभवद्बलिः १६ बाणज्येष्ठं पुत्र
शतमशनायां ततोऽभवत् तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते १७ बाण आराध्य
गिरिशं लेभे तद्गणमुख्यतां यत्पार्श्वे भगवानास्ते त्वद्यापि पुरपालकः १८ मरुतश्च दितेः पु
त्राश्चत्वारिंशन्नवाधिकाः त आसन्नप्रजाः सर्वे नीता इंद्रेण सात्मतां १९ राजोवाच कथं
त आसुरं भावमपोह्यौत्पत्तिकं गुरो इंद्रेण प्रापिताः सात्म्यं किं तत्साधु कृतं हि तैः इमे श्रद्दधते ब्र
ह्मन्नृषयो हि मया सह परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि २०॥ तस्यानुभावः सुश्लोक्यं

यशोऽतिशयः १७ तस्य गणेषु मुख्यतां प्राधान्यं १८ सात्मतां समानरूपतां देवत्वं प्रापिताः १९।२०।२१।

धु२

आदृतं सादरं अल्पं मिताक्षरं अर्थवत् बह्वर्थयुक्तं सत्रमयनमाश्रयो यस्य हे सत्रायण शौनक २२ पार्ष्णिग्राहेण पक्ष-
तः सहायेन २३ भ्रातृहन्तारं इन्द्रं मारयित्वा सुखिनी स्यामिति चिन्तयामास दितिः उल्बणं क्रूरं अक्लिन्नहृदयं कठिनचित्तं
२४ ननु राजा स्वदेहरक्षार्थमन्येषां घातं करोत्येवं किमत्र चित्रं न आह कृमीति ईशः प्रभुरित्यभिहितस्यापि यस्य पूर्वं
घोरात्तादेहस्य मरणानन्तरं छित्त्रिदिनावस्थितस्य कृमयः इत्यादिभिर्भक्षितस्य तु विडिति दग्धस्य भस्मेति संज्ञा आसीत्

सूत उवाच तद्विष्णुरातस्य स बादरायणिर्वचो निशम्यादृतमल्पमर्थवत् सभाजयन्तं
निभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः २२ श्रीशुक उवाच हतपुत्रा दितिः शक्रपा-
र्ष्णिग्राहेण विष्णुना मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत् २३ कदा नु भ्रातृहन्तारमिन्द्रि-
यारामम् उल्बणं अक्लिन्नहृदयं पापं घातयित्वा शये सुखं २४ कृमिविड्भस्मसंज्ञासीत् य-
स्येशाभिहितस्य च भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः आशासानस्य तस्येदं ध्रुव-
मुन्नद्धचेतसः मदशोषक इन्द्रस्य भूयाद्येन सुतो हि मे २६ इति भावेन सा भर्तुराचचारासकृ-
त्प्रियं शुश्रूषयानुरागेण प्रश्रयेण दमेन च २७ भक्त्या परमया राजन् मनोज्ञैर्वल्गुभाषितैः
मनो जग्राह भावज्ञा सुस्मितापाङ्गवीक्षणैः एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया बा-
ढमित्याह विवशो न तच्चित्रं हि योषिति २९ विलोक्यैकान्तभूतानि भूतान्यादौ प्रजापतिः
स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता ३०॥ तत्कृते तस्य देहस्यार्थे यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद
नैव वेद तत्राहेतुः यतो भूतद्रोहान्निरयो भवति २५ इदं देहादि किं ध्रुवं नित्यं आशासानस्य मन्यमानस्य उन्नद्धं
खलेष्वतो यस्य तस्येन्द्रस्य यो मदः तस्य शोषकः पुत्रः से येन हेतुना भूयात्तं भजेत २६ भर्तुः प्रियाचरणमेवेति भावेन सा भ-
र्तुः प्रियमसकृदाचचार २७।२८ विवशः स्त्रीपरतन्त्रः सन् बाढं तव मनोरथं पूरयिष्यामीति यदाह तन्न चित्रं २९ तत्र

एवंस्त्रियाशुश्रूषितःसन्कश्यपउवाच ३१ इहचकामात्परत्रच आगमः अप्राप्यः ३२ ननुपरमेश्वरेसुप्रीतेसर्व।
कामप्राप्तिरितिप्रसिद्धं तत्राह पतिरेवेति ननुमनसिस्थितः श्रीवासुदेवएवलक्ष्मीपतिःपरंदैवतमितिप्रसिद्धंस।
त्यंसएवस्वाधिकारेणनामरूपभेदैःपूज्यतइत्याहमानसइतिसार्धेनदेवतानांलिंगैःमूर्तिभिःरूपलक्षितःतान्येवाह

एवंशुश्रूषितस्तातभगवान्कश्यपःस्त्रिया प्रहस्यपरमप्रीतोदितिमाहाभिनंद्यच ३१
कश्यपउवाच वरंवरयवामोरुप्रीतस्तेहमनिंदिते स्त्रियाभर्तरिसुप्रीतेकःकामइहचागमः
पतिरेवहिनारीणांदैवतंपरमंस्मृतं मानसःसर्वभूतानांवासुदेवःश्रियःपतिः सएवदेवता
लिंगैर्नामरूपविकल्पितैः इज्यतेभगवान्पुंभिःस्त्रीभिश्चपतिरूपधृक् तस्मात्पतिव्रताना
र्यःश्रेयस्कामाःसुमध्यमे यजंतेनन्यभावेनपतिमात्मानमीश्वरं सोहंत्वयार्चितोभद्रेईदृ
ग्भावेनभक्तितः तत्तेसंपादयेकाममसतीनांसुदुर्लभं ३७ दितिरुवाच वरदोयदिमेब्रह्म
न्पुत्रमिंद्रहणंवृणे अमृत्युंमृतपुत्राहंयेनमेघातितौसुतौ ३८ श्रीशुकउवाच निश
म्यतद्वचोविप्रोविमनाःपर्यतप्यत अहोअधर्मःसुमहानद्यमेसमुपस्थितः ३९ अहोर्थेंद्रिया
रामोयोषिन्मय्येहमायया गृहीतचेताःकृपणःपतिष्येनरकेध्रुवं ४० कोतिक्रमोनुवर्तं
त्याःस्वभावमिहयोषितः धिङ्मांबताबुधंस्वार्थेयदहंत्वजितेंद्रियः ४१ शरत्पद्मोत्सवंव
क्त्रंवचश्चश्रवणामृतं हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितं ४२ ॥ नामरिंद्रादिरूपैर्वज्रहस्त।

त्वादिताभ्यांविविधंकल्पितैः ३६।३७ इंद्रहणंइंद्रहंतारं अमर्त्यंमृत्युशून्यंयेनइंद्रेणविष्णुनासहायेनघातितौ
३८।३९।४० स्वभावमनुवर्तमानायायोषितःकोतिक्रमोपराधः ४१ स्वभावमेवाहद्वाभ्यांशरत्पद्मस्योत्सवइवोत्सवोवि।
काशोयस्मिन्श्रवणामृतंश्रवणयोरमृतंअमृततुल्यंक्षुरधारायमंचितं ४२ ॥ राम: ॥

शयने निषिद्धानाह नाधौतपादेति नापराक् पश्चिमशिराः ५२ कार्पासाद्यपहृतवासाः तिष्ठाभ्यां प्रातराशात् प्रथमभो
जनात् पूर्वम् ५३ वीरवती जीवद्भर्तृकाः अर्च्य संपूज्य कोष्ठगतं कुक्षिगतं ५४ पुंसवनं पुत्रोत्पत्तिकरं तु स्मृतव ५५।
५६।५७।५८ हरिरिंद्रो व्रतस्य छिद्रं प्रेप्सुः प्राप्तुमिच्छुः जिह्मः कुटिलः साधुवेषः मृगहा लुब्धकोपमा मृगवेचनायम्।

नाधौतपादाप्रयता नार्द्रपान्नोर्ध्वकशिराः शयीत नापराङ्नान्यैर्न नग्ना न च संध्ययोः ५२
धौतवासाः शुचिर्नित्यं सर्वमंगलसंयुता पूजयेत्प्रातराशात्प्राक् गोविप्रान्श्रियमच्युतं स्त्रि
यो वीरवती स्रग्भिर्गंधबलिमंडनैः पतिं चार्च्योपतिष्ठेत ध्यायेत कोष्ठगतं च तं ५४ सं
वत्सरं पुंसवनं व्रतमेतदविप्लुतं धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ५५ बाढमित्यभि
प्रेत्याथ दिती राजन्महामनाः काश्यपं गर्भमाधत्त व्रतं चांजो दधार सा ५६ मातृष्वसुर
भिप्रायमिंद्र आज्ञाय मानद शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः ५७ नित्यं वनात्सु
मनसः फलमूलसमित्कुशान् पत्रांकुरमृदोऽपश्च काले काले उपाहरत् ५८ एवं तस्या
व्रतस्थाया व्रतच्छिद्रं हरिर्नृप प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ५९ नाध्यगच्छ
द्व्रतच्छिद्रं तत्परोऽथ महीपते चिंतां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह ६० एकदा सा तु संध्या
यामुच्छिष्टा व्रतकर्शिता अस्पृष्टवार्यधौतांघ्रिः सुष्वाप विधिमोहिता ६१ लब्ध्वा तदंतरं
शक्रो निद्रापहृतचेतसः दितेः प्रविष्ट उदरं योगेशो योगमायया ६२ चकर्त सप्तधा गर्भं व
ज्रेण कनकप्रभं रुदंतं सप्तधैकैकं मा रोदीरिति तान्पुनः ६३॥

गवेषो भवति तद्वत् ५९ केन मे शिवं स्या
दिति चिंतां प्राप्तः ६० अस्पृष्टवारि आचामरहितः धौतपादौ अंघ्री यस्याः ६१ निद्रयापहृतं चेतो यस्याः ६२ मारोदीरित्युपलालय

श्री० भा०
ष० टी०
५५

कौशिक इंद्रः गणान्सप्तगणान्वैमरुतः इतिश्रुतेः सजूः सह ६९। ७० दित्यानिः कपटमुक्ते सति इंद्रोपिनिः कपटमाहेत्याह

ते तमूचुः पाट्यमानाः सर्वे प्रांजलयो नृप नो जिघांससि किं इंद्र भ्रातरो मरुतस्तव ६४ मा भै
ष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ६५
न ममार दितेर्गर्भः श्रीनिवासानुकंपया बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ६६
सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यतां संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ६७ सजू
रिंद्रेण पंचाशद्देवास्ते मरुतोभवन् व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ६८ दितिरु
त्थाय ददृशे कुमाराननलप्रभान् इंद्रेण सहितान्देवी पर्यतुष्यदनिंदिता ६९ अथेंद्रमा
ह ताताहमादित्यानां भयावहं अपत्यमिच्छंत्यचरं व्रतमेतत्सुदुष्करं ७० एकः संकल्पितः
पुत्रः सप्त सप्ताभवन्कथं यदि ते विदितं पुत्र सत्यं कथय मा मृषा ७१ इंद्र उवाच अंब तेहं व्य
वसितमुपधार्यागतोंतिकं लब्धांतरोच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ७२ कृत्तो मे सप्तधा
गर्भ आसन्सप्त कुमारकाः तेपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ७३ ततस्तत्परमा
श्चर्यं वीक्ष्याध्यवसितं मया महापुरुषपूजायाः सिद्धिः काप्यनुषंगिणी ७४ आराधनं
भगवत ईहमाना निराशिषः ये तु नेच्छंत्यपि परं ते स्वार्थकुशलाः स्मृताः ७५ आराध्या
त्मप्रदं देवं स्वात्मानं जगदीश्वरं को वृणीते गुणस्पर्शं बुधः स्यान्नरकेपि यत् ७६ तदि
दं मम दौर्जन्यं बालिशस्य महीयसि क्षंतुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ७७

वेति लब्धमंतरं येन अर्थ एव बुद्धिर्यस्य ७२। ७३। ७४ अपि परं मोक्षमपि ७५ गुणस्पर्शं विषयभोगं बुधः को वृणीते य

त् नरकेपि प्राप्यते ७६ [illegible] ॥ ७७ ॥

राम

५५

७७ इति षष्ठे टीकायामष्टादशोऽध्यायः १८ उक्तं विशेषं च पयस्तोकं कश्यपेन दितेर्व्रतं तद्देवविद्वत्तं लोके हितायाह रितोषणं १ तस्य प्रकारमिति शेषः १ मार्गशिरमासे शुक्लपक्षे आदितः प्रतिपदि २ अनुमंत्र्य प्रार्थ्य शुक्लदती धौतदंता शुक्ले क्लिन्नतामसी प्रातराशात् भोजनात् प्राक् पूजयेत् ३ आदौ तावन्नमस्कारमंत्रानाह त्रिभिः ते तुभ्यं अलं पर्याप्तमेव सर्वेन किंचिदर्थ्यं कृत्यमस्ति अतः केवलं ते तुभ्यं नमोऽस्तु यद्यपि त्वं महोह नवः निरपेक्षोहं पूर्णकाममहाविभूतिपतये लक्ष्मीपतये सकलाः सिद्धयो योगिनो यस्मात्तस्मै ४ भोईशाय यथा यथावत् त्वं कृपयादिभिर्जुष्टः

श्रीशुक उवाच इंद्रस्तयाभ्यनुज्ञातः शुद्धभावेन तुष्टया मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि मंगलं मरुतां जन्म किं भूयः कथयामि ते ७८ इति श्री भा० म० ष० अष्टादशोऽध्यायः १८ राजोवाच व्रतं पुंसवनं ब्रह्मन् भवता यदुदीरितं तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति १ श्रीशुक उ० शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया आरभेत व्रतमिदं सर्वकामिकमादितः २ निशम्य मरुतां जन्म ब्राह्मणाननुमंत्र्य च स्नात्वा शुक्लदती शुक्ले वसीतालंकृतांबरे पूजयेत्प्रातराशात्प्राक् भगवंतं श्रिया सह ३ अलं ते निरपेक्षाय पूर्णकाम नमोस्तु ते महाविभूतिपतये नमः सकलसिद्धये ४ यथा त्वं कृपया भूत्या तेजसा महिमौजसा जुष्ट ईश गुणैः सर्वैस्ततोसि भगवान्प्रभुः ५ विष्णुपत्नि महामाये महापुरुषलक्षणे प्रीयेथा मे महाभागे लोकमातर्नमोस्तु ते ६ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुपहरामीति ७ अनेनाहरहर्मंत्रेण विष्णोरावाहनार्घपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगंधपुष्पधूपदीपोपहाराद्युपचारान् सुसमाहितउपाहरेत् हविःशेषं च जुहुयादनले द्वादशाहुतीः ८ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसंपदः प्रणमेद्दंडवद्भूमौ भक्तिप्रह्वेण चेतसा दशवारं जपेन्मंत्रं ततः स्तोत्रमुदीरयेत् १० ॥ ॥

तेर

५ अन्यैः कृपासत्यसंकल्पत्वादिभिः सर्वैर्गुणैर्युक्तस्तस्मात् ५ महापुरुषस्य परमेश्वरस्य लक्षणं निरपेक्षत्वादीनि यस्याः तस्याः संबोधनं ६ पूजामंत्रमाह ॐ नम इति ७ हविःशेषमुपहारावशिष्टं ८ होममंत्रस्योदाहरणं दर्शयति ॐ मिति प्रकर्षेण भवं सर्वसाम्यामिति प्रभवौ ९॥ रामाय नमः रामः रामः

९।१० आपस्तान्निवर्तकः पुरुषव्यापारो भावनाख्यः क्रिया लौकिकी ११।१२ प्रत्ययो नामरूपयोः प्रकाशः अपाश्रयः तयोराधारः १३।१४ महापुरुषचेतसा ईश्वरबुद्ध्या उपनमेत् भजेत् १५ पतिश्च स्वयं प्रेमशीलः सन् पत्न्याः कर्माणि बिभृयात् तदनुकूलो

युवां तु विश्वस्य विभू जगतः कारणं परं इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया १० तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ११ गुणव्यक्तिरियं देवी व्यंजको गुणभुग्भवान् त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेंद्रियाशया १२ नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ १३ तथा म उत्तमश्लोक संतु सत्या महाशिषः इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह तन्निःसार्योपहरणं दत्त्वाचमनमर्चयेत् १४ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिं १५ पतिं च परया भक्त्या महापुरुषचेतसा प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः १६ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च कृतमेकतरेणापि दंपत्योरुभयोरपि पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथंचन १८ विप्रान् स्त्रियो वीरवतीः स्रग्गंधबलिमंडनैः अर्चेदहरहर्भक्त्या देवं नियममास्थिता १९ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा २० एतेन पूजाविधिना मासान्। द्वादश हायनं नीत्वाथोपचरेत्साध्वी कार्तिके चरमेऽहनि २१ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् पयःशृतेन जुहुयात् चरुणा सह सर्पिषा २२॥

भवेदित्यर्थः पत्योर्दंपत्योर्मध्ये एकतरेणापि कृतं उभयोरपि भवेदिति १७ न विहन्यात् न विच्छिंद्यात् १८।२० द्वादश मासानित्युक्ते कदाचित्तन्मध्ये मलमासे सति तेन सह द्वादशसंख्यायाः सत्त्वात् ऊस्यैकस्य त्यागः स्यात् हायनमित्युक्ते तन्मध्ये पातितस्तस्यापि प्रसंगः स्यादुभयथा वारयितुमुभयमुक्तं उपचरेत् उपवसेत् २१ श्वोभूते प्रभाते सति पयसि शृतेन पक्केन २२ ॥ ॥

पाकयज्ञविधानेनपार्वणस्थालीपाकविधानेन २३ सुप्रजस्त्वंसत्पुत्रत्वमित्यर्थः वाग्यतसन्शेषंसुष्टु सौभगं यस्मात
त २४।२५ अवीराविधवाधनेश्वरीसत्यपियासुदुर्भगासासुभगाभवति २६ य आमयावीरोगीसविरुजाविशिष्टयारु

पाकयज्ञविधानेनद्वादशैवाहुतीःपतिः आशिषःशिरसादायद्विजैःप्रीतैःसमीरिताः २३
प्रणम्यशिरसाभक्त्याभुंजीततदनुज्ञया आचार्यमग्रतःकृत्वावाग्यतःसहबंधुभिः २४ द
द्यात्पत्न्यैचरोःशेषंसुप्रजस्त्वंसुसौभगं एतच्चरित्वाविधिवद्व्रतंविभोरभीप्सितार्थंलभतेपुमान्
इह स्त्रीत्वेतदास्थायलभेतसौभगंश्रियंप्रजांजीवपतिंयशोगृहं २५ कन्याचविंदेतसम
ग्रलक्षणंपतिंत्ववीराहतकिल्बिषांगतिं मृतप्रजाजीवसुताधनेश्वरीसुदुर्भगासुभगा
रूपमग्र्यं २६ विंदेद्विरूपाविरुजाविमुच्यतेय आमयावींद्रियकल्यदेहं एतत्पठन्नभ्यु
दयेचकर्मण्यनंततृप्तिःपितृदेवतानां २७ तुष्टाःप्रयच्छंतिसमस्तकामान्होमावसानेहुत
भुक्श्रीर्हरिश्च राजन्महन्मरुतांजन्मपुण्यंदितेर्व्रतंचाभिहितंमहत्ते यश्छ्रद्धयाशृणुयात्स
समस्तपापंविहायवैकुंठमुपैतिमर्त्यः २८ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेपुंस
वनकथनंनामैकोनविंशोध्यायः १९ ॥

जाविमुच्यतेइंद्रियैःसहितंकल्यंदेहंचविंदेदितिशेषः पठन्
योवर्त्ततेतस्यपितृणांदेवतानांतत्रतृप्तिर्भवतीत्यर्थः २७ उपसंहरतिराजन्नितिमहत्सुपुण्यंपज्जन्ममहद्व्रतंचषष्ठस्कंधे
गूढार्थपदभावार्थदीपिकासंज्ञिकासेव्यतामेषापतिश्रीधरनिर्मिता २८ इतिश्रीभागवतेषष्ठस्कंधेएको
नविंशोध्यायः १९ ॥ संवत् १९२५ ज्येष्ठकृष्णसप्तम्यां ७ शनिवासरे लिखितंमूलचंदेन रामः